Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

12

॥ श्रीः ॥

श्रीविश्वनाथ–पंचाननभट्टाचार्य–प्रणीता

# सिद्धान्तमुक्तावली ।

पण्डित छज्जुरामशास्त्रि–विद्यासागर–

प्रणीतया मूलचन्द्रिकाख्यविवृत्यानुगता ।

काशिस्थ न्यायोपाध्याय पं० ढुण्ढिराजशास्त्रिणा

निर्ध्याय संशोधिता ।

सा च

काश्यां

विवृतिकारेण–विद्याविलासनाम्नि–मुद्रणालये–

मुद्राप्य–प्रकाशिता ।

सम्वत् १९८१ सन् १९२५

मूल्यं १॥।) पादोनरुप्यकद्वयम् ।

प्रथमसंस्करणे सहस्रम् ।

पुनर्मुद्रणाद्यधिकारो विवृतिकर्तुरायत्तः ॥

R. SUBRAHMANYA VADHIAR,
BOOKSELLER & PUBLISHER,
KALPATHY-PALGHAT.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

१— प्राप्तिस्थानम्—

जयकृष्णदास-हरिदास गुप्त,

चौखम्बासंस्कृतसीरीजआफिस,

( चौखम्बा पुस्तकालय )

विद्याविलासप्रेस, गोपालमंदिर लेन,

बनारस सिटी ।

२—

मोतीलाल-बनारसीदास,

पंजाब संस्कृतपुस्तकालय,

लाहौर ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

# भूमिका ।



अयि महाभागाः !

न्यायो वैशेषिकं चेति द्वये दर्शने समाने स्तः । तत्र न्यायो गोतमेन वैशेषिकं च कणादेन निरमायि । प्रमाणैः प्रमेयपरीक्षणं न्यायः । विशेषं पदार्थभेदमधिकृत्य कृतो ग्रन्थो वैशेषिकम् । उभयोरपि दर्शनयोः पदार्थतत्त्वज्ञानान्निःश्रेयसपर्यन्तं परमात्मचिन्तोद्देश्यम् । इदमेव दर्शनद्वयमाश्रित्य गङ्गेशोपाध्यायेन नव्यपरिष्कारपरिष्कृतः तत्त्वचिन्तामणिग्रन्थः संजग्रन्थे । तस्यापि काठिन्यमालोक्य तद्गतामेव शैलीमवलम्ब्य विश्वनाथपञ्चाननेन पूर्वोक्तदर्शनद्वयसंक्षिप्तसारभूतार्थावबोधिका सिद्धान्तमुक्तावलीयमुल्लासिता । या सर्वत्रैव भूमण्डले कौमुदीव दिवानिशं पठ्यते पाठ्यते च । अस्य मुक्तावलीग्रन्थस्योपरि एकैव दिनकरभट्टप्रकाशिता प्रकाशाख्या व्याख्या वर्तते स्म । सा च 'मघवा मूलं विडौजा टीके'तिवन्मूलतोऽपि कठिनेत्यवधार्य मयेयं मूलचन्द्रिका नाम्नी विवृतिः केवलं मूलार्थजिज्ञासूनामुपयोगाय निर्मिता । यदत्र क्वचित्क्वाचिन्मया प्रकाशोप्यालोचितस्तत्तु स्वमतप्रकटनायैव न पाण्डित्यगर्वात् । द्वित्रिवर्षतो निर्मितापि सतीयं विवृतिः विदुषां दृष्टिपथे कथमानीयेति विचारे निमग्नस्य मे महेन्द्रगढवास्तव्यपं०देवीसहायपुरोहितेन स्वपुत्रस्य मत्प्रियशिष्यस्य चायुष्मतः चन्द्रदत्तशर्मणः कथनादस्या मुद्रापणे यत्साहाय्यमकारि तदविस्मर्तव्यमेव । वैरस्मच्छिष्यैर्महेन्द्रगढवास्तव्य–मिश्ररामनारायणमुरलीधरशर्मप्रभृतिभिः कतिपयछात्रैः लेखनकर्मणि साहाय्यमकारि तदर्थमाशीर्वादार्हास्ते । अथ

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



च पट्शास्त्रग्रन्थकर्तृसमयादिनिर्णायक एकोऽन्योपि ग्रन्थो मया निर्मायादौ धृतः । युक्तायुक्तत्वमस्य प्रविज्ञा एव निर्णेष्यन्ति । ग्रन्थद्वयमध्ये प्रमादवशाद्या अशुद्धयः संजातास्ताः द्वितीयावृत्तावपनेष्यन्ते संप्रति स्वयं संशोध्य पठनपाठनयोः समादर्तव्येयं विवृतिरिति विरमन्निदमपि स्वपद्यद्वयेन प्रकटयामि—

कोचित्सांप्रतिका जाताः टीकाकर्तार ईदृशः ।
साक्षात्किञ्चिद्विपर्येत्य स्वकृतौ पूर्वटीकिकाः ॥
रक्षन्ति ज्ञायते केन स्वपाण्डित्यानुवृत्तये ।
परकीर्तिहरं कार्यं तदत्र न कृतं मया ॥

प्रिंसिपल—
राधाकृष्णसंस्कृत-विद्यालय,
महेन्द्रगढ ।

विद्वदनुचरः—
छज्जुरामशास्त्री ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

श्रीगणेशायनमः ।

# पण्डितछज्जुरामशास्त्रिप्रणीते

## ग्रन्थकर्तृपरिचये

# न्यायवैशेषिकग्रन्थकर्तृपरिचयः ।

---

सृष्टिस्थितिप्रलयकृत् रजःसत्त्वतमोगुणैः ।
सच्चिदानन्दमधुना ब्रह्म यत्तत ॐनमः ॥ १ ॥
सारस्वतं नमस्कुर्वे धाम तामरसेक्षणम् ।
करामलकवद्विश्वं पश्यन्ति कवयो यतः ॥ २ ॥
महर्षिर्गोतमो[1] ह्यासीन्न्यायशास्त्रप्रवर्तकः ।
यो न्यायदर्शनं[2] कृत्वा उद्दधार जगत्प्रभुः ॥ ३[3] ॥
ततो महर्षिवर्योऽभूत् कणाद[4] इति विश्रुतः ।
प्रणिनाय जगद्भूत्यै शास्त्रं वैशेषिकं[5] महत् ॥ ४ ॥

---

१ अयं त्रेताकालीनः प्रजापतेराङ्गिरसः प्रपौत्रो दीर्घतमसः पुत्रो हिमालयजन्मा, अहल्यापतिः ।

२ इयमान्विक्षिकी विद्याप्युच्यते ।

३ अत्र पञ्चाध्यायाः प्रत्यध्यायमाह्निकद्वयम् । सर्वसूत्राणि ५३१ ।

४ अत्रैतिह्यम्—तपस्यते कणादमुनये स्वयमीश्वर उलूकरूपधरः प्रत्यक्षीभूय शास्त्रमुपदिदेश तेन तद्दर्शनम् 'औलूक्यदर्शनम्' इत्यपि कथ्यते । अयं च कश्यपगोत्रजः मिथिलादेशवासी ।

५ अत्र दशाध्यायाः प्रत्यध्यायं द्वे आह्निके सर्वसूत्राणि ३६६ ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्यायदर्शनभाष्यं तु यथा वात्स्यायनो[६]ऽकरोत् ।
तथा प्रशस्तपादेन[७] भाष्यं वैशेषिके कृतम् ॥ ५ ॥
उद्योतकर आचार्यो निर्ममे न्यायवार्तिकम्[८] ।
न्यायवार्तिकतात्पर्यं मिश्रवाचस्पतिस्तथा[९] ॥ ६ ॥
न्यायाचार्यशिवादित्यमिश्रो[१०] ग्रन्थमरीरचत् ।
बहूपकारकं सप्तपदार्थीसंज्ञकं ततः ॥ ७ ॥
आचार्योदयनश्चक्रे[११] तं न्यायकुसुमाञ्जलिम् ।
तात्पर्यपरिशुद्धिं[१२] च ग्रन्थं च किरणावलीम् ॥ ८ ॥
प्रशस्तपादभाष्यस्य कन्दलीं[१३] श्रीधरो[१४]ऽकृत ।

---

६ पक्षिलः चाणक्य इत्यादिनामा । अत्रोद्योतकरवाचस्पत्यो-रुक्तिः प्रमाणम् । अयं चन्द्रगुप्तसमकालीनः ।

७ अस्यैव प्रशस्तदेवः प्रशस्तचरण इति नामान्तरम् । गोतम-वात्स्यायनयोरिव कणादप्रशस्तपादयोरपि परमर्षित्वम् ।

८ इदं च बौद्धाचार्यदिङ्नागमतखण्डनार्थमुद्योतकरेण व्यरचि ।

९ सर्वतन्त्रस्वतन्त्रधिषणोऽयम् । खण्डनोद्धारकृद् वाचस्पति-रस्माद्भिन्नो नवीनश्च ।

१० केचिदस्यैव व्योमशिवाचार्य इति नामाहुः । व्योमशिवा-चार्येण तु प्रशस्तभाष्यटीका व्योमवती कृतेति विचार्यम् ।

११ अयं मिथिलामण्डले गौडमण्डले वा विक्रमीय१०४८वर्षात्पूर्वं बभूव । सप्तशतीकारगोवर्द्धनाचार्यशिष्यः । जैनानां नास्तिकानां मूलोच्छेदोऽनेनैव कृत इति जैनग्रन्थाकलनादवसीयते । तथाचाह-दिल्लीस्थमहोमहापाध्यायहरिनारायणशास्त्री—

उत्पाट्य सत्वरमनीश्वरवादिमूलं योऽस्थापयत्सुदृढमीश्वरसिद्धिपक्षम् ।
भास्वानिव स्वकिरणावलिराजमानो वंद्यो विदामुदयनः किमु नो दयाब्धि

१२ न्यायवार्तिकतात्पर्यटीका ।

१३ त्र्यधिकदशोत्तरनवशत(९१३)शाकाब्दे न्यायकन्दलीरचिता । इति स स्वयमाह । अर्थात् १०४८ विक्रमाब्दः कन्दलीनिर्माणकालः ।

१४ अयमपि गौडमण्डले बभूव ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्यायलीलावतीग्रन्थमाचार्यो [15]वल्लभस्तथा ।। ९ ।।
उपाध्यायस्तु [16]गङ्गेशो न्यायग्रन्थशिरोमणिम् ।
तत्त्वचिन्तामणिं चक्रे परिष्कारपरिष्कृतम् ।। १० ।।
[17]वर्धमानस्तु तत्पुत्रः तर्ककर्कशभारती—
न्यायलीलावतीग्रन्थप्रकाशमकरोन्मुदा ।। ११ ।।
तत्त्वचिन्तामणेर्व्याख्यां [18]वासुदेवमहासुधीः ।
तथा [19]पक्षधरो मिश्र आलोकमद्भुतं व्यधात् ।। १२ ।।
दीधितिं निर्ममौ विद्वान् [20]रघुनाथशिरोमणिः ।
माथुरीं [21]मथुरानाथो ग्रन्थानन्यांस्तथाद्भुतान् ।। १३ ।।
मथुरानाथशिष्यो यो [22]रघुदेवः स दीधितेः ।
व्याख्यानं कृतवांश्चान्यां टीकां तत्त्वनिरूपणे ।। १४ ।।

---

१५ अयं महाविद्वान् मैथिलः न्यायलीलावतीं शाके दशमशतके रचयामासेति प्रसिद्धिः ।

१६ अयं शाके ११०० एकादशशतके वङ्गदेशे बभूव । नव्यपरिष्काराविष्कर्तुरस्य ग्रन्थविषये इदं पद्यमक्षरशः सत्यम्—

सर्वः शास्त्रमधीते कुरुते कुतुकान्निबंधमप्यत्र ।
अस्य तु किमपि रहस्यं केचिद्विज्ञातुमीशते सुधियः ॥

१७ गणरत्नमहोदधिकारस्तु जैन अस्माद्भिन्न एव ।

१८ सार्वभौमभट्टाचार्योपाधिकः ।

१९ अस्यैव नाम जयदेव इत्यपि प्रसन्नराघवनाटकचन्द्रालोककर्तुर्जयदेवादभिन्नश्च, अस्य प्रशंसा—'पक्षधरप्रतिपक्षीह लक्षीभूतो न दृश्यते' । अयं हरिमिश्रशिष्यः ।

२० अयं वासुदेवसार्वभौमशिष्यः । नवद्वीपग्रामे ( नद्याशान्तिपुरे ) जातः ।

२१ अयं रघुनाथशिरोमणेः शिष्यो वङ्गदेशीयश्च । आत्मतत्त्वविवेकादिटीकाकर्ता ।

२२ अयमपि वङ्गदेशीयः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कणादकृतसूत्राणामुपस्कारं स शंकरः[23] ।
कणभक्षरहस्याख्यं ग्रन्थं चक्रे तथाद्भुतम् ॥ १५ ॥
आत्मतत्त्वविवेकाख्यं[24] ग्रन्थमुदयनस्य च ।
व्याख्यया कल्पलतया स एवालंचकार वै ॥ १६ ॥
पदार्थदीपिकां कौण्डभट्टश्चक्रे प्रयत्नतः ।
शब्दार्थमंजरीं श्रीमान् भवानन्दश्च पण्डितः ॥ १७ ॥
तर्कामृतं भाष्यसूक्तिं जगदीशो[25]ऽतिविश्रुतः ।
जागदीशीं व्यधत्ताथो शब्दशक्तिप्रकाशिकाम् ॥ १८ ॥
भट्टाचार्यचक्रवर्ती गदाधर[26]महाशयः ।
गादाधरीं शक्तिवादं व्युत्पत्तिवादमेव च ॥ १९ ॥

---

२३ अयं रघुदेवशिष्यो भवदेवात्मजो भैरवीचन्द्रकलादिकर्तुर्भैरवमिश्रस्य सहोदर एव प्रतिभाति । अयं लीलावतीकण्ठाभरणादीनन्यानपि बहून् ग्रन्थान् चकार । बाल्य एव दैवीप्रतिभासंपन्नः केनचिद्राजमहापंडितेन शास्त्रार्थं कर्तुमुद्यतो राज्ञा निषिद्धश्च राजानं प्रत्येवमाह—

राजन् यद्यपि बालोऽहं न मे बाला सरस्वती ।
प्राप्ते तु षोडशे वर्षे वर्णयामि जगत्त्रयम् ॥

केचित्त्वयं श्लोकः पूर्वोक्तपक्षधरमिश्रेणैवंजातं राजानं प्रति कृत्वोक्त इति वदन्ति । चरम एव पक्षो ज्यायांश्च प्रतिभाति । अधिकं विशेषगवेषणापेक्षम् ।

२४ बौद्धाधिकारापरपर्यायम् ।

२५ अयं म० म० भवानंदशिष्यः सुप्रसिद्धो विद्वान् तर्कालङ्कारोपाधिकः ।

२६ अयं रत्नकोशकृतो हरिरामतर्कालंकारभट्टाचार्यस्य शिष्यः तर्कसाम्राज्यधुरंधरः सुप्रसिद्ध एव एतत्प्रशंसायामाह म० म० हरिनारायण * शास्त्री—

यो गोतमीयं भुवि षोडशात्मकं वादैः चतुःषष्टिमितैश्चतुर्गुणम् ।
चकार तं तार्किकचक्रवर्तिनं गदाधरं गण्यगुणं न वेत्ति कः ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संगतिं दीधितेर्व्याख्यां लक्षसंख्यात्मिकां तथा ।
निर्माय स्थापयामास यशः परममात्मनः ॥ २० ॥
आचार्योदयनस्यास्ति यो ग्रन्थः किरणावली ।
तस्या भगीरथ[27]श्चक्रे प्रकाश[28]स्य प्रकाशिकाम् ॥ २१ ॥
मकरन्दं प्रकाशस्य रुचिदत्तो[29] महाबुधः ।
प्रभां[30] शशधरः[31] चक्रे वादिराजो विडम्बनम्[32] ॥ २२ ॥
केशव[33]स्तर्कभाष्याख्यं ग्रन्थरत्नमचीकरत् ।
तथा तार्किकरक्षा[34]ख्यं वरदराज[35]महाकृती ॥ २३ ॥
पद्मनाभो यशो लेभे चिन्तामणि[36]परीक्षया ।
सिद्धान्त[37]मंजरीं कृत्वा जानकीनाथपंडितः ॥ २४ ॥
जानकीनाथपुत्रेण रामभद्रेण सूरिणा ।
विदुषामुपकृन्न्यायरहस्यं निरमीयत ॥ २५ ॥
न्यायपंचाननः श्रीमान् विश्व[38]नाथमहोदयः ।

---

२७ पक्षधरमिश्रशिष्यः ।

२८ कुसुमांजलिन्यायलीलावत्योः ।

२९ भाक्तुनामा–पक्षधरमिश्रशिष्यः ।

३० सिद्धान्तदीपप्रभाम् ।

३१ अयं महानैयायिकः यत एनं वेङ्कटाध्वर्यपि महानैयायिकेषु विश्वगुणादर्शचम्प्वां स्मरति स्म ।

३२ महाविद्याविडम्बनम् ।

३३ अयमेवालंकारशेखरादिसप्तग्रन्थकर्ता ।

३४ श्लोकबद्धम् ।

३५ लघुकौमुदीकर्ता, भट्टोजिदीक्षितशिष्य एव प्रतिभाति ।

३६ तत्त्वचिन्तामणिव्याख्यया ।

३७ न्यायसिद्धान्तमंजरीम् ।

३८ विद्यानिवासभट्टाचार्यतनूजो वङ्गदेशीयश्चायं स्वसमयं स्वकृतन्यायसूत्रवृत्तावन्तमपद्ये–

२

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मुक्तावलीमथो[39] न्यायसूत्रवृत्तिं विनिर्ममे ॥ २६ ॥
भावप्रकाशिकां[40] रुद्रो[41] भास्करस्तर्ककौमुदीम्[42] ।
प्रणिनाय प्रयत्नेन जयन्तो न्यायमंजरीम् ॥ २७ ॥
अन्नंभट्टो[43] रचितवान् तर्कसंग्रहमुत्तमम् ।
व्युत्पत्तिवादविवृतिं कृष्णम्भट्टोऽथ पंडितः ॥ २८ ॥
न्यायसिद्धांजनं चक्रे वेंकटनाथदेशिकः ।
उपाध्यायो गिरिधरः सुविभक्त्यर्थनिर्णयम् ॥ २९ ॥
मुक्तावल्याः दिनकरः प्रकाशं तत्तरङ्गिणीम् ।
रामरुद्रो न्यायसारं भाससर्वज्ञ आतनोत् ॥ ३० ॥
कृष्णः[44] चन्द्रोदयं[45] चक्रे गोवर्द्धनश्च[46] बोधिनीम्[47] ।

---

रसवाणतिथौ शकेन्द्रकाले बहुले कामतिथौ शुचौ सिताहे ।
अकरोन्मुनिसूत्रवृत्तिमेतां ननु वृन्दाविपिने स विश्वनाथः ॥
इत्यत्र १५५६ शकाब्दं प्रदर्शयामास ।

३९ इयं न्यायवैशेषिकदर्शनयोः संक्षिप्तसारभूतार्थावबोधिका मुक्तावली न्यायग्रन्थेषु मूर्धाभिषिक्तैवास्ति–भवति चात्र मामकं पद्यम्–
न्यायग्रन्थसहस्राणां सर्वेषां न्यायशास्त्रिणाम् ।
तात्पर्यं यत्र सोऽर्थोऽत्र विश्वनाथेन भाषितः ॥
विश्वनाथेन प्रथममियं निर्मिता ततो न्यायसूत्रवृत्तिरित्यप्युभयोर्दर्शनान्निर्व्यूढम् ।

४० गुणप्रकाशविवृतेर्व्याख्याम् ।

४१ अयं विश्वनाथसहोदरः प्रतिभाति । ४२ लौगाक्षिभास्करः ।

४३ अयं कर्णाटकदेशीयः तैलङ्गदेशीयो वा भवितुमर्हति । काश्यामधीत्य महाविद्वान् बभूव । व्याकरणमिताक्षराकारोऽप्ययमेव प्रतिभाति । अस्य प्रशंसा श्रूयते–'काशीगमनमात्रेण नान्नं भट्टायते द्विजः' ॥ अनेन स्वकृततर्कसंग्रहदीपिकापि निरमायि ।

४४ श्रीकृष्णधूर्जटिदीक्षितः' ४५ अयं तर्कसंग्रहस्य टीका ।

४६ सप्तशतीकाराद्भिन्नो नवीनश्च ।

४७ इयं न्यायबोधिनी तर्कसंग्रहस्य टीका ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जयनारायणो वृत्तिं[48] चन्द्रकान्तः स्वर्मोकरम्[49] ॥ ३१ ॥
हरिनाथः[50] शक्तिवादे टीकां छात्रोपयोगिनीम् ।
विवृतिं कुसुमांजल्याः कामाक्षीनाथ[51]पण्डितः ॥३२॥
रघूत्तमो[52] भाष्यचन्द्रं न्यायभाष्ये व्यरीरचत् ।
गंगानाथ[53]स्तु खद्योतं विद्वज्जनमनोहरम् ॥३३॥
राजेश्वरो[54] रामरुद्रीपूर्तिव्याख्यां व्यधान्मुदा ।
ढुण्ढिराजो[55] विवरणं भाष्योपस्कारयोस्तथा ॥३४॥
मुक्तिवादे चन्द्रिकां तु विरलां तर्कसंग्रहे ॥
तत्त्व[56]सुधालहरिका हरदत्तेन[57] निर्मिता ।
मुक्तावल्या मया छज्जुरामेण मूलचन्द्रिका ॥ ३५ ॥

इति ग्रन्थकर्तृपरिचये प्रथमो विलासः ।

---

४८ वैशेषिकसूत्रवृत्तिम् । ४९ वैशेषिकसूत्रभाष्यम् ।

५० अयं गोलोकनाथनाम्ना प्रसिद्धस्य वंगदेशीयविदुषः पुत्रः ।

५१ नवद्वीपसंस्कृतकालेजस्थपंडितो वर्तमानोऽद्भुतप्रतिभाशाली नैयायिकः ।

५२ मैथिलः कश्चिदयं नैयायिकसुधीः भाष्यचन्द्राख्यां व्याख्यां तृतीयाध्यायद्वितीयाह्निकस्थ १७ सूत्रपर्यन्तां विधायास्तं गत इति चौखंबासंस्कृतपुस्तकमालाप्रकाशितन्यायदर्शने द्रष्टव्यम् ।

५३ वर्तमान म० म० गंगानाथझामहोदयेन निर्मित एष खद्योतोपि काश्यामेव भाष्यचन्द्रेण सह मुद्रितस्तत्पूर्तिकरः ।

५४ अयं श्रीमतो वर्तमान म० म० लक्ष्मणशास्त्रिणो तनूजो न्यायाचार्यः । शब्दखण्डमारभ्यानेन भूरिश्रमेण रामरुद्याः पूर्तिः कृता । इदं पुस्तकं काशीसंस्कृतसीरिजमालायां मुद्रितम् ।

५५ अयं च तर्कतीर्थोपाधिसमलङ्कृतानां बटुकनाथशास्त्रिणामात्मजो न्यायोपाध्यायः । छात्राणामुपयोगीदमपि व्याख्यानं काश्यां मुद्रितम् । ५६ न्यायदर्शनस्य संक्षिप्ता श्लोकव्याख्या ।

५७ संप्रति वर्तमानेनामृतसरःस्थेन ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



# व्याकरणग्रन्थकर्तृपरिचयः ।

इन्द्रश्चन्द्रः काशकृत्स्नापिशलिशाकटायनाः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥
चतुर्दशमितान्येव सूत्राण्याश्रित्य पाणिनिः ।
भगवान् रचयामास सूत्रैर्व्याकरणन्तु यत् ॥ १ ॥
तस्यैव न्यूनतां हर्तुं विशिष्टं वक्तुमप्यथ ।
कात्यायनो मुनिः स्वानि वार्तिकानि प्रणीतवान् ॥२॥
संजग्राह ततो व्याडिर्विद्वान् संग्रहमुत्तमम् ।
लक्षसंख्यात्मकं सूत्रव्याख्यानं विदुषां मुदे ॥ ३ ॥

---

१ गन्धारदेशासन्न—*शलातुर*ग्रामवास्तव्यो दाक्षीपुत्रो महर्षिः पाणिनिः कलेश्चतुर्थ्यां शताब्द्यां संभवति स्म। अयं तपस्तोषितान्महेश्वराद्वरं लब्ध्वा नवं व्याकरणमरीरचत् । ततो जांबवतीविजयं च काव्यम्। तत्रैष राजशेखरश्लोकः–

स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः।
आदौ व्याकरणं काव्यमनु जांबवतीजयम्॥

सुभाषितावल्यादावस्य काव्यस्यानेके श्लोका उदाहृताः सन्ति। 'सिंहो व्याकरणस्य कर्तुरहरत्प्राणान् प्रियान् पाणिनेः' इत्यादिपंचतन्त्रश्लोकतो ज्ञायते पाणिनिमेनं १३तिथौ कश्चित्सिंहो जघानेति।

२ अयं वररुचिनाम्नापि ख्याप्यते । कौशाम्बीनगरवासिसोमदेवसुतो वसुदत्तागर्भश्च । 'वाररुचं काव्यमिति' महाभाष्यकारलेखेन ज्ञायते यदनेन किंचित्काव्यमपि निरमीयत अयमपि १३ तिथौ देहं तत्याज। अतएव कारणात्त्रयोदश्यां व्याकरणं न पठ्यते पाठ्यते च । एतदुपज्ञं प्राकृतं व्याकरणमपि चिराय प्रवृत्तम् ।

३ अयं वेतसपुरनिवासिकरम्भशर्मतनूजः।

४ एतत्सत्तायां–'संग्रहे तावत्कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति' पस्पशादिके भाष्यकारोक्तिः। वाक्यपदीयद्वितीयकाण्डस्थभर्तृहरिपुण्यराजप्रभृत्युक्तिश्च प्रमाणम्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अप्रचारतमोमग्नसूत्रवार्तिकयोः कृते ।
महाभाष्येन्दुमातेने भगवान् श्रीपतञ्जलिः ॥ ४ ॥
ततो भर्तृहरिः श्लोकैर्न्यायव्याकृतिमिश्रितम् ।
वाक्यपदीयनामानमपूर्वं ग्रन्थमातनोत् ॥ ५ ॥
प्रदीपाख्यं ततो ग्रन्थं भाष्यव्याख्यानमद्भुतम् ।
प्रणिनाय महाविद्वान् कैय्यटो जैय्यटात्मजः ॥ ६ ॥
वामनेन तथा श्रीमज्जयादित्येन धीमता ।
सूत्रार्थादिप्रकाशाय काशिका नु प्रकाशिता ॥ ७ ॥
तस्या अप्यातिकाठिन्यमालोक्य सुधियां कृते ।
प्रक्रियाकौमुदी रामचन्द्रेण निरमीयत ॥ ८ ॥

---

४अयं गोनर्ददेशीयः गोणिकापुत्रश्च कलेः सप्तविंश्यां शताब्द्यामभूत् । सत्ताकालः चन्द्रगुप्तनः पूर्वमेवापतति । कस्यचिदर्घ्यं ददतोऽञ्जलौ पतित इति पतंजलिरित्यन्वर्थं नाम ।

६ बहुत्र हरिरित्येव नाम स्मर्यते । लाघवदृष्ट्या तदुक्तं वस्तुतो भर्तृहरिरित्येव नामेति बहवः । अयं महावैयाकरणः स्वविषये स्वयमाह स्म–

अहं च भाष्यकारश्च कुशाग्रियधियावुभौ ।
नैव शब्दांबुधेः पारं किमन्ये जडबुद्धयः ॥
अहो भाष्यमहोभाष्यमहो वयमहो वयम् ।
मामदृष्ट्वा गतः स्वर्गमकृतार्थः पतंजलिः ॥

७ अस्य हेलाराजपुंजराजौ व्याख्यातारौ ।

८ श्रीमान् कैय्यट उव्वटो ह्यवरजो यच्छात्रतामागतो,
भाष्याब्धिं निगमं यथाक्रममनुव्याख्याय सिद्धिं गतः ॥

इति भीमसेनदीक्षितोक्तेर्ज्ञायते यन्मम्मटस्यैव कैय्यटउव्वटौ भ्रातरौ मम्मटसमय एव तयोः समयः । तं चाग्रे दर्शयिष्यामः कैयटविषये भवति मामकं पद्यम्–

नमस्तस्मै कैय्यटाय पंडितेन्द्राय कुर्महे ।
यस्योत्तमप्रदीपेन दिदीपे भाष्यमंदिरम् ॥

९ काव्यालंकारसूत्रकर्तृतो भिन्नोयं प्रतिभाति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सरणो[10] दुर्घटां वृत्तिमुणादिसूत्रमुज्ज्वलः[11] ।
हरदत्तसुधीश्चक्रे रुचिरां पदमंजरीम् ॥ ९ ॥
महामहोपाध्यायश्रीभट्टोजिदीक्षितः[12] सुधीः ।
सिद्धान्तकौमुदीं शब्दकौस्तुभं भूरियत्नतः ॥ १० ॥
सिद्धान्तकौमुदीव्याख्यां तथा प्रौढमनोरमाम् ।
निर्माय स्थापयामास यशः परममात्मनः ॥ ११ ॥
कौमुदीमतिसंक्षिप्य बालानामुपकारिणी ।
चक्रे वरदराजेन[14] लघुसिद्धान्तकौमुदी ॥ १२ ॥
सिद्धान्तकौमुदीव्याख्यां ज्ञानेन्द्राख्यसरस्वती[15] ।
मूलार्थस्यावबोधाय निर्ममे तत्त्वबोधिनीम् ॥ १३ ॥
शब्दरत्नं महाविद्वान्–हरिदीक्षितपण्डितः[16] ।
कौण्डभट्टो[17] बृहद्वैयाकरणभूषणं व्यधात् ॥ १४ ॥
नागेशोऽकृत[18] मंजूषां परिभाषेन्दुशेखरम् ।

---

१० सरणदेवः । ११ उज्ज्वलदत्तः ।

१२ अयं सुप्रसिद्ध एव कौमुद्याम् ।

१३ कंसवधनाटकादिकर्तृशेषश्रीकृष्णशिष्योऽयं महाविद्वान् सारस्वतब्राह्मणः पण्डितराजजगन्नाथात्किञ्चिदेवोर्ध्वतनश्च । कौण्डभट्ट एनमेवं प्रसशंस–

वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा ।
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये ॥

१४ तार्किकरक्षाकर्तुरभिन्नः प्रतिभाति ।

१५ जगन्नाथपितृपेरुभट्टगुरुरप्ययमेव प्रतिभाति समसामयिकत्वात् । १६ भट्टोजिदीक्षितपुत्रो नागेशभट्टगुरुश्च ।

१७ रङ्गोजिभट्टपुत्रः ।

१८ हरिदीक्षितशिष्योऽयं नागेशभट्टः स्वशिष्यशृङ्गवेर ( सिंघोर ) पुराधीशरामसिंहनामकनृपाल्लब्धजीवनो बहुग्रन्थप्रणेता पण्डितराजजगन्नाथाद्द्वितीयः पुरुषश्च खिस्ताब्दीयाष्टादशशतकप्रथमतुरीयांशे बभूव ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भाष्यप्रदीप उद्योतं लघुशब्देन्दुशेखरम् ॥ १५ ॥
भैरवो भैरवीं चक्रे शब्दरत्ने च शेखरे ।
चन्द्रकलाभिधां टीकां लघुशब्देन्दुशेखरे ॥ १६ ॥
गदाटीका वैद्यनाथपायगुण्डोपनामकैः ।
श्रीबालशास्त्रिशिष्येण भूतिः तात्याख्यशास्त्रिणा ॥१७॥
षट्शास्त्रिशिवकुमारमिश्रशिष्येण निर्मिता ।
विजया जयदेवेन[19] परिभाषेन्दुशेखरे ॥ १८ ॥
वर्धमानो[21] महाविद्वान् गणरत्नमहोदधिम् ।
अन्नंभट्टस्तथा[22] चक्रे व्याकरणमिताक्षराम् ॥ १९ ॥
वोपदेवसुधीर्[23] मुग्धबोधं[24] व्याकरणान्तरम् ।
अनुभूतिस्वरूपार्यः[25] सारस्वतमथाकरोत् ॥ २० ॥
सिद्धान्तचन्द्रिका रामाश्रमधीरेण[26] निर्मिता ।
लघुभाष्यं करोति स्म रघुनाथाभिधः[27] सुधीः ॥२१॥

---

१९ सम्प्रति वर्तमानेन महामहोपाध्यायेन ।

२० अस्योपरि अन्या अप्येकादश टीकाः सन्ति ।

२१ अयं जैनः एकादशशतआसन्नकालीनश्च ।

२२ तर्कसंग्रहादिकर्ता ।

२३ अयं भिषग्रत्नकेशवशर्मतनूजो विद्वद्धनेशमिश्रशिष्यो वोपदेवः दक्षिणदेशान्तर्गत-देवगिरि-राजधानीपतेर्महादेवराज्ञः सभापण्डितः ११८२ शकसंवत्सरे बभूवेति प्रतिभाति। चतुर्वर्गचिन्तामणिनिबंधकारो हेमाद्रिरपि तस्यैव राज्ञः सभापण्डितोऽमात्यश्चासीत्।

२४ अस्य दुर्गादासविद्यावागीश-श्रीरामतर्कवागीशौ व्याख्यातारौ ।

२५ अयं कदा कुत्र बभूवेति तु मया न ज्ञायते ।

२६ अमरकोश--सुधाव्याख्याकर्तृ--भानुजिद्दीक्षितापरनामधेयरामाश्रमतोऽयमभिन्नः प्रतिभाति ।

२७ अयं कुरुक्षेत्रान्तर्गतसर्पदमन ( सफीदों ) समीपवर्ति-'हाट' ग्रामवास्तव्यो नवीनश्च ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कातन्त्रमथ ऋक्तन्त्रमस्ति व्याकरणान्तरम् ।
निरुक्तमपि तत्रैव यास्ककल्पितमिष्यते ॥ २२ ॥

इति द्वितीयो विलासः ।

## पूर्वोत्तरमीमांसाग्रन्थकर्तृपरिचयः ।

मीमांसादर्शनं चक्रे जैमिनिर्मुनिसत्तमः ।
धर्मशास्त्रप्रचाराय लोकानुग्रहकांक्षया ॥ १ ॥
तद्भाष्यं शबरस्वामी नाम्ना शाबरमद्भुतम् ।
प्रणिनायोपकाराय सूत्रगूढार्थसंविदे ॥ २ ॥

---

२८ अस्य कर्ता महाविद्वान् शर्ववर्मा, शालिवाहनसभापण्डित आसीत् अस्य व्याकरणस्य 'सिद्धो वर्ण समाम्नाय' इत्यारभ्य 'अवर्णादूरोवृद्धिः' इत्यन्तस्य कलापोऽपि नाम । उक्तं च—

अधुना स्वल्पतन्त्रत्वात्कातन्त्राख्यं भविष्यति ।
तद्वाहनकलापस्य नाम्ना कालापकं तथा ॥

पाणिनीयसारस्वत-मुग्धबोधानामिवास्य प्रचारो नास्ति । अस्योपरिदुर्गासिंहरचिता वृत्तिरपि सम्यक्तरास्ति ।

२९ इदमष्टादशाध्यायात्मकम् । एतद्भाष्यं स्कन्दस्वामिना कृतम् । जम्बूमार्गाश्रमवासिभगवद्दुर्गाचार्यकृतं तु व्याख्यानमस्यापूर्वमेवास्ति । भवति चात्र पद्यम्—

पुरातने च निर्दीपे निरुक्ते यास्कमन्दिरे ।
कृतो भगवद्दुर्गेण प्रकाशो व्याख्यया स्वया ॥

निरुक्तविषये निरुक्तालोचनमपि द्रष्टव्यमेवास्ति ।

१ इदं मन्त्रब्राह्मणात्मकेभ्यो वेदेभ्यः कर्माणि संकलय्य निर्मितवान् भगवान् जैमिनिः । अत्र षोडशाध्यायाः प्रत्यध्यायं चत्वारः पादाः तृतीये षष्ठ दशमे चाध्यायेऽष्टपादा इति विशेषोऽवगन्तव्यः सूत्राणि २७४५ अधिकरणानि ९०७ ।

२ भगवद्व्याससमकालीनः शिष्यत्वात् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



श्लोकवार्तिकमातेने भट्टपादकुमारिलः[3] ।
विदुषामुपकाराय ग्रन्थं च तन्त्रवार्तिकम् ॥ ३ ॥
विधिविवेकमकरोन्[4] मण्डनमिश्रपण्डितः[5] ।
न्यायमालां[6] मिश्रपार्थसारथिः शास्त्रदीपिकाम् ॥४॥
शालिकनाथविदुषा[8] प्रभाकरमतानुगा ।
मीमांसादर्शनं चक्रे श्रीप्रकरणपंचिका ॥५॥
तत्त्वबिंदुं महाप्राज्ञो वाचस्पतिमहोदयः[9] ।
आपदेवश्च[10] मीमांसान्यायप्रकाशमातनोत् ॥ ६ ॥
मीमांसापरिभाषां श्रीकृष्णयज्वातिपंडितः ।
भट्टशंकर[11] आतेने मीमांसासारसंग्रहम् ॥ ७ ॥
खण्डदेव[12] उपाध्यायो विदधे भाट्टदीपिकाम् ।

---

३ अयं शङ्कराचार्यसमसामयिकः अस्य शङ्कराचार्यस्य च प्रयागे समागमोऽभूदिति शङ्करदिग्विजये स्पष्टम् । शास्त्रार्थे विजित्य बौद्धानामुच्छेदोऽनेनैव कृतः ।

४ अस्य ग्रन्थस्य सर्वतन्त्रस्वतन्त्रतवाचस्पतिनिर्मिता न्यायकणिकाख्या व्याख्या सुप्रसिद्धैवास्ति ॥

५ अयं कुमारिलभट्टशिष्यः । शङ्कराचार्यतः शास्त्रार्थे पराजितोऽभूदिति चास्य किंवदन्ती सुप्रसिद्धैव ।

६ न्यायरत्नमालाम् ।

७ सांप्रतिक पं० सुदर्शनाचार्यशास्त्रिप्रणीतटीका अस्या द्रष्टव्यैवास्ति ।

८ अयं गुरुनाम्नापि ख्याप्यते । कुमारिलसमसामयिकश्च, अधिकं मत्प्रणीतसिद्धान्तमुक्तावली-मूलचन्द्रिका-विवृतौ द्रष्टव्यम् ।

९ सर्वतन्त्रस्वतन्त्रोपाधिकः ।

१० संस्कारकौस्तुभकर्तुरनन्तदेवस्य पिता ।

११ वैशेषिकसूत्रोपस्काराादिकर्तुरभिन्नः प्रतिभाति ।

१२ मंजूषाद्युक्तखण्डकोपाध्यायस्त्वितो भिन्नः प्राचीनश्च ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



लौगाक्षिभास्करसुधीरर्थसंग्रहमुत्तमम् ॥ ८ ॥
जैमिनीयन्यायमालाविस्तरमार्यमाधवः ।
भाट्टचिन्तामणिं गागाभट्टश्चक्रे प्रयत्नतः ॥ ९ ॥
वैद्यनाथोऽकृतन्यायबिंदुं न्यायसुधां ततो ।
भट्टसोमेश्वरो देवश्चाधिकरणकौमुदीम् ॥ १० ॥
मुमुक्षुजनमुद्धर्तुं भगवान् बादरायणः ।
कृतवानद्भुतां गीतां तथा वेदान्तदर्शनम् ॥ ११ ॥

---

१३ तर्ककौमुदीकर्तुरभिन्नः ।

१४ अयं माधवाचार्यः सायणाचार्यभ्राता श्रीबुक्कभूपतेः कुलगुरुर्मंत्री चासीत् । अयं विस्तरो माधवेन तद्राज्ञः कथनादेवाकारि । तथाचोक्तं माधवाचार्येण विस्तरे—

स खलु प्राज्ञजीवातुः सर्वशास्त्रविशारदः ।
अकरोज्जैमिनिमतं न्यायमालां गरीयसीम् ।
तां प्रशस्य सभामध्ये वीरश्रीबुक्कभूपतिः ।
कुरु विस्तरमस्यास्त्वमिति माधवमादिशत् ।

१५ तन्त्रवार्तिकटीकाम् । १६ देवनाथः ।

१७ भगवन्नारायणावतारो वेदव्यासापरनामधेयः पाराशर्यः । उक्तञ्च त्रिकाण्डशेषे—

कृष्णद्वैपायनो वेदव्यासः स्यात्सत्यभारतः ।
पाराशर्यः सात्यवतो माठरो बादरायणः ॥

१८ भगवद्गीताम् । अस्या अद्यावधि २०८ मितासु भाषास्वनुवादो जातः । शाङ्करभाष्यादयश्च बह्यः संस्कृतटीकाः । एतद्विषये मयोपाश्लोकि—

भवाब्धिमग्नेन यया गम्यते पारमाशु वै ।
वर्तते सा त्र निजवद्गीता गीता हरेर्मुखात् ।

१९ इदं वेदेभ्यो ब्रह्मण उपासनाज्ञाने उपादायोपदिदेश बादरायणः । अत्र चत्वारोऽध्यायाः प्रत्यध्यायं चत्वारः पादाः सूत्राणि ५५४ अधिकरणानि १९१ । अस्य-पूर्वोक्तममीमांसादर्शनस्य च भूयसीं सरूपतामालोक्योक्तम्—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कुतर्कग्रस्तमालोक्य तद्वै देशिकशंकरः[20]।
सत्यार्थस्य प्रकाशाय शांकरं[21] भाष्यमातनोत् ॥ १२ ॥
स्वमतस्य प्रचाराय श्रीभाष्यं वैष्णवाग्रणीः।
विद्वद्रामानुजाचार्यः[22] प्रणिनाय प्रयत्नतः ॥ १३ ॥
श्रीमाध्वो[23] माध्वभाष्यं निम्बार्को[24] निम्बार्कभाष्यकम्।

---

जैमनीये च वैयासे विरुद्धांशो न कश्चन।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ ॥

एतयोर्द्वयोरुपरि समुदितैका वृत्तिर्व्याकरणाचार्यभगवत्पाणिनिगुरुवर्षसहोदरेण कथासरित्सागरोपवर्णितनन्दराज्यसमयोत्पन्नभगवदुपवर्षेण निरमीयत। सा च ब्र० सू० ३।३।४३। इत्यत्र भाष्ये शङ्कराचार्येण–'अतएव च भगवतोपवर्षेण'–इत्युदाहृता। अतोऽपि दर्शनयोर्द्वयोरेकग्रन्थत्वमिति दिक्।

२० शङ्करावतारः शङ्कराचार्यः केरलदेशान्तर्गत–कलापीग्रामवास्तव्यः। शिवगुरुशर्मसुतः सती( मन्दालसा )गर्भजश्च अस्यावतारखिस्ताब्दाः ८२०। अयमद्वैतवादी। एतन्मते जीवब्रह्मणोरैक्यम् 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापर' इति मुख्यसिद्धान्तः। प्रधानकोटौ ज्ञानमप्रधानकोटौ कर्माणि भक्तिश्च।

२१ इदमन्येभ्यो भाष्येभ्यश्चिरन्तनम्।

२२ भूनपुरी ( पेरूम्बुरू ) जन्मा। विशिष्टाद्वैतवादी, केशवार्यतनूजः कांतिमतीगर्भजो रामानुजाचार्यः शाके ११ शतके बभूव। एतन्मते सत्यं ब्रह्म सृष्टिरपि द्वयोः सत्यत्वे भिन्नत्वं नास्ति सृष्टिर्ब्रह्मान्तर्लीना चिदचिदिति शक्तिद्वयम् सत्यानामर्थानां ब्रह्मणि स्थितिः। परिणता दृश्या भवन्ति लोहचुम्बकवत् अर्थात् मणेर्लोहाकर्षणशक्तिर्न दृश्यते परिणामतो ज्ञायते। 'हरिरेव जगज्जगदेव हरिर्हरितो जगतो नहि भिन्नतनु'रिति सिद्धान्तः।

२३ अयं द्वैतवादी, एतन्मते जीवसृष्ट्योर्नास्त्यभेदः यन्त्रयन्त्रकारवत्, भक्तिः प्रधानकोटौ। अस्य समयः १२ खिस्ताब्दासन्नः।

श्रीमन्मध्वमते हरिः परतमः सत्यं जगत्तत्त्वतो
भेदो जीवगणा हरेरनुचरा नीचोच्चभावङ्गताः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अणुभाष्यमथोऽकार्षीत्परमाचार्यवल्लभः[२५] ॥ १४ ॥
श्रीकण्ठः शैवभाष्यं[२६] हि विद्वज्जनमनोहरम् ।
वेदान्तसूत्रभाष्यं च विज्ञानभिक्षुर्विनिर्ममौ[२७] ॥ १५ ॥
रत्नप्रभां च गोविन्दः[२८] शांकरभाष्यविवृतिम् ।
न्यायनिर्णयमातेने आनन्दगिरिरद्भुतम् ॥ १६ ॥
सर्वतन्त्रस्वतन्त्रश्रीमिश्रवाचस्पतिस्तथा[२९] ।
शांकरभाष्यविवृतिं भामतीं पर्यकल्पयत् ॥ १७ ॥
तद्व्याख्याममलानन्दः चक्रे कल्पतरुं परम् ।
तस्य परिमलं श्रीमान् अप्पयदीक्षितपण्डितः[३०] ॥ १८ ॥

---

मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनम्
प्रत्यक्षादित्रयप्रमाणमखिलाम्नायैकवेद्यो हरिः ॥

२४ द्वैताद्वैतमतवादी निम्बार्कः ११ शतके बभूव । संन्यासग्रहणात्पूर्वमसौ ज्यौतिषाचार्यभास्कराचार्यनाम्नाख्याप्यतेस्म ।

२५ अयं शुद्धाद्वैतवादी । तैलंगदेशीयलक्ष्मणभट्टपुत्रः षोडशशतकपूर्वार्धे बभूव । एतन्मते ब्रह्मणो यदा सिसृक्षा तदाग्नेः स्फुलिङ्गा इवानन्ता अणवः सच्चिदानन्दभेदाद्भवन्ति । सदंशतः प्रकृतिः चिदंशतो जीव आनन्दांशत आन्तरिकपदार्थः । श्रीकृष्णाख्यं परं ब्रह्म, आनन्दं ब्रह्मणो रूपमिति सिद्धान्तः । भक्तिः प्रधानकोटौ परमेतेषु मतेषु शङ्करमतमेव ज्याय इति दिक् ।

२६ इदं भाष्यं दर्शनार्हम् ।

२७ सांख्यप्रवचनभाष्यसांख्यसारादिकर्ता ।

२८ गोविन्दराजः ।

२९ अयं नृगस्य राज्ञः शासनकाल आसीत् । उदयनाचार्यादूर्ध्वतनः । वाचस्पतिना स्वप्रणीतग्रन्था भामत्यन्ते निर्दिष्टाः—

यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिः ।
यन्न्यायसांख्ययोगानां वेदान्तानां निबंधनैः ॥ इत्यादिना ।

३० कुवलयानन्दादिकर्ता ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



आनन्दवोधः श्रीन्यायमकरन्दं प्रणीतवान् ।
लोकाचार्यो महाविद्वान् तत्त्वत्रयमनुत्तमम् ॥ १९ ॥
सिद्धित्रयं ग्रन्थरत्नं देशिको यामुनो[३१] मुनिः ।
तत्त्वप्रदीपिकां[३२] चक्रे श्रीमानाचार्यचित्सुखः ॥ २० ॥
प्रस्थानभेदमद्वैतसिद्धिं श्रीमधुसूदनः[३३] ।
खण्डनखण्डखाद्यं च श्रीहर्षो[३४]ऽकृत पंडितः ॥ २१ ॥
वैयासिकन्यायमालां भारतीतीर्थ[३५]संयमी ।
श्रीपंचपादिकां पद्मपादाचार्यो विनिर्ममे ॥ २२ ॥
अनुभूतिप्रकाशं श्रीविद्यारण्यो[३६] मुनीश्वरः ।

---

३१ भगवद्रामानुजगुरुः ।

३२ चित्सुखीतिनाम्ना प्रसिद्धाम ।

३३ भगवद्गीतामधुसूदनीव्याख्यादिकर्ता । अनेनाद्वैतसिद्धिग्रन्थविषये इदमुक्तम्—

श्रद्धाधनेन मुनिना मधुसूदनेन संगृह्य शास्त्रनिचयं रचितातियत्नात् ।
बोधाय वादिविजयाय च सत्वराणामद्वैतसिद्धिरियमस्तु मुदे बुधानाम॥

३४ अयं कान्यकुब्जब्राह्मणः कान्यकुब्जदेशीयश्च । पिता चास्य श्रीहरिः। हीरा, माता मामल्लदेवी । कान्यकुब्जेश्वरविजयचन्द्रसभापंडितश्च। विजयचन्द्रसमयः १२२५ संवत्सरः । खण्डनग्रन्थेऽनेनोदयनाचार्यग्रन्थानां खण्डनं कृतम् ।

३५ अयं भगवत्पादशंकराचार्यविद्यावंशजो जैमिनीयन्यायमालाविस्तरकर्तुर्माधवाचार्यस्य गुरुरिव प्रतिभाति ।

३६ संन्यासग्रहणोत्तरं माधवाचार्यस्यैव विद्यारण्य इति नाम जातमिति किंवदन्ती । पञ्चदशीव्याख्यात्रापि—'न वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ' इत्युक्तम् । माधवाचार्येण च स्वयं भारतीतीर्थो न्यायमालाविस्तरे स्वगुरुत्वेन वर्णितः । ततश्च ज्ञायते विद्यारण्यापरनामा माधवाचार्यः खाद्यखण्डनादिकर्तुः श्रीहर्षतोऽर्वाचीनः । यतस्तेन पञ्चदश्यामुक्तम्—

निरुक्तावभिमानं ये दधते तार्किकादयः ।
हर्षमिश्रादिभिस्ते तु खण्डनादौ सुशिक्षिताः ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जीवन्मुक्तिविवेकं च चक्रे पंचदशीं तथा ॥ २३ ॥
श्रीमत्सुरेश्वराचार्यो नैष्कर्म्यसिद्धिमातनोत् ।
वेदान्तरत्नमंजूषामाचार्यपुरुषोत्तमः ॥ २४ ॥
संक्षेपशारीरकं च सर्वज्ञात्ममुनीश्वरः ।
अप्पय्यदीक्षितश्चक्रे[37] सिद्धान्तलेशसंग्रहम् ॥ २५ ॥
वेदान्तपरिभाषां श्रीधर्मराजाध्वरी सुधीः ।
संजग्रन्थे सदानन्दो वेदान्तसारमुत्तमम् ॥ २६ ॥
खण्डनोद्धारमकृत वाचस्पतिसुधीवरः[38] ।
कृष्णानन्दस्तु[39] सिद्धान्तसिद्धांजनमनुत्तमम् ॥ २७ ॥
स्वाराज्यसिद्धिमकरोद्गङ्गाधरानन्ददेशिकः[40] ।

## सांख्ययोगग्रन्थकर्तृपरिचयः ।

यानि प्रणीतवान् सांख्यसूत्राणि[41] कपिलो[42] मुनिः ।
तेषां विज्ञानभिक्षुर्वै भाष्यमद्भुतमातनोत्[43] ॥ २८ ॥
कारिकाः[44] सांख्यशास्त्रस्य सर्वतत्त्वावबोधिकाः ।

---

३७ परिमलादिकर्ता ।

३८ भामत्यादिकर्तृवाचस्पतिमिश्रतो भिन्नो नवीनश्च ।

३९ अस्य प्रकरणग्रन्थस्योपरि भास्करदीक्षितकृता रत्नतूलिका व्याख्यास्ति ।

४० अयं सुप्रसिद्धो यतिर्वाराणस्यां १८०० शतके बभूव ।

४१ सूत्राणि ५२६ ॥

४२ नारायणावतारो देवहूतिनन्दनो महामुनिरेष भागवतादौ सुप्रसिद्ध एव । तथा चोक्तम्—

पञ्चमे कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥

४३ सांख्यप्रवचननामकम् ।

४४ एताः सप्ततिकारिका अतिप्राचीना यतो भगवान् शंकराचा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



श्रीमद्ईश्वरकृष्णेन रचिता बुधबुद्धये ॥ २९ ॥
आचार्यगौडपादेन तासां भाष्यमरीरचत् ।
सर्वतन्त्रविदा वाचस्पतिना त[४५]त्त्वकौमुदी ॥ ३० ॥
कृतवान् मा[४६]धवाचार्यः सर्वदर्शनसंग्रहम् ।
क्षेमानन्दोऽथ विबुधः सांख्यतत्त्वविवेचनम् ॥ ३१ ॥
भावागणेशो व्यदधात्तत्त्वयाथार्थ्यदीपनम् ।
यो यो[४७]गैः प्रतिभाति स्म भगवन्तं पत[४८]ञ्जलिम् ।
तस्यैव भगवान् व्या[४९]सो भाष्यजातमवर्तयत् ॥ ३२ ॥
विज्ञानभिक्षुरकरोत् यो[५०]गवार्तिकमद्भुतम् ।
वाचस्पतिश्च भो[५१]जैश्च वृत्तिं नागे[५२]शो विस्तथा ॥ ३३ ॥
आचार्यहेमचन्द्रेण योगशास्त्रं विनिर्ममे ।
श्रीना[५३]रायणतीर्थेन योगसिद्धान्तचन्द्रिका ॥ ३४ ॥

इति तृतीयो विलासः ।

---

र्थोऽपि स्वभाष्ये प्रमाणयति स्म ।

४५ अस्या बालरामोदासीनसाधुकृता व्याख्या दर्शनार्हा संग्राह्या च ।

४६ पूर्वोक्त एव ।

४७ योगदर्शनम्, अत्र चत्वारः पादाः । ( १९५ ) सूत्राणि ।

४८ भगवांदछेषः समये २ लोकोपकाराय पतंजलिनाम्नापि द्वित्रिवारमवतारधारणं चकार । योगकर्ता भगवान् पतंजलिर्महाभाष्यकर्तुः पतंजलेर्भिन्नः प्राचीनश्च । तथा चोक्तम्—'यस्त्यक्त्वा रूपमाद्यं प्रभवति जगतोऽनेकधाऽनुग्रहाय' इत्यादिना । 'योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन' ति कैय्यटस्तु नामैक्येन बभ्राम ।

४९ भगवान् व्यासः कलेर्द्वितीयशताब्द्यासन्नकालीनजनमेजयपर्यन्तकालीनः ।

५० भाष्यव्याख्यानरूपम् । ५१ भोजदेवनृपतिः । ५२ नागेशभट्टः ।

५३ अस्य समयः विक्रमीय १७५८ संवदासन्नः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



# काव्यादिग्रन्थकर्तृपरिचयः ।

अथ तत्रभवांश्चक्रे वाल्मीकिर्मुनिपुङ्गवः ।
रामायणं महाकाव्यं चतुर्वर्गफलप्रदम् ॥ १ ॥

---

१ अयं महर्षिः त्रेतायुगे बभूवेति न तिरोहितमक्षरजुषाम् । पूर्वं क्षुद्रकर्मा किराततुल्यश्चासीत् जन्म तु ब्राह्मणगृहेऽभूत् यत्स स्वयमाह स्म—

अहं पुरा किरातेषु किरातैः सह वर्धितः ।
जन्ममात्रं द्विजत्वं मे पापाचाररतः सदा ॥

स चादिकविः यदुक्तं—'जाते जगति वाल्मीकौ कविरित्यभिधाभवत् । ततो जाते कवी व्यासे' इत्यादौ । न चादिकविर्ब्रह्मैव 'तेने ब्रह्म हृदा य आदिकवये' इति भागवते 'कवीना मुशनाः कवि'रितिगीतायां 'कविं पुराणमनुशासितारमणोरणीयांणमनुस्मरेद्य' इत्यत्र चोक्तत्वादिति वाच्यम् । वैदिकयुगे हृदा निगूढतत्त्वद्रष्टुरेव कविपदोपलब्धिदर्शनात् । रामायणयुगे तु हृदा तत्वं दृष्ट्वाऽऽख्यानमुखेन वर्णयितुरेवेति सकलमकलङ्कम् । अत एवोक्तम्—

आदिकवी चतुरास्यौ कमलजवल्मीकजौ वन्दे ।
लोकश्लोकाविधात्रोर्ययोर्भिदा लेशमात्रेण ॥

२ एतदुद्दिश्य ब्रह्मवाक्यं—

यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥

अस्यानुष्टुभमुद्दिश्य वनदेवतामुखेन भवभूतिराह—चित्रम् आम्नायादन्यो नूतनश्छन्दसामवतारः ।

३ चतुर्वर्गो धर्मार्थकाममोक्षा एव फलं तत्प्रदम् । तदुक्तमाचार्यभामहेनापि—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥

'काव्यालापांश्च वर्जये' दिति निषेधस्य त्वसत्काव्यान्येव विषय इति दिक् । रामायणमुद्दिश्य मयाप्युपाश्लोकि—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अष्टादशपुराणानि भारतं मुनिसत्तमः।
व्यासो भागवतं चक्रे कृष्णचन्द्रकथान्वितम् ॥ २ ॥
बृहत्कथा गुणाढ्येन भासेन स्वप्ननाटकम्।

---

रायं पुत्रांश्च पौत्रांश्च मानं मान्येषु सद्गतिम्।
यद्ददाति स्वपाठिभ्यो न तस्मै रोचयेत कः॥

४ तानि च–ब्रह्म १ पद्म २ विष्णु ३ शिव ४ भागवत ५ नारद ६ मार्कंडय ७ अग्नि ८ भविष्य ९ ब्रह्मवर्त १० लिङ्ग ११ स्कन्द १३ वामन १४ कूर्म १५ मत्स्य १६ गरुड १७ ब्रह्माण्ड १८ नामानि।

५ अस्य महाकाव्यस्याष्टादश पर्वाणि सन्ति। 'भारतं चेक्षुदण्डं समुद्रं चापि वर्णय। पादमेकं प्रदास्यामि'––इत्थं व्यासेनोक्तः कश्चित्कविरित्थं वर्णयामास–"पर्वपर्व रसाधिकम्" श्रुताविदं पञ्चमवेदो जोघुष्यते।

६ यद्यपि वाल्मीक्यपेक्षया द्वितीयोऽयं कविः तथापि बुद्धिप्रतिभादिबलं न्यूनमिति न केनापि वक्तुं शक्यते।

नमः सर्वविदे तस्मै व्यासाय कविवेधसे।
चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम्॥

७ दुरूहोऽयं ग्रन्थः एतद्विषये स्वयमाह स्म भगवान्व्यासः–'अहं वेद्मि शुको वेत्ति संजयो वेत्ति वा नवा,। प्रसिद्धिरपि च–"विद्यावतां भागवते परीक्षा"। एतमुद्दिश्योपश्लोकितं

भाति सर्वत्र शास्त्रेषु गण्यते श्रुतिसंनिभम्।
वर्तते त्रिषु लोकेषु तरन्ति पाठिनो जनाः॥

८ इयं भूतभाषामयी, रत्नावली–नागानन्द–मालती–माधव–मुद्राराक्षस-कादंबरी–वेतालपंचविंशतिप्रभृतीनां जननी च।

समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा॥

९ अतिदीर्घजीविदोषाद् व्यासेन यशोऽप हारितं हन्त।
कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः॥

१० एष एव महाकविः 'प्रथितयशसां भाससौमिल्लकविपुत्रदीनां' मित्यादिना मालविकाग्निमित्रे कालिदासेन,



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गाथासप्तशती शालिवाहनेन विनिर्ममे ॥ ३ ॥
भट्टिरपि महाविद्वान् भट्टिकाव्यं प्रयत्नतः ।
भर्तृहरिश्च शतकत्रयं चक्रे महामनाः ॥ ४ ॥
प्राणैषीदमरकोशममरसिंहकवीश्वरः ।
घटखर्परकाव्यं श्रीघटखर्परपण्डितः ॥ ५ ॥

---

सूत्रधारकृतारम्भनाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥
इति हर्षचरिते बाणभट्टेन चोपश्लोकितः ।

११ इयं बाणस्य हर्षचरिते कोशतया स्तुता ।
अविनाशिनमग्राम्यमकरोच्छालिवाहनः ।
विशुद्धजातिभिः कोशं रत्नैरिव सुभाषितैः ॥

१२ अयमेव शकाब्दप्रवर्तकः । अस्यैव सभायां गुणाढ्यशर्मवर्मप्रभृतयो विपश्चिदपश्चिमा आसन् । एतत्समये प्राकृतस्य प्रचुरः प्रचारोऽभूत् । उक्तं च सरस्वतीकण्ठाभरणे—
केऽभूवन्नाढ्यराजस्य काले प्राकृतभाषिणः ।
काले श्रीसाहसांकस्य के न संस्कृतभाषिणः ॥
तत्राढ्यराजः शालिवाहनः साहसांकश्च विक्रम इति ध्येयम् ।

१३ केचिदिमं भर्तृहरिं चाभिन्नं मन्यन्ते उभयोरेव महावैयाकरणत्वात् । तदयुक्तम् मल्लिनाथाद्यसंमतेः ।

१४ अष्टाध्यायी जगन्माताऽमरकोशो जगत्पिता ।
सुबंधु भट्टिकाव्यं च त्रयीयं सुखदाऽस्तु नः ॥
व्याकरणविषयेऽद्वितीयं काव्यमिदम् ।

१५ अयं विक्रमसमसामायिकः । वाक्यपदीयवाक्यसारादिकर्तुर्भर्तृहरेरभिन्नश्च । हरिहरोपाध्यायनिर्मितभर्तृहरिनिर्वेदनाटकस्य कथानायको योगिगोरक्षनाथ-शिष्यश्चाप्ययमेव प्रतिभाति ।

१६ अयममरसिंहो विक्रमसमकालीनो विभाव्यते । विक्रमीयनवरत्नेषु गणितत्वात् अस्यैव दुर्गसिंह इत्यपि नाम । यदुक्तम्—
दुर्गसिंहप्रचरिते नामलिङ्गानुशासने ।
लभते ह्यमरोपाधिं राजेन्द्रविक्रमेण सः ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कुमारसंभवं मेघदूतं च रघुवंशकम् ।
मालविकाग्निमित्रं च अभिज्ञानशकुन्तलाम् ॥ ६ ॥
महाकविः कालिदासः प्रणिन्ये विक्रमोर्वशीम् ।
महाकविर्भारविश्च श्रीकिरातार्जुनीयकम् ॥ ७ ॥
सेतुबंधमहाकाव्यं प्रवरसेनपण्डितैः ।
दशकुमारचरितं दण्डिना निरमीयत ॥ ८ ॥
चक्रे कुमारदासेन जानकीहरणं तथा ।

---

विक्रमसमयस्तु तत्संवत्सरत एव ज्ञायते । सर्वकाव्यकाराणां वर्णनं तु विस्तरभिया त्यक्तम् ।

१७ "नाटकान्तं कवित्व"मित्युक्तेरस्मिन्नाटके महाकविकालिदासेन स्वप्रतिभासर्वस्वं व्ययीकृतमित्यत्र नास्ति लेशोऽपि सन्देहस्य । उक्तं च-

काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला ।
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥

१८ यद्यपि कालिदासास्त्रयस्तथापि पूर्वतमः कालिदासः यश्चिराय भारते लक्ष्यभूतोऽभूत्स विक्रमसमकालीनो भवितुमर्हति । अन्ययोरेकतरेण भोजसभ्येन भाव्यम् । कस्य कतमा कृतिरिति यद्यपि निर्णेतुं दुःशकं तथापि मूलोक्तास्त्वेकस्यैव पूर्वतमस्य दृश्यन्ते समस्वारस्यात् । कश्चित्कालिदासगुणग्राही एवं वदति स्म-

माहिषं दधि सशर्करं पयः कालिदासकविता नवं वयः ।
ईशभक्तिरबला च कोमला संभवतु मम जन्मजन्मनि ॥

१९ अयं महाकविरपि कालिदाससमयासन्नकालिक एव । केनचित्सत्यमुक्तम्-

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ।

२० अयं ख्रिस्ताब्दस्य चतुर्थशतकोत्तरार्धकालिकः ।

कीर्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला ।
सागरस्य परं पारं कपिसेनेव सेतुना ।

२१ अयं षष्ठशतककालीनः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सुबन्धुकविना[२२] वासवदत्ताख्यायिकोत्तमा ॥ ९ ॥
श्रीधावकेन कविना हर्षनाम्ना[२३] विनिर्ममे ।
रत्नावली तथा नागानन्दनाटकमुत्तमम् ॥ १० ॥
बाणः[२४] कादम्बरीं चक्रे तथा हर्षचरित्रकम् ।
श्रीपार्वतीपरिणयं मयूरः[२५] शतकं तथा ॥ ११ ॥
मालतीमाधवं चक्रे महावीरचरित्रकम् ।
उत्तररामचरितं भवभूतिर्[२६]महाकविः ॥ १२ ॥
वाक्पतिराजकविना[२७] काव्यं गौडवधाभिधम् ।

---

जानकी हरणं कर्तुं रघुवंशे स्थिते सति ।
कविः कुमारदासश्च रावणश्च यदि क्षमः ॥

२२ एनं कविवरमेनत्कृतिमुखेन बाणभट्ट एवं प्रशशंस--

कवीनामगलद्दर्पो नूनं वासवदत्तया ।
शक्त्यैव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥

२३ अयं स्थाण्वीश्वरकुरुक्षेत्राधिपतिः ६०६ ख्रिस्ताब्दासन्नकालिकः । बाणभट्टेन श्रीहर्षचरितेऽस्यैव जीवनचरितं लिखितम् ।

२४ अयं गद्यकविः सुप्रसिद्धहर्षवर्धनस्यैव प्रधानपण्डित आसीत् ।

हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः ।
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम् ॥

२५ अयं बाणभट्टस्य श्यालः ।

तावत्कविविहङ्गानां ध्वनिर्लोकेत्र शस्यते ।
यावन्न विशति श्रोत्रे मयूरमधुरध्वनिः ।

२६ करुणारसप्रधानोऽयं कविः ख्रिस्ताब्दस्य सप्तमशतकोत्तरार्धे बभूव ।

भवभूतेः सम्बन्धाद्भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥

२७ अयमपि भवभूतिसमानकालिकः । यतो द्वावपीमौ यशोवर्मसभापण्डितावास्ताम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रत्नाकरेण[28] रचितं रुद्रविजयमुत्तमम् ॥ १३ ॥
विशाखदत्तः[29] कृतवान् मुद्राराक्षसनाटकम् ।
माघो[30] महाकविः काव्यं शिशुपालवधाभिधम् ॥ १४ ॥
मूकः[31] पंचशतीं चक्रे अमरुः[32] शतकं तथा ।
श्रीरामचरितमभिनन्दे[33]नाकारि यत्नतः ॥ १५ ॥
भट्टनारायण[34]श्चक्रे वेणीसंहारनाटकम् ।
बालरामायणं श्रीमत्कवीन्द्रो राजशेखरः[35] ॥ १६ ॥
सोमदेवः[36] कथासरित्सागरं विदधे कविः ।

---

२८ अयं महाकाव्यर्नवमशतककालिकः ।
मास्म सन्तु हि चत्वारः प्रायो रत्नाकरा इमे ।
इतीव सत्कृतो धात्रा कविरत्नाकरोऽपरः ॥
हरविजयमहाकवेः प्रतिज्ञां शृणुत कृतप्रणयो मम प्रबन्धे ।
अपि शिशुरकविः कविप्रभावाद्भवति कविश्च महाकविः क्रमेण ॥
२९ अयमपि नवमशतकपूर्वार्धे बभूव ।
३० गुर्जरदेशोद्भवोऽयं महाकविः नवमशतकमध्यभागेऽभूत् ।
माघेन विघ्नितोत्साहा न क्रमन्ते पदक्रमे ।
स्मरन्तो भारवेरेव कवयः कपयो यथा ॥ ३१ अयमपि ।
३२ अमरुरूपधारी शङ्कराचार्यः—
यदि स्यात्परमानन्दे कामानन्दे च वासना ।
तदा संसेव्यतां काव्यममरुशतकं बुधाः ॥
३३ अयं नवमशतकोत्तरार्धे बभूव ।
कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च ।
अन्ये कवयः कपयः चापलमात्रं परं दधति ॥
३४ अयं नवमशतकपूर्वार्धकालीनः कान्यकुब्जब्राह्मणश्च ।
३५ अयमपि तत्कालीन एव । अस्यान्येऽपि ग्रन्थाः सन्ति विद्धशालभंजिकादयः ॥
३६ एतत्काले बृहत्कथासद्भाव आसीदितिनातिच्छन्नं यतोऽयं बृहत्कथामेव संस्कृतेऽनूद्य कथासरित्सागरं कृतवान् । कथासरित्सागरे १२४ कथाः सन्ति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



महाकविरनन्ताख्यः चम्पूभारतमुत्तमम् ॥ १७ ॥
अनर्घराघवं चक्रे कवीन्द्रेण मुरारिणा[37] ।
हनुमन्नाटकं दामोदरमिश्रेण[38] धीमता ॥ १८ ॥
चम्पुरामायणं भोजराजेन[39] कविना तथा ।
द्व्याश्रयं च महाकाव्यं हेमचन्द्रेण[40] निर्ममे ॥ १९ ॥
विक्रमाङ्कचरित्रं श्रीविह्लणेन[41] विनिर्मितम् ।
दशावतारचरितं क्षेमेन्द्रकविना[42] तथा ॥ २० ॥
कृष्णः[43] प्रबोधचन्द्रोदयं[44] चक्रे प्रयत्नतः ।
भल्लटः[45] शतकं क्षेमश्वरः[46] श्रीचण्डकौशिकम् ॥ २१ ॥
आर्यासप्तशतीं चक्रे गोवर्धनकवीश्वरः[47] ।
जयदेवकविर्गीतगोविन्दं[48] काव्यमद्भूतम् ॥ २२ ॥
राघवपांडवीयं च कविराजो[49] विलक्षणम् ।

---

३७ अस्य कवे रामचरित्रस्यातिविचित्रभङ्ग्या वर्णनेन बालवाल्मीकिनामाभूत् । स कविरेवंभूतार्थमुक्तवान्—

देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लंघित एव वानरभटैः किन्त्वस्य गंभीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥

३८ अयं भोजराजसभापंडितः ।

३९ कविशकुन्तकल्पतरुर्भूपालरत्नं भोजदेवस्तु दशमशतकोत्तरार्धभागे धारानगरीमधितिष्ठति स्म ।

४० अयं ११ शतककालीनः ।

४१ काश्मीरजन्मायं कविरेकादशशतकमध्यकालीनः ।

४२ बृहत्कथामंजर्यादिकर्ता ।

४३ कृष्णमिश्रोऽपि ११ शतकोत्तरार्धकालीनः । ४४ दर्शनीयम् । ४५ अयमपि च । ४६ एषोऽपि तत्कालीन एव । ४७ अयं द्वादशशतकपूर्वार्धे बभूव । ४८ अयमपि च । ४९ एषोऽपि च । एतेषां समानकालिकत्वमेकः श्लोकोऽपि कथयति—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



श्रीवासुदेवविजयं वासुदेवः[50] प्रणीतवान् ॥ २३ ॥
शूद्रको मृच्छकटिकं शंखो[51] लटकमेलकम् ।
श्रीकण्ठचरितं काव्यं कविर्मङ्खो[52] विनिर्ममे ॥ २४ ॥
विष्णुभक्तिकल्पलताकाव्यं श्रीपुरुषोत्तमः[53] ।
अकृताभयदेवश्च जयन्ताविजयं तथा ॥ २५ ॥
सारङ्गदेवः[54] संगीतरत्नाकरमकल्पयत् ।
संगीतपारिजातं श्रीमानहोबलपण्डितः[55] ॥ २६ ॥
श्रीहर्षः[56] काव्यमतुलं नैषधाख्यं महाकविः ।
कृष्णानन्दः[57] सहृदयानन्दं काव्यमरीरचत् ॥ २७ ॥
विष्णुशर्मा[58] पंचतन्त्रं नलचम्पूं त्रिविक्रमः ।
चकार बालकृष्णाख्यां चम्पूं जीवनपण्डितः ।

---

गोवर्धनश्च शरणो जयदेव उमापतिः ।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥
जयदेवेनापि गीतगोविन्दे स्वसमानकालिकाः कवयोऽस्मारिषत ।
५० अयं द्वादशशतकोत्तरार्धकालिकः ।
५१ शङ्खधरः । अस्येदं प्रहसनं दर्पणादौ सुप्रसिद्धमेव ।
५२ राजानकरूय्यकशिष्यः । एतौ द्वावपि वासुदेवसमानकालीनौ
५३ साहित्यदर्पणकारेणायमेव पुरुषोत्तमो नवमपरिच्छेदे स्मृतो भवेत् । ५४ अस्येमं ग्रन्थं राघवभट्टो बहुत्रस्थलेऽर्थद्योतनिकायां शाकुन्तलानाटकटीकायामुदाजहार ।
५५ अस्येमं ग्रन्थं मल्लिनाथोऽपि यत्रतत्रोदाहरति स्म ।
५६ खण्डनखाद्यकर्तायं श्रीहर्षोऽसाधारणकवित्वेनागाधपाण्डित्येन च 'नरभारती' पदं प्राप । अस्यैतद्ग्रन्थविषये केनचिदुक्तम्—
तावद्भा भारवेर्भाति यावन्माघस्य नोदयः ।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः ॥
५७ श्रीहर्षकृष्णानन्दौ द्वावपि द्वादशशतककालिकौ ।
५८ अस्य समयः सम्यङ् न ज्ञायते माघकवेरर्वाचीन इति तु व्यक्तम्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शृङ्गारतिलकं रुद्रः कह्लणश्च तरङ्गिणीम् ॥ २८ ॥
मल्लिकामारुतं नाम उद्दंडकविनायकः ।
प्रसन्नराघवं चक्रे जयदेवसुधीवरः ॥ २९ ॥
जगद्धरः स्तुतिकुसुमांजलिं काव्यमातनोत् ।
राजानको जयरथो हरचिन्तामणिं तथा ॥ ३० ॥
कर्णपूरकविः चैतन्यचन्द्रोदयनाटकम् ।
रामचन्द्रोऽकृत सत्यहरिश्चन्द्राख्यनाटकम् ॥ ३१ ॥
प्रणिनाय चिरंजीवो विद्वन्मोदतरङ्गिणीम् ।
शङ्करदिग्विजयं च श्रीविद्यारण्यः सुधीवरः ॥३२॥
विदग्धमाधवं रूपगोस्वामी पर्यकल्पयत् ।
भीमो रावणार्जुनीयं द्विसंधानं धनंजयः ॥३३॥
श्रीनीलकण्ठविजयं नीलकण्ठो महाकविः ।
जगन्नाथकविर्भामिनीविलासं विनिर्ममौ ॥३४॥

---

५९ राजतरङ्गिणीम् ।

६० ६१ इमौ द्वावपि त्रयोदशशतकमध्यकालीनौ ।

६२ चतुर्दशशतकमध्यभागेऽयमभूत् ।

६३ ६४ इमौ द्वावपि पञ्चदशशतककालिकौ ।

६५ अस्मिन् गद्यपद्यात्मके निबंधे काव्यसरणिमवलंब्य दर्शनमतानि विवृतानि न्यायदर्शनस्य च प्राधान्यमुपदर्शितम् ।

६६ भगवत्पादशङ्कराचार्यस्य जीवनचरित्ररूपम् ।

६७ माधवाचार्यापरनामा ।

६८ अयं षोडशशतकोत्तरार्धकालिकः ।

६९ भीमभट्टोऽयं काश्मीरिकः । ७० धनंजयश्रेष्ठी ।

७१ अयमपि च सप्तदशशतकपूर्वार्धकालिकः । कुवलयानन्दादिकर्त्रप्पयदीक्षितपौत्रश्च ।

७२ दिल्लीपति–यवनसार्वभौम–शहाजहानतो लब्धपण्डितराजपदवीकोऽयं जगन्नाथपण्डितः सप्तदशशतकमध्यभागे बभूव । सकविरेवंभूतार्थमाह—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चम्पूं विश्वगुणादर्शं विदधे वेङ्कटाध्वरी ।
श्रीनिवासविलासं श्रीवेङ्कटेशकविस्तथा ॥३५॥
पतंजलिचरित्रं श्रीरामभद्रः प्रणीतवान् ।
उपाध्यायो हरिहरः भर्तृनिर्वेदनाटकम् ॥३६॥
राष्ट्रौघवंशकाव्यं श्रीरुद्रः कविपदाङ्कितः ।
पृथिवीराजविजयं जोनराजो विनिर्ममे ॥ ३७ ॥
अलिविलासिसंलापं शास्त्री गङ्गाधरोऽकृत ।
चन्द्रशेखरकाव्यं श्रीदुःखभञ्जनपंडितः ।
देवीप्रसादकविता लक्ष्मीनारायणं तथा ॥३८॥

---

कवयति पण्डितराजे कवयन्त्यन्येपि विद्वांसः ।
नृत्यति पिनाकपाणौ नृत्यन्त्यन्येपि भूतवेतालाः ॥

७३ अयं वेङ्कटाध्वरी कवी रामानुजमतानुयायी, काञ्चीपुरीसमीपे 'अर्शनफल' नाम्न्यग्रहारे प्रतिवसति स्म । अस्य समयः सप्तदशशतकोत्तरभागासन्नः ।

७४ अयं रामभद्रदीक्षितोपि सप्तदशशतकोत्तरार्धकालिक एव ।

७५ अयमष्टादशशतकासन्नकालीनो मैथिलश्च प्रतिभाति । अनेन हरिहरसुभाषितमपि निरमीयत ।

७६ ७७ इमावप्यर्वाचीनौ प्रतिभातः ।

७८ नवशतकविभक्ते सहस्रपद्यात्मकेऽस्मिन्निबन्धे किं किं प्रतिपादितमिति ग्रन्थकृदुक्त्यैव तावद्दर्शयामः--

वैषयिकब्रह्मविदोः पूर्वोत्तरपक्षशिक्षणे दाक्ष्यम् ।
व्यक्त्या विवेक्तुकामैर्दृश्योऽसावलिविलासिसंलापः ॥

७९ कश्चिदेतच्छिष्य एवमाह स्म--

गतार्थोऽद्य जगन्नाथो गतार्थश्चाप्यदीक्षितः ।
कटुवाग्वेङ्कटार्योऽपि सति गङ्गाधरे गुरौ ॥
एतत्स्थितिकालस्तु १९६५ संवदासन्नः ।

८० संप्रति वर्तमानः ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अखिलानन्दकविना[८१] वेदसिद्धान्तवर्णनम् ।
सुलतानचरित्रं[८२] मे छज्जुरामेण[८३] निर्मितम् ॥३९॥
चक्रे दुर्गाप्रसादेन[८४] देवराजचरित्रकम् ।
चतुर्वेदगिरिधरेण[८५] महाकाव्यसंग्रहः ॥४०॥
पुरा स्त्रियोऽपि कवितां कुर्वन्ति स्म विलक्षणाम् ।
निदर्शनं शिला[८६] तत्र विजयाथ[८७] च विज्जका[८८] ॥ ४१ ॥

इति चतुर्थो विलासः ।

---

माता रामरतिर्यस्य पिता श्रीदुःखभञ्जनः ।
सोऽयं देवीप्रसादाख्यः कविर्विजयतेतराम् ॥

८१ सम्प्रति वर्तमानेन ।

कविरत्नद्वयमद्याप्यखिलानन्दश्च छज्जुरामश्च ।
कविताशुणनिपुणः कं मन्ये नरं न रंजयति ॥

८२ सुलतानचरित्रस्य प्रादुर्भूते भुवस्तले ।
केषां कवीनां मनसो दिदृक्षा प्रसभं नहि ॥

८३ स्वतन्त्रा सर्वतन्त्रेषु यस्य धीरवगाहते ।
नमस्तस्मै छज्जुरामकविरत्नाय शास्त्रिणे ॥

इति सुलतानचरित्रकाव्यटीकायां नेकीराम-रामकृष्णभट्टौ ।

८४ ८५ सम्प्रति वर्तमानाभ्यां महामहोपाध्यायाभ्यां ।

८६ शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते ।
शिला भट्टारिका वाचि बाणोक्तिषु च सा यदि ॥

८७ सरस्वतीव कार्णाटी विजयाङ्का जयत्यसौ ।
या वैदर्भगिरां सारं कालिदासादनन्तरम् ॥

८८ नीलोत्पलदलश्यामां विज्जकां मामजानता ।
वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



## साहित्यादिग्रन्थकर्तृपरिचयः

अथ तत्रभवान्नाट्यशास्त्रं श्रीभरतो[1] मुनिः ।
वात्स्यायनमुनिः कामसूत्राणि च विनिर्ममौ ॥ १ ॥
काव्यालंकारनामानं ग्रन्थमाचार्यभामहः ।
तथाभट्टोद्भटश्चक्रे काव्यालंकारसंग्रहम् ॥ २ ॥

---

१ अयं मुनिस्त्रेतायुगीयः । एतदुपज्ञनाट्यशास्त्रस्योपर्यभिनवगुप्तपादाचार्यकृताभिनवभारतीतिसमाख्या व्याख्यापि वर्तते ।

२ अयमाचार्य आलङ्कारिकेषु प्रथमो गण्यते । यथाह रूप्यकः—'इह हि तावद् भामहोद्भटप्रभृतय आलंकारिकाः' । प्रभृतिना दण्ड्यादय इति जयरथः । अस्यायं काव्यालङ्कारनामा प्रबन्धः सलक्ष्यलक्षणः षट्परिच्छेदात्मकः । तदेतदुक्तं तेनैव—

अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्ष्म ।
सुजनावगमाय भामहेन ग्रथितं रक्रिलगोमिसूनुनेदम् ॥

षष्ठ्या शरीरं निर्णीतं शतषष्ठ्या त्वलंकृतिः ।
पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः ॥
षष्ठ्या शब्दस्य शुद्धिः स्यादित्येवं वस्तुपञ्चकम् ।
उक्तः षड्भिः परिच्छेदैः भामहेन क्रमेण यः ॥

कदा कुत्रायं बभूवेति निर्णेतुं यद्यपि दुःशकं तथापि भाष्यकारपतंजलेरधस्तनो विदर्भदेशीयश्चेति ज्ञायते ।

३ अयं काश्मीराधिपतेर्जयापीडस्य सभापतिरासीत् ।

विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः ।
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥

इति राजतरङ्गिणी । जयापीडसमयस्तु ७८६ ख्रिस्ताब्दासन्नः । अनेन भामहालङ्कारस्य विवरणमपि कृतमिति प्रतीहारेन्दुराजलेखतो ज्ञायते ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



काव्यादर्शं व्यधत्ताथ कवीन्द्रो दण्डिपंडितः[4] ।
काव्यालंकारमथ च ग्रन्थमकृत रुद्रटः[5] ॥ ३ ॥
काव्यालंकारसूत्राणि वामनाचार्यपंडितः[6] ।
मुकुलः[7] कृतवान् विद्वानभिधावृत्तिमातृकाम् ॥ ४ ॥
आनन्दवर्धनो[8] ध्वन्यालोकं ग्रन्थमरीचत् ।
कृतवान् काव्यमीमांसां राजशेखरपंडितः[9] ॥ ५ ॥
वक्रोक्तिजीवितं नामाचार्यकुन्तकपंडितः[10] ।

---

४ अयं कविपण्डितो दण्डी नवमशतकासन्नकालीनो विभाव्यते। यतो नवमशतकीयमाघकवेः 'पतत्पतङ्ग' इति पद्यमुदाजहार। काव्यग्रन्थेषु माघकवेः पूर्वं भ्रमाल्लिखितः। एतत्कृता ग्रन्थास्तु राजशेखरोक्तेस्त्रयः प्रतीयन्ते—

त्रयोऽग्नयस्त्रयो देवास्त्रयो वेदास्त्रयो गुणाः ।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥
ते च दशकुमारचरितकाव्यादर्शादयः ।

५ अयं नवमशतकासन्नकालीनो रुद्रटो वामकभट्टपुत्रः शृङ्गारतिलककर्तृ रुद्राद्भिन्नश्च ।

६ अयं भवभूतरधस्तनो यतो भवभूतिकृतमहावीरचरितस्य 'दोर्दण्डाञ्चितचन्द्रशेखरधनु'रिति पद्यमुदाजहार। भवभूतिसमयस्तु प्राङ् निर्णीतः।

७ भट्टकल्लटपुत्रेण मुकुलेन निरूपिता ।
सूरिप्रबोधनायेयमभिधा वृत्तिमातृका ॥

८ अयं नवमशतकोत्तरार्धकालिकः।
ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना ।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ॥

९ बालरामायणादिकर्ता ।

१० अयमालङ्कारिको वक्रोक्तिकारनाम्नापि ख्याप्यते ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्यक्तिविवेकमकरोन्माहिमो[11] महिमान्वितः ॥ ६ ॥
आचार्याभिनवगुप्तो[12] ध्वन्यालोकस्य लोचनम् ।
शौद्धोदनिरलंकारसूत्राण्यथ विनिर्ममौ ॥ ७ ॥
दशरूपकनामानं ग्रन्थरत्नं धनंजयः[13] ।
धनिको[14] दशरूपस्यालोकं चक्रे प्रयत्नतः ॥ ८ ॥
वाग्भटो वाग्भटालंकारं च काव्यानुशासनम् ॥
भोजः सरस्वतीकंठाभरणं[15] कृतवान्नृपः ॥ ९ ॥
मम्मटभट्ट[16] आतेने काव्यप्रकाशमुत्तमम्[17] ।

---

११ अयं राजानकमहिमाचार्यः खिस्ताब्दस्यैकादशशतकारंभे काश्मीरदेशे बभूव । महाविद्वांसमेनं खण्डनखाद्यस्य चतुर्थे परिच्छेदे श्रीहर्षो विद्वानेवं प्रशशंस-

दोषं व्यक्तिविवेकेऽमुं कविलोकविलोचने ।
काव्यमीमांसिषु प्राप्तमहिमा महिमाहृतः ॥

व्यक्तिविवेककरणप्रयोजनं स स्वयमाह स्म--

अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम् ।
व्यक्तिविवेकं कुरुते प्रणम्य महिमापरां वाचम् ॥

१२ अयं दशमशतकासन्नकालीनः काश्मीरिकश्च । एतत्प्रणीता ग्रन्थाः सप्तदशासन्नाः ।

१३ अयं विष्णुतनूजो मुंजभूपतिसभायामासीत् । यतः स स्वयमाह स्म-

विष्णोः सुतेनापि धनंजयेन विद्वन्मनोरागनिबंधहेतुः ।
आविष्कृतं मुंजमहीशगोष्ठीवैदग्ध्यभाजा दशरूपमेतत् ॥

मुंजभूपतिसमयस्तु खिस्ताब्दस्य नवमशतकोत्तरभागः ।

१४ धनिकोऽपि धनंजयस्य सहोदरत्वात्समानकालिकः ।

१५ भोजस्येदं सरस्वतीकण्ठाभरणं नवीनविचारविकलमनतिप्रयोजनीयविषयविस्तीर्णमपि काव्यप्रकाशात्पूर्वमालंकारिकाणां कण्ठाभरणमेवाभूत् ।

१६ राजानको मम्मटाचार्यो द्वादशशतकपूर्वार्धे काश्मीरदेशे बभूव

१७ अस्मिन् ग्रन्थे सर्वालंकारशास्त्रीया शिक्षा परिसमाप्यते ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



आचार्यहेमचन्द्रश्च काव्यानुशासनं[18] तथा ॥ १० ॥
रूय्यकः[19] पंडितोऽलंकारसर्वस्वमथाकरोत् ।
भट्टशोभाकरो[20]ऽलंकाररत्नाकरमद्भुतम् । ११ ॥
शौद्धोदनिप्रणीतानां सूत्राणां कवितार्किकः ।
व्याख्यानं केशवश्चक्रेऽलंकारशेखराभिधम् ॥ १२ ॥
चन्द्रालोकं जयदेवः[21] कृतवान्विदुषां मुदे ।
महाकविर्जयरथो[22] ह्यलंकारविमर्षिनीम् ॥ १३ ॥
भानुदत्तेन[23] रसमंजरी रसतरंगिणी ।
काव्यकल्पलता[24]श्रीमदरिसिंहेन निर्मिता ॥ १४ ॥
कविकल्पलतां[25] देवेश्वरो विद्वान् प्रणीतवान् ।
भूरिपरिश्रमाद् विद्याधर एकावलीं[26] तथा ॥ १५ ॥
साहित्यदर्पणं[27] ग्रन्थमन्वर्थाभिधमातनोत् ।

---

अत एवास्य पञ्चाशदासन्नाः टीकाः सन्तीति दिक् ।

१८ इदं काव्यप्रकाशानुसारि ।

१९ राजानकसंज्ञकोऽयं रूप्यकः काश्मीरेषु द्वादशशतकासन्नपूर्वभागे बभूव ।

२० अयमपि काश्मीरिकः ।

२१ एतत्समयादिकं प्राङ् निर्णीतम् ।

२२ अयमपि काश्मीरिको राजानकसंज्ञकश्च ।

२३ अयं मैथिलः ।

२४ इयं श्लोकरचना प्रकारदर्शिका ।

२५ इयमपि च ।

२६ अस्य ग्रन्थस्योपरि सुप्रसिद्धकोलाचलमल्लिनाथसूरिणां तरलाख्या व्याख्या वर्तते ।

२७ अयं ग्रन्थो यद्यपि काव्यप्रकाशापेक्षया द्वितीयकोटौ गण्यते तथापि यावदुपयुक्तकाव्यशिक्षाधायकत्वाद्दर्पण एव वस्तुतः साहित्यशास्त्रस्य उक्तं च समाप्तौ–'साहित्यदर्पणममुं सुधियो विलोक्य साहित्यतत्त्वमखिलं सुखमेव वित्तेति' ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

विश्वनाथ[28]महापात्रं कविराजपदांकितः ॥ १६ ॥
चक्रे शार्ङ्गधरः[29] शार्ङ्गधरपद्धतिमात्मनः ।
श्रीमन्दारमरन्दं च कृष्णः[30] कविपदांकितः ॥ १७ ॥
काव्यप्रदीपमातेने गोविन्दः[31] ठक्कुरः सुधीः ।
तथा प्रताप[32]रुद्रीयं विद्यानाथः[33] सुधीवरः ॥ १८ ॥
प्रणिनाय धर्मदासो[34] विदग्धमुखमंडनम् ।
हृद्यं कुवलयानन्दं पंडितेन्द्राप्यदीक्षितः[35] ॥ १९ ॥
रसगंगाधरं[36] लेभे तर्ककर्कशमात्मनः ।
पंडितेन्द्रो जगन्नाथशर्मा निर्माय सद्यशः ॥ २० ॥
साहित्यकौमुदीं विद्याभूषणं बलदेवकः[37] ।

---

२८ अयं खिस्ताब्दस्य चतुर्दशशतकपूर्वार्धे बभूव ।

२९ अयं चतुर्दशशतकोत्तरार्धकालिकः ।

३० अयं पंचदशशतकोत्तरभागे बभूव ।

३१ अयमपि पञ्चदशशतकोत्तरार्धासन्नकालीनः ।

३२ अस्य रत्नापणाख्या व्याख्या मल्लिनाथसूरिसूनुकुमारस्वामिना कृतास्ति ।

३३ अयं सप्तदशशतकासन्नकालीनः । मल्लिनाथसूरिसमयोप्येतदासन्न एव पतति ।

३४ अयं साहित्यदर्पणविवृतिकाररामचरणतर्कवागीशतः किञ्चिदेव प्राक्तनः । यतस्तद्ग्रन्थस्य चर्चा रामचरणग्रन्थात्प्राग्भवे नास्ति । रामचरणसमयस्तु १६२२ शकाब्दः ।

३५ अस्याप्यदीक्षितस्य पण्डितराजजगन्नाथसमानकालिकत्वमवसीयते । यतस्तेन शयानं पंडितराजं प्रतीदमुक्तं—

किं निःशंकं शेषे शेषे वयसि त्वमागते मृत्यौ ।
अथवा सुखं शयीथाः जननी जागर्ति जान्हवी भवतः ॥

जगन्नाथसमयस्तु प्राङ् निर्णीतः ।

३६ अत्रग्रन्थे साहित्यविषयिणी केवलं विचारचर्चा ।

३७ अयं चैतन्यमहाप्रभुभक्तः । अष्टादशशतककालीनः ।

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.
CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विश्वेश्वरकृती[३०] चक्रे स्वमलंकारकौस्तुभम्[३१] ॥ २१ ॥
साहित्यसारमकृताच्युतरायसुधीवरः ॥
शिवरामो रसरत्नहारमत्यन्तसुन्दरम् ॥ २२ ॥
निर्ममे कान्तिचन्द्रेण संगृह्य काव्यदीपिका ॥
साहित्योद्देशसंदर्भः श्रीसीतारामशास्त्रिणा ॥ २३ ॥
धर्मक्षेत्रे कुरुक्षेत्रे लावलाग्रामवासिना ॥
विद्यासागरशब्दांक-छज्जुरामेण शास्त्रिणा ॥ २४ ॥
ग्रन्थकर्तृपरिचयः प्रवंधो विदुषां कृते ॥
कृतो भूरिश्रमात्तेन प्रीयतां शिवया शिवः ॥ २५ ॥

इति पंचमो विलासः ॥



---

३८ अयमेकोनविंशतिशतकमध्यभागे वभूव ।
३९ दुरूहोऽयं ग्रन्थोधीततर्केणालंकारिकेण वोद्धुं शक्यते ।
४० अयं ग्रंथो विषयसंकलनैकतात्पर्यो दुरूहरचनश्च ।
४१ विंशतिशतकवर्तमानेन ।
४२ संप्रति वर्तमानेन ।

यद् ग्रंथविस्तरे लोक आलस्यान्न प्रवर्तते ॥
तद्ग्रन्थस्यास्य संक्षिप्ता मयैवाकारि टिप्पणी ॥ १ ॥

इति कविरत्न पं० छज्जुरामशास्त्रिविद्यासागरविरचितं
ग्रन्थकर्तृपरिचयकाव्यं सटिप्पणं समाप्तम् ॥



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

सटीक सिद्धान्तमुक्तावल्या

# विषयानुक्रमः ।





CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विषयः पृष्ठे.



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विषयः | पृष्ठे.



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

विषयः | पृष्ठे.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.





॥ इति विषयानुक्रमः समाप्तः ॥



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ श्रीः ॥

# शुद्धिपत्रम ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| हेतुत्वादन्योन्या | हेतुतावदन्योन्या | २२ | १४ |
| कस्याप्यभावादित्यर्थः | कस्यापि न भावादित्यर्थः | २५ | १२ |
| यदस्मत्पतिः | यदस्मद्प्रतिः | ५० | १२ |
| कुतो नादरणीयम् | कुत आदरणीयम् | ६६ | ११ |
| दैशिकापरत्वापरत्व | तद्बुद्धेः दैशिकपरत्वापरत्व | ७२ | २१ |
| प्रवन्धाद्वा | प्रतिवन्धाद्वा | ७८ | २५ |
| दुर्मतिः | सद्दुर्मतिः | ८८ | १६ |
| सुखाद्याश्रयम् | चेष्टाद्याश्रयः | ८८ | २० |
| सुखादेः | चेष्टादेः | ८८ | २२ |
| मन्येत | न मन्येत | ९० | १८ |
| हेतुत्वमुपेयम् | हेतुतत्वमुपयम् | १०१ | २५ |
| योगिज | योगज | ११३ | २३ |
| भवतास्मृति | भवतोपमिति | १५३ | १६ |
| साधुभिर्भाषितव्यम् | साधुत्वे भाषितव्यम् | १५६ | १८ |
| संवंधिनिकाकादौ | संवंधिनं.कादौ | १६८ | २७ |
| दविशिष्टत्वम् | तत्पदविशिष्टत्वम् | १८१ | ९ |
| सुखदुःखोत्पाद | सुखदुःखबुद्ध्युत्पाद | २३६ | १४ |
| नन्दन | ननून | २४१ | १७ |
| ग्रन्थकृता | ग्रन्थकृतां | २६२ | २० |
| पारेशीलितं कक्ष्पते | परिशीलितं लक्ष्यते | २६२ | २० |

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

# विशेष-सूचना ।

हमारे यहां हर तरह की संस्कृत पुस्तकें मै भाषा टीका के हरवक्त तैय्यार रहती हैं इसके अलावे हर तरह की छपाई तथा जिल्द के बंधाई का कार्य भी होता है।



नीचे लिखे पते पर पत्र व्यवहार करें।

**जयकृष्णदास-हरिदासगुप्तः-**

**चौखम्बा संस्कृत सीरीज आफीस ।**

विद्याविलास प्रेस, गोपालमंदिर लेन ।

बनारस सिटी ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ श्रीः ॥

❀ सिद्धान्तमुक्तावली ❀

# मूलचन्द्रिकोपेता ।

## प्रत्यक्षखण्डम् १ ।

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

विवृतिः ।

या सम्यग् विधिविधुशङ्करैर्न बुद्धा
शुद्धान्तर्यतिभिरथो न किञ्चिदेव ।
सानन्दं विहरति या गृहे मणीनां
भव्यार्थं भवतु ममाद्य साद्यदेवी ॥ १ ॥
वाचा हृदा च वपुषा च यथाविधान-
माराधितो यदि मया भगवान् गणेशः ।
विघ्नान्निहत्य कृपया कृपणस्य सद्यः
साहाय्यमद्य कुरुतान्मम साध्यसिद्धौ ॥ २ ॥
धर्मक्षेत्रे कुरुक्षेत्रे लःवलाग्रामवासिना ।
पण्डितछज्जुरामेण शास्त्रिणा शिवसेविना ॥ ३ ॥
पूर्ववर्तिप्रकाशेन ये मूलं बोद्धुमक्षमाः ।
तेषां मनोविनोदाय विवृतिः क्रियते मुदा ॥ ४ ॥
दूरान्मात्सर्यमुत्सार्य कृपां कृत्वा ममोपरि ।
पण्डितैरपि वीक्ष्येयं विवृतिर्मूलचन्द्रिका ॥ ५ ॥

अथ तत्रभवान् विश्वनाथन्यायपञ्चाननभट्टाचार्यो मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि झटिति प्रसिद्धानि भवन्तीत्यनुसन्धाय प्रारिप्सितप्रतिबंधकदुरितदूरीकरणार्थमादौ मङ्गलमाचरति—चूडामणीकृतविधुरिति । चूडामणिः—शिरोभूषणमचूडामणिः चूडामणिवत्सम्पद्यमानः कृत इति चूडामणीकृतः चूडामणीकृ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥ २ ॥

विवृतिः ।

तो विधुश्चन्द्रो येन स तथोक्तः । "विधुः सुधांशुरिति" चन्द्रनामस्वमरः । अत्राभूततद्भावे च्विः । वलयं—कङ्कणं "वलयः कण्ठरोगिण स्याद्वलयं कङ्कणेऽपि च" इति विश्वः । वासुकिर्नागराजः । शेषमुक्तरीत्या । ननु विधोश्चूडामणीकरणं वासुकेर्वलयीकरणं वा किमित्याशंकापनोदाय भवं विशिनष्टि—लीलेति । लीलया स्वाभाविक्या यत्ताण्डवं नृत्यं तत्र पण्डितो निपुणः । 'पण्डितो निपुणोऽभिज्ञः' इति वैजयन्ती । पण्डा बुद्धिः संजाताऽस्येति पण्डितः । तारकादित्वादितच् । भवः शिवो भव्याय कल्याणाय भवतु । 'संसृतौ च शिवे भव' इति नानार्थरत्नमाला । 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याचार्यदण्डिन उक्तेराशीराद्यन्यतमस्य निबन्धमुखलक्षणत्वाद्वस्तुनिर्देशात्मकमत्र मङ्गलमीश्वररूपवस्तुनिर्देशात् । आशीर्वादात्मकमत्र मङ्गलमाशीरर्थे लोड्विधानादिति संप्रदायः ॥ १ ॥

निजेति । स्पष्टम् । अतिसंक्षिप्ता विस्तृतिरहिता याः प्राचामाचार्याणामुक्तयस्ताभिस्ता आश्रित्येत्यर्थः । गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका । ननु प्राचीनग्रन्थाध्ययनेनैव कारिकावल्युक्तार्थस्य ज्ञानं भविष्यतीति किमनेन मुक्तावलीनव्यग्रन्थनिर्माणप्रयासेनेति शङ्काशमनार्थमेवातिसङ्क्षिप्तचिरन्तनेत्युक्तं भवति । पदद्वयमिदं प्रकृतग्रन्थस्येतरग्रन्थेभ्यो गतार्थत्वं निर्मूलत्वं च वारयति । न ह्यतिविस्तृतग्रन्थोऽधुनाद्रियते न वा प्राचीनमतावलम्बनं विना नव्यग्रन्थः श्रद्धेय इति भावः । विशदीकरवाणीति । निजनिर्मितस्य कारिकावलीग्रन्थस्य विशदीकरणं तु ग्रन्थप्रचारार्थं शिष्यबुद्धिवैशद्यार्थं वा बोध्यम् । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति भट्टपादोक्तमनुसन्धाय वैदुष्यप्रदर्शनादिजन्यकीर्त्यादिफलसत्त्वेऽपि मुख्यतः स्वप्रवृत्तेः फलमेतदेव दर्शयति—राजीवेति । शिष्यदयावशंवद इति वक्तव्येऽपि नामोत्कीर्तनमतिप्रेमाभिव्यंजकम् । कौतुकान्नु कौतुकादेव न प्रयासादित्यर्थः । एतेन प्रकृतग्रन्थकरणे मम क्लेशलेशोऽपि नासीदिति ध्वनितम् ॥ २ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताऽभावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥

विवृतिः ।

सद्द्रव्येति । नवभिर्द्रव्यैः सहितेत्यर्थः । गुणाश्चतुर्विंशती रूपादयस्तैर्गुम्फिता । सतामुत्क्षेपणादीनां पञ्चकर्मणां ज्ञापिका बोधयित्री । सज्जातिरूपं सामान्यम्, विशेषान्नित्यमभावं च ग्रन्थकृदेवाभिधास्यतीत्यलं लेखकलिलेन । सद्युक्तिः—सत्यः सत्यार्थप्रत्यायनसामर्थ्येन समीचीना दोषहीना वा युक्तयो यत्र सा । एतेनागमसिद्धमपि वस्तु युक्तिं विना न प्रेक्षावदपेक्षणीयं भवति नूतनविज्ञानोन्मीलितलोचनैस्तूपहसनीयं भवतीति सूचितम् । करिष्यमाणाया अपि मुक्तावल्या बुद्ध्या सन्निधापितत्वादेषा बुद्धिस्थेत्यर्थः । पूर्वं बुद्ध्याऽऽरूढीकृत्यैव लेखनसम्भवादिति भावः । स्वकीर्त्यनुवृत्तये स्वनाम ग्रन्थनाम चोपनिबध्नाति—विश्वनाथकृतिना सिद्धान्तमुक्तावलीति पदद्वयेन । 'वादिप्रतिवादिभ्यां निर्णीतोऽर्थः सिद्धान्तः' सिद्धान्तरूपाणां मुक्तानामावलीति सिद्धान्तमुक्तावली, इति ग्रन्थनामार्थः । विष्णोः सर्वव्यापकपरमेश्वरस्य वक्षस्युरसि 'वक्षो वक्षःस्थलमुरः' इति हारावली । विन्यस्ता—सप्रेमार्पिता, चिरमतिवेलम्, सुकृतिनामधीतव्याकरणादिशास्त्रानधीतचिन्तामण्यादिग्रन्थानां विदुषां मुदमूहापोहकुशलत्वरूपं सर्वविद्याप्रकाशनतारूपं वाऽऽनन्दं वितनुतां ददातु । तथा चेमामेव न्यायविद्यामुद्दिश्य न्यायभाष्यकृदाह—'प्रदीपः सर्वविद्यानाम्' इत्यादि । अत्रैव 'मूकस्तर्कविवर्जितः' इत्यादिलोकप्रसिद्धिरप्यनुकूला तर्कमूलत्वात्सर्वविद्यानामिति बहुधा स्फुरन्नपि न ग्रन्थगौरवभिया तद्गतविशेषोन्यासि । ग्रन्थकृता द्रव्यादिपदार्थवत्त्वेन रूपेण मुक्तावलीनिरूपितं साधर्म्यमुक्तम् । तथाहि—यथा मुक्तामाला द्रव्यसाध्या गुणेन सूत्रेण गुम्फिता पुण्यवत्सत्कर्मख्यापिका तथेयमपि । मालापक्षे सत्सामान्यं मुक्ताजातिर्विशेषो महत्वादिकमभावोऽन्धकारः प्रकर्षः प्रकाशः सङ्गतिरतिरोहितैव । सद्द्रव्येत्यादि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति नूतनेति ।

विवृतिः ।

ना द्रव्यादीनां विषयत्वं पदार्थतत्त्वज्ञानस्य प्रयोजनत्वं प्रतिपाद्यप्रतिपादकभावस्य सम्बन्धत्वं पदार्थतत्त्वजिज्ञासोरधिकारित्वमित्यनुबन्धचतुष्टयमपि दर्शितमुक्तं च भट्टपादैः—

विना विषयसम्बन्धौ तथैवार्थाधिकारिणौ ॥
अव्याख्येयो भवेत् ग्रन्थः स्याद् ग्रन्थे तच्चतुष्टयम् ॥ इति ॥ ३ ॥

विघ्नविघातायेति । प्रारिप्सितप्रतिबन्धकदुरदृष्टनाशार्थमित्यर्थः। कृतं बुद्ध्यानुष्ठितं वा प्राचीनाचार्यैः स्वस्वनिबन्धे कृतमत एवेहापि तदनुरोधेन कृतम्, एतेन स्वस्य पूर्वाचार्यानुकर्तृत्वमावेदितं न स्वतन्त्रत्वम् । मङ्गलं—विघ्ननाशकत्वेन कल्याणकारकमीश्वरनतिरूपम्, 'मङ्गलं मङ्गलाचारे मङ्गलो भूमिनन्दने' 'नपुंसकन्तु कल्याणे' इति विश्वमेदिन्यौ । अनेकार्थत्वाद्धातूनां गत्यर्थकान्मगिधातोरलच् । धातूनामनेकार्थत्वं भाष्ये निर्णीतम् । ननु विघ्नविघातस्तु कायिकेन मानसेन वा मङ्गलेनापि कर्तुं शक्य इति कथमाचार्येण कायिकं मानसं च मङ्गलं हित्वा वाचिकमेव 'तत्कृतमित्याशंक्याह–शिष्यशिक्षाया इति । मत्कृतमङ्गलं दृष्ट्वा मच्छिष्या अप्येवं कुर्युरित्यास्तिकतोपदेशनार्थमिति परमार्थः । निबध्नाति—लिखतीत्यर्थः । यत्तु प्रकाशकृतो विघातायेति पदं 'सकीचकैरिति' वद् व्याचख्युस्तच्चिन्त्यम्—

'धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते ।
तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा ॥

इति महदुक्तेर्विशेषेण घात इत्यर्थे ग्रन्थकृत्तात्पर्यात् । विशेषश्च मध्यावसानविघ्ननाशकत्वम् । उपसर्गाणां धातोश्च अनेकार्थत्वकल्पनापेक्षया केवलधातोरनेकार्थत्वकल्पने लाघवाच्च एवं सोपसृष्टस्यान्यार्थोऽपि धातोरेव कल्पनीयः—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणम्—विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेत्। न, अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात् उपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते। इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते। यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बल-

विवृतिः।

'सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते'

इति भगवत्जैमिन्युक्तेः। यदपि केचित्समादधुरुपसर्गाणां वाचकत्वमभिप्रेत्येदमुक्तमिति, तदपि नातिरुचिरम्—वस्तुतस्तूपसर्गाणां द्योतकतापक्षस्यैवाभ्युपगमादित्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षविक्षेपेण॥

व्यतिरेकव्यभिचारमभिप्रेत्य शंकां करोति–नन्विति। विघ्नध्वंसं प्रतीत्यादि। विघ्नध्वंससमाप्त्यन्यतरनिष्ठकार्यतानिरूपितकारणता मङ्गलनिष्ठा नास्तीत्यर्थः। एवं च मङ्गलं निष्फलं फलविशेषशून्यत्वादिति भावः। विनापि मङ्गलं–मङ्गलाचरणं विनैव, मङ्गलं विघ्नध्वंससमाप्ती प्रति कारणत्वाभाववत् कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वाद्घटं प्रति वेमवत् इति प्रयोगो व्यतिरेकव्यभिचारसाधक इत्यर्थः। निर्विघ्नपरिसमाप्तिदर्शनात्–विघ्नध्वंसपूर्वकसमाप्तेरनुभवात्। अविगीतेति। विगीतो निन्दितस्तद्भिन्नो यः शिष्टानां फलसाधनतांशे भ्रान्तिरहितानामाचारस्तद्विषयत्वेन, मङ्गलस्य–मङ्गलाचरणस्य, सिद्धेऽनुमिते, मङ्गलम् सफलमविगीतशिष्टाचारविषयत्वादिति प्रयोगादित्यर्थः। तत्र–मङ्गले, अन्याय्यत्वात्–दृष्टे तु नादृष्टमिति जैमिन्युक्तेरयुक्तत्वाद्गौरवग्रस्तत्वाच्चेत्यर्थः। उपस्थितत्वाच्चेति। उपस्थितं विहायानुपस्थितपरिकल्पने मानाभावाच्चेत्याशयः। कल्प्यतेऽनुमानतो ज्ञायते। इत्थं च–मङ्गलाचरणस्य समाप्तिफलकत्वाङ्गीकारे च। यत्र–नास्तिकादीनां ग्रन्थे, जन्मान्तरीयं–पूर्वजन्मानुष्ठितं, तत्–मङ्गलं, कल्प्यते–कार्यात्कारणमनुमेयमिति न्यायेन नास्तिका-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम्, प्रचुरस्यास्यैव बलवत्तरविघ्ननिवारणे कारणत्वम्। विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः।

नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्। न चैवं स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम्। इष्टापत्तेः, विघ्नशंकया तदाचरणात्, तथैव शिष्टाचारात्। न च तस्य निष्फलत्वे तद्बोधकवेदाप्रा-

विवृतिः।

दयो जन्मान्तरीयमङ्गलवन्तो ग्रन्थसमाप्तेरित्यनुमानाद् बुध्यते। यत्र—कादम्बर्यादौ। समाप्तिरिति। प्रारब्धग्रन्थस्येति शेषः। विघ्नप्राचुर्यमिति। कादम्बर्यादेर्मङ्गलेन बहुतरविघ्नानां नाशयितुमशक्यत्वात् समाप्तिर्न जातेति निष्कर्षः। अस्यैव—मङ्गलस्यैव। कारणत्वमिति। बलवत्तरविघ्नध्वंसनिष्ठकार्यतानिरूपितकारणतापि बलवत्तरमङ्गलनिष्ठैव बोद्धव्येति भावः। द्वारं प्रधानफलम्।

नव्याः-चिन्तामणिकृतो गङ्गेशोपाध्यायाः, इत्याहुरित्यग्रिमेणान्वयः। विघ्नध्वंस एवेति। न समाप्तिरपीत्येवकारार्थः। विघ्नध्वंसादृते न किञ्चिन्मङ्गलाचरणस्य प्रयोजनमिति भावः। बुद्धिप्रतिभादीति। 'बुद्धिर्धीः प्रतिभा मतिरिति' यादवकोशेन यद्यप्यासां पर्यायवाचकत्वमुक्तं तथाप्येष विशेषः—

बुद्धिस्तात्कालिकी ज्ञेया मतिरागामिगोचरा।
प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता॥

इतिभरतमुनिकृतोऽवश्यमभ्युपेयः। अन्यथाऽत्र बुद्धितः पृथक् प्रतिभालेखनं विश्वनाथस्य व्याकुप्येतेति दिक्। समाप्तिनिष्ठकार्यतानिरूपितकारणता तु बुद्धिप्रतिभादिकलापनिष्ठैवेत्यर्थः। एवं-विघ्नध्वंसनिष्ठजन्यतानिरूपितजनकताया मङ्गलनिष्ठत्वेपि स्वतः—सिद्धो यो विघ्नाभावस्तद्वता पुरुषेण कृतस्याचरितस्य, मङ्गलस्याशीर्वादाद्यन्यतमस्य, निष्फलत्वापत्तिः—वैयर्थ्यप्रसङ्गः। समाधानम्—इष्टापत्तेरिति। विघ्नशङ्कया तदाचरणादिति। विघ्नोऽस्ति न वेति संदिहानाः सर्वे किमपि प्रारिप्समाना मङ्गलमाचरन्त्येव मङ्गलं तु विघ्नसत्त्वे तं नाशयति तदभावे पुण्यं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



माण्यापत्तिरिति वाच्यम्। सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात्। अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम्। मङ्गलं तु विघ्नध्वंसविशेषे कारणम् विघ्नध्वंसविशेषे च विनायकस्तवपाठादि। क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनम्—प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात्। इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः स्वतः सिद्धविघ्नात्यन्ताभावो वास्तीति न व्यभिचार इत्याहुः॥

विवृतिः।

जनयतीति निष्कर्षः। तथैव शिष्टाचारादिति। इदमुपलक्षणं फलदर्शनात् श्रुतितश्चेत्यपि बोध्यम्—तथा च सांख्यसूत्रं 'मङ्गलाचरणं शिष्टाचारात्फलदर्शनाच्छ्रुतितश्चेति'॥ तद्बोधकवेदेति। मङ्गलविघ्नध्वंसयोः कार्यकारणभावबोधकवेदः 'समाप्तिकामो मङ्गलमाचरेत्' इत्याकारक इत्यर्थः। सति विघ्ने, न त्वसत्यपीत्यर्थः। तन्नाशस्य—विघ्ननाशस्य, पापभ्रमेण—पापबुद्ध्या। तद्बोधकेति। प्रायश्चित्तस्य पापनाशकताबोधकेत्यर्थः। विनायकस्तवपाठादिरिति। यथा विजातीयविघ्नध्वंसनिष्ठकार्यतानिरूपितकारणता मङ्गलनिष्ठास्ति तथैव विजातीयविघ्नध्वंसनिष्ठकार्यतानिरूपितकारणता विनायकस्तवपाठादिनिष्ठाप्यस्ति, परन्तु मङ्गलं ज्ञानविशेषरूपम् पाठस्तु कण्ठताल्वाद्यभिघातरूप इत्यनयोर्भेदः। क्वचित्-ग्रन्थादौ। विघ्नात्यन्ताभाव इति। विघ्नस्यात्यन्ताभावः त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकः, समाप्तिसाधनं-ग्रन्थसमाप्तिहेतुः। तत्र हेतुमाह—प्रतिबन्धकेति। प्रतिबन्धकः कार्यनिरोधकः कारणीभूताभावप्रतियोगीत्यर्थः यः संसर्गाभावोऽत्यन्ताभावरूपस्तस्यैव कार्यजनकत्वादिति—घटादिरूपकार्योत्पादकत्वस्याभ्युपगमादित्यर्थः। न व्यभिचारः। कारणाभावे कार्यभावरूपव्यतिरेकव्यभिचारावकाशोऽत्र नास्तीत्यर्थः॥

मूले नूतनेत्यादि। नूतनश्चासौ जलधर इति नूतनजलधरः वर्षोन्मुखत्वं नूतनत्वम्। तस्य रुचिरिव रुचिः कान्तिर्यस्येति बहुव्रीहौ रुचिपदलोपः। इवार्थस्य समासगम्यतया इवपदाप्रयोगः। 'रुचिः कान्त्यर्चिषोरिति' विश्वप्रकाशः। अव्ययलुप्तोपमालङ्कारः। गोपव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संसारमहीरुहस्य बीजायेति। संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः। एतेन ईश्वरे प्रमाणं दर्शितं भवति। तथाहि–यथा घटादि कार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। न च तत्कर्तृत्वमस्मदादीनां संभवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः। न च शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम्। अप्रयोजकत्वात्। मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एवानुकूलस्तर्कः।

## विवृतिः।

धूटीदुकूलचौराय–गोपीवस्त्रापहर्त्रे, तस्मै–प्रसिद्धाय, अत्र 'प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते' इति काव्यप्रकाशकृदुक्तेर्न यत्पदार्थापेक्षेति विभावनीयम्। कृष्णायेति। 'नमः स्वस्ती'त्यनेन नमः योगे चतुर्थी। संसार एव महीरुहो वृक्षः 'वृक्षो महीरुहः शाखीति' शब्दार्णवः। बीजायेति। 'बीजं रेतसि तत्त्वे च हेतावङ्कुरकारणे' इति हैमः। बीजशब्दस्य हेतुसामान्ये शक्तस्य प्रकृतार्थमाचष्टे—निमित्तेति। एतेनोक्तविशेषणदानेन, ईश्वरे—परमात्मनि, नित्यज्ञानाधिकरणत्वमेवेश्वरत्वम्। प्रमाणमनुमानरूपम्। ननु 'यः सर्वज्ञः सर्वविदि'त्यादिवेदवाक्यैर्निष्प्रत्यहमेवेश्वरसिद्धिरिति किं प्रयोजनमनुमानेनेति मा वह गर्वमास्तिकशिरोमणे, वेदानामीश्वरोक्तत्वेनेश्वरासिद्धौ वेदानामप्रमाणत्वात्तथा च वैशेषिकसूत्रं–'तद्वचनादाम्नायस्य प्रामाण्यमिति'। तेनेश्वरेण वचनात्प्रणयनादाम्नायस्य वेदस्य प्रामाण्यं न स्वत इति सूत्रार्थः। अयमेवार्थः 'तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्य' इत्यादिन्यायसूत्रेषु प्रतिपादितः। ननु 'वाचा विरूपनित्यये'त्यादिवेदप्रामाण्येन नित्यत्वमेव वेदस्य तथाच सिद्धं स्वतः प्रामाण्यमिति चेन्न। न हि खलु निपुणोऽपि स्वस्कन्धमारोढुं प्रभवेदिति न्यायात्। पूर्वोक्तमेव प्रमाणं घटयितुं सन्दर्भं रचयति—तथाहीत्यादिना। घटादि कार्यमादिशब्देन पटादेः परिग्रहः। क्षित्यङ्कुरादिरूपं कार्यं कर्तृजन्यं कार्यत्वाद् घटवदित्यनुमानतः क्षित्यङ्कुरादेः पक्षस्य कर्तृजन्यत्वे साधनीये तत्कर्तृत्वेनेश्वरसाधनम्। अस्मदादीनां तु जीवानामल्पज्ञत्वादल्पसामर्थ्याच्च तत्कर्तृत्वमसम्भवीत्यभिप्रायः। कर्तारमन्तरा तु नोत्पत्तिर्घटपट-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



'द्यावाभूमी जनयन् देव एकः, विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादय आगमा अप्यनुसन्धेयाः ॥ १ ॥

द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥ २ ॥

पदार्थान्विभजते—द्रव्यमिति । अत्र सप्तमस्याभावत्वकथनादेव

विवृतिः ।

मठादीनामपि तथात्वप्रसङ्गात् । यदुक्तमभियुक्तैः—
जगतां यदि नो कर्ता कुलालेन विना घटः ।
चित्रकारं विना चित्रं स्वत एव भवेत्तदा ॥

एवं च—"कर्तृत्वसिद्धौ परमेश्वरस्य साकारसिद्धिः स्वत एव जाता । घटस्य कर्ता खलु कुम्भकारः कर्ता शरीरी न च नाशरीरीत्यादिकमपि द्रष्टव्यम् । अनुमानवच्छेदोऽपीश्वरं प्रमाणयतीत्याह—द्यावा भूमी जनयन्देव एक इति । विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । संबाहुभ्यां धमतिसंपतत्रैः—इति पूर्वा पादत्रयी । ननु पूर्वोक्तमीश्वरसाधकानुमानमयुक्तं कार्यत्वादिति हेतोः साध्याभावसाधकानुमानान्तरसद्भावात् इत्याशंकते—नचेति । क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वादाकाशवदित्यनुमानान्तरम् । ततोऽयं सत्प्रतिपक्षो नाम दुष्टहेतुरत्र दुर्निवार इति शङ्कितुराशयः । समाधानम्—अप्रयोजकत्वादिति । व्यभिचारशङ्कापनोदकतर्कराहित्यादित्यर्थः । यदि कर्त्रजन्यत्वं न स्यात्तदा शरीराजन्यत्वमपि न स्यादिति वादिप्रयोगे व्यभिचारशंकापनोदकस्तर्को नास्ति कर्त्रजन्यत्वशरीराजन्यत्वयोः कार्यकारणभावस्यादृष्टपूर्वत्वात् । सिद्धान्तिप्रयोगे तु यदि कर्तृजन्यत्वं न स्यात्तदा कार्यत्वमेव न स्यादित्यत्रैकस्य कर्तृत्वेनापरस्य कार्यत्वेन कार्यकारणभावरूपस्तर्को व्यभिचारशङ्कापनोदकोऽस्त्येव ॥ १ ॥

पदार्थान् न्यायवैशेषिकप्रसिद्धान्, विभजते—सामान्यतोऽवगतान् विशेषरूपेणाभिधत्त इत्यर्थः । मूले—सप्तेतिपदं सप्तैव पदार्था इति द्योतनार्थम् । अत्र—द्वितीयकारिकायाम्, षण्णां—



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



षण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासो न कृतः। एते च पदार्था वैशेषिके प्रसिद्धा नैय्यायिकानामप्यविरुद्धाः। प्रतिपादितं चैवमेव भाष्ये। अत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वमाशङ्कितम्। ननु कथमेत एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात्। तथाहि—मण्यादिसमवहि-

विवृत्तिः।

द्रव्यादिसमवायान्तानाम्। भावत्वं षड्भावभिन्नभिन्नत्वं प्राप्तमनुमानाल्लब्धम्। द्रव्यादयः षड्भावा अभावत्वव्यधिकरणधर्मयुक्तत्वादित्यनुमानशरीरम्। पदार्थस्य तावद्द्वैविध्यं—भावाभावभेदात्, भावस्तु षोढा—द्रव्यादिभेदादभावस्त्वत्र एकविध एवेति भावः। तेन—अनुमानबलाल्लब्धत्वेन, भावत्वेन—एते षड्भावाः सप्तमस्तु अभाव इति रीत्या पृथगुपन्यास उल्लेखः। स्पष्टोऽयमुपन्यासप्रकारो न्यायसारे। एते च—द्रव्याद्यभावान्ताः। पदार्था इति। ज्ञेयत्वादिकं पदार्थसामान्यलक्षणम्। वैशेषिके कणादकृतवैशेषिकशास्त्रे, नैयायिकानां गौतमादीनां, अविरुद्धाः—अभिमताः, षोडशपदार्थानामत्रैवान्तर्भावसम्भवात्सप्तपदार्थत्वे तेषामपि विप्रतिपत्तिर्नास्तीत्यर्थः। सप्तपदार्थेषु षोडशपदार्थान्तर्भावप्रकारो भाष्यमतमप्यनुधावतीत्याह—प्रतिपादितं चेति। सप्तपदार्थातिरिक्तपदार्थास्त्वैत्रवान्तर्भवन्तीत्यभिहितमिति निष्कर्षः। अन्तर्भावप्रकारस्तु विस्तृतो नातिमूलोपयोगी चेत्यलं कालयापनया। अत एव—सप्तपदार्थस्वीकारादेव। उपमानचिन्तामणौ उपमानखण्डस्य चिन्तामणिग्रन्थे, सप्तपदार्थभिन्नतया—प्रकृताभिमतसप्तपदार्थपृथक्त्वेनेत्यर्थः। आशङ्कितमुट्टङ्कितम्। ननु यथेश्वरः कार्येणानुमीयते तथा शक्तिसादृश्यादयोऽप्यनुमातुं शक्या इति तेषां पदार्थत्वेन सप्तस्वनन्तर्गतत्वेन च कथं सप्तपदार्थसङ्गतिरिति प्रभाकरमतेनाशङ्कते—नन्विति। अतिरिक्तपदार्थत्वात्—सप्तपदार्थातिरिक्तपदार्थत्वेनानुभवात्। अनुभवसिद्धपदार्थस्य चापलापानर्हत्वादिति भावः। प्रभाकराभिमतशक्तिसिद्धिं ग्रन्थकारो निर्दिशति—तथाहीत्यादिना। मण्यादिसमवहितेन—चन्द्रकान्तमणिमन्त्रौषध्याः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तेन वह्निना दाहो न जन्यते तच्छून्येन तु जन्यते । तत्र मण्यादिना वन्हौ दाहानुकूला शक्तिर्नाश्यते उत्तेजकेन मण्याद्यपसारणेन च जन्यत इति कल्प्यते । एवं सादृश्यमप्यतिरिक्तः पदार्थः । तद्धि न षट्सु भावेष्वन्तर्भवति—सामान्येऽपि सत्त्वात् यथा गोत्वं नित्यं तथाऽश्वत्वमपि नित्यमिति सादृश्यप्रतीतेः । नाप्यभावे—सत्त्वेन प्रतीयमानत्वादिति चेन्न । मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण

## विवृतिः ।

दिसहितेन । दाहो—दाहानुकूला शक्तिः, न जन्यते-नोत्पद्यते । तच्छून्येन-चन्द्रकान्तमणिराहितेन वन्हिनेत्यनुपज्यते । उत्तेजकेन-सूर्यकान्तमणिना । मण्याद्यपसारणेन—चन्द्रकान्तमण्यादिदूरीकरणेन । योऽग्निर्दग्धुं प्रभवति स एव प्रतिबन्धकहेतुसद्भावे निष्प्रभो जायते अपनीते च प्रतिबन्धकहेतौ दाहो भवति । यदसत्त्वं कार्यासत्त्वं स स्वतन्त्र एव द्रव्यादिपदार्थनिष्ठः शक्त्याख्यः पदार्थः स्वीकर्तव्यो हीति तेषामाशयः । सप्तपदार्थेष्वन्तर्भावस्यासम्भवाच्छक्तेः पृथक्त्वसिद्धिर्द्रष्टव्या । एवं—शक्तिवदित्यर्थः । अतिरिक्तः—पूर्वोक्तसप्तपदार्थेभ्यो भिन्नः । ननु तस्य षड्भावेष्वेवान्तःपातोऽस्तु किमतिरिक्तत्वकल्पनेनेत्याशङ्क्य समाधत्ते-तद्धि नेत्यादि । सादृश्यं हीत्यर्थः । सामान्येऽपीति । सामान्यसामान्येतराविषयकप्रतीतिविषयत्वात् इत्यर्थः । सादृश्यस्येति शेषः । गोत्वं नित्यमिति । 'सा नित्या सा महानात्मा तामाहुस्त्वतलादयः' इति वाक्यपदीयोक्तेरप्येतत् । गोः सत्ता गोत्वमश्वस्य सत्ताऽश्वत्वं तस्यामेव च सत्ताख्यायां जातौ सर्वे गवादयः शब्दा वाचकत्वेन व्यवस्थिताः । यद्यस्य षड्भावेषु अन्तर्भावः स्यात्तदा षड्भावानां सामान्यावृत्तितया गोत्ववृत्तिनित्यत्ववदश्वत्वे नित्यत्वप्रत्ययो न सम्भवेदिति निर्गलितोऽर्थः । सादृश्यस्य षडभावेष्वन्तर्भावं निराकृत्याभावेऽन्तर्भावं निराचिकीर्षुराह—नाप्यभाव इति । सत्त्वेन-भावत्वरूपेण । अत्रायमभिसंधिः-सादृश्यस्य सत्त्वरूपत्वादभावस्य चासत्त्वरूपत्वादुभयोर्महद्वैषम्यमिति नासत्त्वरूपेऽभावे सत्त्वरूपं सादृश्यमन्तर्भवितुमर्हति । 'नाभावो जायते भावो नैति भावोऽनुपाख्यतामिति' वाक्यपदीयोक्तेः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मण्यभावादेरेव वा हेतुत्वं कल्प्यते, अनेनैव सामञ्जस्येऽनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात् । न चोत्तेजके सति प्रतिबंधकसद्भावेऽपि कथं दाह इति वाच्यम् । उत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वात् । सादृश्यमपि न पदार्थान्तरम्, किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्, यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥ २ ॥

क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।

द्रव्याणि,

विवृतिः ।

मण्याद्यभावेत्यादि । उत्तेजकाभावविशिष्टो यो मणिश्चन्द्रकान्तमणिस्तदादेर्योऽभावस्तद्विशिष्टवह्न्यादेः, एवं चात्र समवायसंबन्धावच्छिन्नदाहत्वावच्छिन्नदाहनिष्ठकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्नोत्तेजकाभावविशिष्टमण्याद्यभावविशिष्टवह्नित्वावच्छिन्ना वह्निनिष्ठा कारणता बोध्या । मण्यभावादेरेवेत्येवशब्दो लाघवं सूचयति । अनेनैव–दाहादिकं प्रति मण्यभावकारणत्वेनैव, सामञ्जस्ये–सम्यङ्निर्वाहे । अनन्तशक्तीति । मण्यादेः समवधानासमवधानाभ्यामसकृत्शक्तेरुत्पादस्तस्याः प्रागभावध्वंसौ चेत्येष कल्पो गौरवान्न समञ्जसः प्रतिभातीत्यर्थः । उत्तेजके–सूर्यकान्तमणौ, प्रतिबन्धकसद्भावे–दाहरूपकार्यप्रतिबन्धके चन्द्रकान्तमणौ सति । समाधानहेतुमाह–उत्तेजकाभावेति । केवलं चन्द्रकान्तमणेरेव दाहादिकं प्रति प्रतिबन्धकत्वं नास्ति किन्तूत्तेजकाभावविशिष्टस्य चन्द्रकान्तमणेस्तं प्रति तत्त्वम् । तदभावविशिष्टतदभावस्य च दाहे हेतुत्वमिति निष्कर्षः । मणिसत्त्वे वह्निना दाहरूपकार्याजननाद्वह्नावनित्यशक्तिर्भिन्नैवेति तु न शङ्कनीयम्, सूर्यकान्ताभावविशिष्टचन्द्रकान्ताभावस्यैव दाहहेतुत्वेन तत्र कल्पे मानाभावात् । ननु मास्तु शक्तेरतिरिक्तपदार्थत्वं परमन्त्यस्य तु तन्निरुपप्लवमेवेत्याशंक्याह—सादृश्यमपि नेति । स्पष्टोऽयं ग्रन्थः ॥ २ ॥

द्रव्याणीति । गुणवत्त्वं द्रव्यत्वजातिमत्त्वं वा द्रव्यसामान्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



द्रव्याणि विभजते—क्षित्यबिति । क्षितिः पृथिवी, आपो जलानि, तेजो वन्हिः, मरुद्वायुः, व्योम आकाशः, कालः समयः, दिगाशा, देही आत्मा, मन एतानि नवद्रव्याणि इत्यर्थः । ननु द्रव्यत्वजातौ किं मानम्? न हि तत्र प्रत्यक्षं प्रमाणं—घृतुजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेन्न । कार्य-समवायिकारणतावच्छेदकतया संयोगस्य विभागस्य वा समवायिकारण-

विवृत्तिः ।

लक्षणमत एव न द्रवतीति द्रव्यमपि तु द्रव्यत्वजातिविशिष्टबोधकं द्रव्यं तानि द्रव्याणि । विभजत इति । स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकबोधनानुकूलो व्यापारश्च विभजेरर्थः । आपो जलानीति । अत्र यद्यपि क्षितिः पृथिवीत्यादिव्याख्यासाहचर्येण प्रथमाबहुवचनं न युज्यते एकव्यक्तिमात्रतात्पर्येण प्रयोगे बहुत्वान्वये योग्यताविरहात्तथापि 'आपः स्त्री भूम्नी'त्यनुशासनेन तदुत्तरमेकवचनस्यासाधुत्वादेव बहुवचनं प्रयुज्यते इति दिक् । ननु द्रव्यत्वजातौ किं प्रमाणमिति । 'मानाधीना मेयसिद्धि'रित्याचार्यचित्सुखोक्तेः द्रव्यत्वसिद्धेरनन्तरं विभागचिन्ताया युक्तत्वात्प्रथमं द्रव्यत्वजातिसाधकं प्रमाणमेव वक्तव्यमिति प्रश्नकर्तुराशयः । सर्वप्रमाणेषु ज्येष्ठत्वात्प्रत्यक्षस्य द्रव्यत्वजातौ प्रामाण्यमाशङ्क्य निराचष्टे—नहीति । तत्र—द्रव्यत्वजातौ । घृतजत्विति । घृतमाज्यं, जतु लाक्षा, द्रव्यत्वाग्रहात्—द्रव्यत्वज्ञानानुत्पादात् । न च द्रव्याकारानुगतमतिसाक्षिकं द्रव्यत्वत्वं पृथिव्यादौ कथंचित्तत्सत्त्वेऽपि वाय्वाकाशादौ तदसम्भवात् । न वा गुणत्वावच्छिन्नकार्यसमवायिकारणतावच्छेदकतया तत्सिद्धिर्नित्यानित्यवृत्तितया गुणत्वस्य कार्यतानवच्छेदकत्वादित्याहुः । कार्यसमवायीत्यादि । समवायेन कार्यं प्रति तादात्म्येन द्रव्यवृत्तिः समवायिकारणता तदवच्छेदको धर्मो लाघवात् जाति( द्रव्यत्व )-रूपस्तत्तयेत्यर्थः । कार्यत्वधर्मस्य कार्यतावच्छेदकत्वे चोपस्थितिगौरवमाशङ्क्याह—संयोगस्येति । संयोगत्वस्यापि नित्यद्रव्यानित्यद्रव्यवृत्तित्वेन कार्यतानवच्छेदकत्वमाशङ्क्याह—विभागस्येति । नित्यविभागाश्रयन्तु किमपि द्रव्यं नास्ति अतो विभागत्वावच्छिन्ना

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तावच्छेदकतया द्रव्यत्वजातिसिद्धेरिति। ननु दशमं द्रव्यं तमः कुतो नोक्तम् ? तद्धि प्रत्यक्षेण गृह्यते तस्य च रूपवत्त्वात्कर्मवत्त्वाच्च द्रव्यत्वम्। तद्धि गंधशून्यत्वान्न पृथिवी, नीलरूपवत्त्वाच्च न जलादिकम्, तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमिति चेन्न। आवश्यकतेजोऽभावेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात्। रूपवत्ताप्रतीतिस्तु भ्रमरूपा, कर्मवत्ताप्रतीतिरप्यालोकापसारणौपाधिकी भ्रान्तिरेव।

विवृत्तिः।

कार्यता तु प्रसिद्धैव। एवमेव समवायेन संयोगरूपकार्यं प्रति तादात्म्येन द्रव्यनिष्ठा समवायिकारणता, तथा समवायेन विभागरूपं कार्यं प्रति तादात्म्येन द्रव्यनिष्ठा समवायिकारणता तदवच्छेदकत्वं द्रव्यत्वस्येति तत्सिद्धिर्द्रष्टव्या। कुतो नोक्तमिति। नवद्रव्याणीति कथमुक्तं तमसो दशमद्रव्यत्वस्य दुर्वारणीयत्वादिति भावः। तद्धि—तमो हि, तस्य च—तमसश्च, रूपवत्त्वात्कर्मवत्त्वाच्चेति। तमो द्रव्यं रूपवत्त्वात्क्रियावत्त्वाच्च पृथिवीवदिति अनुमानादित्यर्थः। रूपं चास्य नीलम् क्रिया चलनरूपा तथा चाहुः—

तमः खलु चलं नीलं परापरविभागवत्।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥

गन्धशून्यत्वादिति। पृथ्वी गन्धवतीदन्तु निर्गन्धमिति वैधर्म्यादित्यर्थः। मास्तु पृथिव्यां जलादौ तु कथं नान्तर्भाव इत्याह—नीलरूपवत्त्वादिति। तमो न जलादिकं नीलरूपवत्त्वात्पृथ्वीवदित्यनुमानशरीरम्। जलादिकन्तु स्फटिकवच्छुक्लमिदन्तु नीलमिति भेदादिति भावः। तत्प्रत्यक्षे—तमःसाक्षात्कारे। आलोकनिरपेक्षं चक्षुः कारणम्—आलोकासहकृतं चक्षुरिन्द्रियं हेतुरित्यर्थः। समाधानहेतुमाह—आवश्यकेत्यादि। आवश्यकमवश्यक्लृप्तं यत्तेजस्तदभावेनैवोपपत्तौ—लाघवात्सिद्धौ, तमसो नवातिरिक्तद्रव्यत्वकल्पनाया निर्मूलत्वादित्यर्थः। रूपवत्ताप्रतीतिस्त्विति। नीलं तमः इति बुद्धिस्तु गगननीलिमवद्भ्रमरूपैव बोध्या। भ्रमत्वं तु अतात्त्विकान्यथाभावेन वस्त्ववगाहनत्वमेव। एवं तमश्चलतीति प्रत्ययोऽपि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तमसोऽतिरिक्तद्रव्यत्वेऽनन्तावयवादिकल्पनागौरवं च स्यात् । सुवर्णस्य यथा तेजस्यन्तर्भावस्तथाग्रे वक्ष्यते ॥

अथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततःपरम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

गुणान्विभजते–अथ गुणा इति । एते गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतश्चशब्देन च दर्शिताः । तत्र गुणत्वजातिसिद्धिरग्रे वक्ष्यते ॥ ३ ॥ ४ ॥ ५ ॥

विवृतिः ।

दीपकादिदूरीकरणोपाधिनिबन्धनो भ्रान्तिरूप एव । तमसोऽतिरिक्त द्रव्यत्व इति । नवद्रव्यातिरिक्ततमोद्रव्यत्वकल्पने तदनेकावयवोत्पादविनाशादिकल्पने च महद् गौरवमिति नाधिक्यम् । ननु माभूत्तमसो दशमद्रव्यत्वं सुवर्णस्य तु निराबाधमेवं च नवत्वव्याघातो घट्टकुटीप्रभातायित एवेति शङ्कामपि व्युदस्यति–सुवर्णस्येति । यथा–येन प्रकारेण, अग्रे–तेजःप्रकरणे । वक्ष्यत इति । ग्रन्थकृता दर्शयिष्यत इत्यर्थः । अत्र तु विशेषोपयोगाभावादेव न व्यलेखीति भावः ॥

द्रव्याणि निरूप्य गुणान्निरूपयितुमाह–गुणानिति । द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं गुणलक्षणं बोध्यम् । 'गुणत्वं नाम सामान्यविशेष' इति महदुक्तेः । कण्ठतः कण्ठेन–सार्वविभक्तिकस्तसिः । दर्शिताः–सप्तदशोक्ताः अवशिष्टाः सप्त सूत्रस्थचशब्देन भाष्यकृत्प्रशस्तपादैः संगृहीताः सङ्कलनया चतुर्विंशतिसंख्याका जाता इति मूलार्थः । तत्र–गुणेषु गुणत्वजातिसिद्धिरिति । गुणपदशक्यतावच्छेदकत्वेन सिद्धस्य गुणत्वाख्यजातिविशेषस्य साधनमित्यर्थः । अग्रे–गुणविवेचनकाले ॥ ३ ॥ ४ ॥ ५ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥ ६ ॥

कर्माणि विभजते—उत्क्षेपणमिति । कर्मत्वजातिस्तु प्रत्यक्षसिद्धा । एवमुत्क्षेपणत्वादिकमपि ॥ ६ ॥

ननु भ्रमणादिकमपि पृथक्कर्माधिकतया कुतो नोक्तमत आह भ्रमणमिति—

भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥
सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥

सामान्यं निरूपयति—सामान्यमिति । तल्लक्षणन्तु नित्यत्वे सत्यनेकसमवेतत्वम् । अनेकसमवेतत्वम् संयोगादीनामप्यस्तीत्यत उक्तं नित्यत्वे सतीति । नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्ती-

विवृतिः ।

प्रत्यक्षसिद्धा—प्रत्यक्षद्रव्येषु चलतीत्यनुगतमतिसाक्षिकेत्यर्थः । एवं—अनया रीत्या । कर्मत्वजातिव्याप्योत्क्षेपणत्वादिकमपि प्रत्यक्षसिद्धमिति ध्येयम् । न चोत्क्षेपापक्षेपादिकमपि गमनान्तर्भूतमेवास्तु ऊर्ध्वं गच्छत्यधो गच्छतीति व्यवहारादिति वाच्यम् । उत्क्षेपणत्वादीनामनुगतजातिविशेषत्वेन प्रतीतेस्तदन्तर्भावस्यासम्भवात् । तदुक्तं भाष्यकृता—"भवतुत्क्षेपणादीनां जातिभेदात्प्रत्ययभेदः" इति ॥ ६ ॥

ननु भ्रमणादिकर्मणः सत्त्वात्कर्माण्येतानि पञ्च चेत्ययुक्तमित्यभिप्रेत्य शङ्कते—नन्विति । भ्रमणमितीति । भ्रमणादिकं यत्कर्मजातं तत्सर्वं गमनविशेष एवेति भावः ॥ ७ ॥

सामान्यलक्षणं वक्तुमाह—तदिति । अनेकसमवेतत्वमिति । नानाव्यक्तिषु समवायसम्बन्धेन वृत्तिमत्त्वमित्यर्थः । नित्यमेकमनेकानुगतं सामान्यमिति सङ्ग्रहे स्फुटम् । संयोगादीनामप्यस्तीति । तत उक्तलक्षणातिव्याप्तिरित्यर्थः । नित्यत्वे सतीति । एवं च

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्यत उक्तमनेकेति । नित्यत्वे सत्यनेकवृत्तित्वमत्यन्ताभावस्याप्यस्तीत्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम् । एकव्यक्तिमात्रवृत्तिस्तु नं जातिः, तथाचोक्तम्—

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः ॥

परत्वमधिकदेशवृत्तित्वमपरत्वमल्पदेशवृत्तित्वम्, सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वम्, तदपेक्षया चान्यासां जातीनामपरत्वम् ॥ ८ ॥

विवृतिः ।

संयोगादीनामुभयवृत्तितया नित्यत्वं नास्तीत्यतो नातिप्रसङ्गः । अत उक्तमनेकेतीति । तथा चाकाशपरिमाणादिगुणानां नित्यत्वे सति समवेतत्वमस्ति परमनेकत्र वृत्तिर्नास्ति किन्तु गगनमात्र एवेति न दोषः । समवेतेत्युक्तमिति । अत्यन्ताभावश्च स्वाधिकरणेषु स्वरूपसम्बन्धेन वर्तते न समवायेनेत्यदोषः । स्वोक्तमेव वृद्धोक्त्या समर्थयति–तथाचोक्तमिति । किरणावलीनामकग्रन्थे उदयनाचार्यैरिति शेषः । स्वाश्रयनिष्ठस्वाश्रयप्रतियोगिकभेदाभावो व्यक्त्यभेदः । एकव्यक्तिकत्वमिति यावत् । ननु जातिबाधकानां मध्ये जातिभेदबाधकस्य संग्रहः कथमित्यत आह–तुल्यत्वमिति । अन्यूनानतिरिक्तव्यक्तित्वं तुल्यत्वम् । परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशः संकरः । मनसि भूतत्वं नास्ति पञ्चभूतानन्तर्गतत्वात् आकाशे मूर्तत्वं नास्ति मूर्तपदार्थानन्तर्गतत्वात् एकत्र पृथिव्यादिचतुर्षु समावेशश्चेति समन्वयः । तत्रैकव्यक्तिकत्वादाकाशत्वं न जातिः । तुल्यव्यक्तिकत्वाद्घटत्वं कलशत्वं च न जातिद्वयम् । संकीर्णत्वाद्भूतत्वं मूर्तत्वं च न जातिः । अनवस्थाभयात्सामान्यत्वं न जातिः । विशेषस्य व्यावृत्तस्वभावस्य रूपहानिः स्यादतो विशेषत्वं न जातिः । समवायाभावयोः सम्बन्धाभावात्समवायत्वं अभावत्वं च न जातिरिति अखण्डार्थः । सकलजातीति । घटत्वादियावज्जातीनामपेक्षयेत्यर्थः । सत्ताया इति । द्रव्यादिषु त्रिषु सत्सदिति प्रकारको यतः प्रत्ययः सदिदं सदिदमित्या-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



परभिन्ना तु या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥
व्यापकत्वात्परापि स्यात् व्याप्यत्वादपरापि च ।

पृथिवीत्वाद्यपेक्षया द्रव्यत्वस्याधिकदेशवृत्तित्वाद्व्यापकत्वात्परत्वं, सत्तापेक्षयाल्पदेशवृत्तित्वाद्व्याप्यत्वात् द्रव्यत्वस्यापरत्वं, तथाच धर्मद्वय-समावेशादुभयमविरुद्धम् ॥ ९ ॥

अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥

विशेषं निरूपयति–अन्त्य इति । अन्ते अवसाने वर्तते इत्यन्त्यः । यदपेक्षया विशेषो नास्तीत्यर्थः । घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः, परमाणूनां परस्परभेदको विशेष एव, स

विवृतिः ।

कारकः शब्दप्रयोगो वा यदधीनः सा सत्ता । अधिकदेशवृत्तित्वादिति । द्रव्यत्वाधिकरणद्रव्यवृत्तित्वे सति गुणादावपि वृत्तित्वादिति भावः। तदपेक्षया-सत्तापेक्षया। सत्ताजातिश्च द्रव्यं सत् गुणः सन् इत्याद्यनुगतप्रतीत्यैव सिद्ध्यतीति प्रकाशकृतः। अत्र प्रमाणाभाव इति तु न शंक्यम्, भूतो भावी वर्तमानश्च सर्वोऽपि घटः सदेव न तु तद्भिन्न इत्यनुवृत्तप्रत्ययसाक्षिकतया तदवश्यमन्तव्यत्वात् । उभयमविरुद्धमिति । परत्वापरत्वरूपं धर्मद्वयमेकस्यां व्यक्तौ न विरुध्यत इत्यर्थः। सत्तायाः सकलजात्यपेक्षया परत्वमेव द्रव्यत्वादीनां तु सत्तापेक्षयाऽपरत्वं घटत्वाद्यपेक्षया परत्वमित्यखिलं निर्मलम् ॥ ८ ॥ ९ ॥

अवसाने–व्यावर्तकानामवसाने, तेन यस्य व्यावर्तकान्तरं नास्तीत्यर्थः पर्यवस्यति। उत्पादविनाशयोरन्ते भवन्तीत्यन्त्या नित्यद्रव्याणि तेषु भवन्तीत्यन्त्या विशेषा इति वृत्तिकृतः । यदपेक्षयेति । प्रत्येकनित्यद्रव्यैकव्यक्तिमात्रवृत्तिरिति फलितोऽर्थः। घटादीनामिति । अयं भावः—घटादीनि स्थूलकार्याणि द्व्यणुकादिसूक्ष्मकार्यपर्यन्तानि स्वस्वकपालपरमाण्वाद्यवयवभेदात्परस्परं भिद्यन्ते । परमाण्वादिनिरवयवानां परस्परभेदको भेदसाधकोऽत एव तस्य सिद्धिः शब्दसमवायिकारणतावच्छेदकत्वेन वा । स तु–विशे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तु स्वत एव व्यावृत्तः तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ॥१०॥

घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः ॥ ११ ॥

समवायं दर्शयति—घटादीनामिति । अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः संबन्धः स समवायः । समवायत्वं नित्यसम्बन्धत्वम् । तत्र प्रमाणन्तु—गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् द-

विवृतिः ।

षस्तु, तेन—हेतुना, तत्र—विशेषव्यावृत्तौ । विशेषान्तरापेक्षा नास्तीति । यद्यस्मिन्नपि विशेषान्तरापेक्षा स्यात्तदा स्वतो व्यावृत्तत्वरूपस्यास्य वास्तविकरूपस्य हानेरनवस्था स्यादिति भावः ॥ १० ॥

मूले तेषु—द्रव्यगुणकर्मसु । अवयवावयविनोरिति । द्रव्यसमवायिकारणमवयवः जन्यं द्रव्यमवयवी । जातिव्यक्त्योरिति । जातिर्गोत्वादिर्व्यक्तिर्गवादिः प्रसिद्धैव । गुणगुणिनोरिति । अत्र केचित्तु—यत्र यत्रेतरेतराध्यासस्तत्र तत्र तादात्म्यं यथा गुणगुणिनोः । यत्र न तादात्म्यं न तत्रेतरेतराध्यासो यथा घटपटयोः । गुणगुणिनोश्चेतरेतराध्यासो नीलो घट इत्यादौ प्रत्यक्षादिप्रतीतौ दृष्ट इत्याहुः । यत्तदोर्नित्यसम्बन्ध इत्युक्तेर्यत्तदोरार्थत्वमित्यभिप्रायेणाह—यः सम्बन्धः स इति । ननु किं समवायलक्षणमित्याकांक्षामपनयन्नाह—नित्यसम्बन्धत्वमिति । संयोगेऽतिप्रसङ्गवारणाय नित्यपदमेवमन्यदप्युन्नेयम् । तत्र-समवायस्य सम्बन्धत्वे । 'सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे सति आश्रयतया विशिष्टबुद्धिनियामकः' यथा दण्डी पुरुष इत्यादौ संयोगरूपः सम्बन्धः सम्बन्धिभ्यां भिन्नो द्विष्ठो दण्डनिरूपितसंयोगाश्रयः पुरुष इति विशिष्टबुद्धिनियामकश्चेति अवधार्याह गुणक्रियादिविशिष्टबुद्धिरिति । विशिष्टबुद्धिवद्—विशेषणविशेष्योभयसम्बन्धविषयकविशिष्टज्ञानवत् । अयं भावः—यथा दण्डी पुरुष इति विशिष्टबुद्धिर्दण्डरूपविशेषणं पुरुषरूपविशेष्यं च व्यञ्जयन्ती तयोर्विशेषणविशेष्ययोः सम्बन्धमपि संयोगरूपं व्यनक्ति । तथैव नीलो घटः गतिमान्देवदत्त इति गुणक्रियादिविशिष्टबुद्धिरपि गुणक्रियादिविशेषणं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानम् । एतेन संयोगादिबाधात्समवायसिद्धिः । न च स्वरूपसंबन्धेन सिद्धसाधनम्-अर्थान्तरं वा, अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धिः । न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूभाभावात् । न चैवमभावस्यापि वैशिष्ट्यं संबन्धान्तरं सिद्ध्येदिति वाच्यम् । तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभाव-

विवृतिः ।

गुणक्रियादिमन्तं विशेष्यं च बोधयन्ती तयोर्द्वयोः सम्बन्धमपि बोधयति । स च सम्बन्धः प्रकृते संयोगस्तु न भवितुमर्हति-द्रव्ययोरेव संयोग इति नियमात् किन्तु समवाय एवातस्तत्सिद्धिः । तन्तुषु पटः समवेत इति प्रत्यक्षसिद्धो वा सः । सिद्धसाधनमिति । पूर्वोक्तानुमानतः समवायसाधनप्रवृत्ततार्किकेण सिद्धस्यैव स्वरूपसम्बन्धस्य साधनं क्रियते इत्यर्थः । अयुतसिद्धयोः स्वरूपसम्बन्ध इत्यङ्गीकर्तुर्मीमांसकस्य मत इति शेषः । अर्थान्तरं वेति । वेत्यरुचौ वा । प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् । समवायसाधनप्रवृत्ततार्किकाणां स्वरूपसिद्धया स्वानभिमतार्थसिद्धिरित्यर्थः शब्दो नित्योऽस्पर्शवत्त्वादिति वत् । लाघवादिति । सति च लाघवे गौरवं केनाद्रियत इति भावः । एकसमवायसिद्धिरिति । यथैकस्या एव सत्तायाः सर्वत्र सद्बुद्धिप्रवर्तकत्वं तथैकस्यैव समवायस्य सर्वत्र समवेतबुद्धप्रवर्तकत्वं द्रष्टव्यं विशेषलिङ्गराहित्यान्न हि तस्य विशेषलिङ्गं भेदसाधकं लिङ्गं दृश्यते येन तदनेकत्वमभ्युपेयमिति निष्कर्षः । केचित्तु समवायस्यानेकत्वमनित्यत्वं च आहुस्तन्मन्दम् सर्वस्यापि रूपं नष्टमिति प्रतीते रूपसमवायो नष्ट इति बुद्धेः केषामप्यनुदयात् । नन्वेकत्वे वायौ स्पर्शसमवायः पृथिव्यादिषु रूपसमवायश्च योऽस्ति तयोरैक्याद्वायौ रूपवत्ताबुद्धेः प्रमात्वप्रसङ्ग इत्याशंकते न चेति । तत्र-वायौ । रूपाभावादिति । प्रतियोगित्वसम्बन्धेन रूपस्यात्यन्ताभावादित्यर्थः । अत एव 'रूपरहितः स्पर्शवान्वायु'रित्युक्तं संग्रहे । अभावेऽस्त्येव वैशिष्ट्यं सम्बन्धान्तरमित्याशयेन शङ्कते नचेति । तस्य-वैशिष्ट्यस्य, तत्र-भूतले, तस्य च-घटाभावस्य च, अन्यथा-घटाभाव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



बुद्धिप्रसङ्गात्-घटाभावस्य तत्र सत्त्वात्-तस्य च नित्यत्वात, अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात्, वैशिष्ट्यस्य च तत्र सत्त्वात्। मम तु घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः। वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरम्। इत्थञ्च तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां संबन्धः ॥ ११ ॥

अभावस्तु द्विधा संसर्गाऽन्योन्याभावभेदतः।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥ १२ ॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते।

अभावस्त्विति। अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम्। सं-

चिवृतिः।

स्य नित्यताङ्गीकारे, देशान्तरेऽपि-घटरहितस्थलेऽपि। वैशिष्ट्यस्येति। वैशिष्ट्यं तु—

विशेषणं विशेष्यं च तत्सम्बन्धफलार्पकम्।
ज्ञानरूपं स्वसामर्थ्याद्वैशिष्ट्यमिति कीर्तितम् ॥ इति।

तत्र—भूतले।सत्त्वात्—घटानयनदशायामपि नित्यतया विद्यमानत्वादित्यर्थः। नन्वेव प्रसङ्गः समवाय एक इतिवादिनस्तव सिद्धान्तिनोऽपि मतेऽग्निसंयोगाज्जातरक्ते घटे प्राग्भवस्य श्यामरूपस्य समवायसत्त्वाद्दुर्वार इति शङ्कामपाकरोति—मम त्विति। सिद्धान्तिनस्त्वित्यर्थः। मते इति शेषः। पाकरक्तदशायां—रक्तरूपोत्पत्तिकाले, तद्वत्ताबुद्धिः—श्यामरूपवत्ताबुद्धिः। तत्समवायसत्त्वेऽपि तत्तद्रूपनिरूपितस्यैव तस्य तादृशबुद्धिजनकत्वोपगमादिति भावः। तत्तत्कालीनं—घटाभाववद्भूतलमिति ज्ञानकालीनम्। तत्तद्भूतलादिकं—यत्र भूतले घटासत्त्वप्रत्ययस्तत्तद्भूतलादिकम्। तत्तदभावानां—यद्यदभावस्य ज्ञानं तत्तदभावस्येत्यर्थः। सम्बन्धः—स्वरूपसम्बन्धोऽस्तीति शेषः। अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽपीति भाष्यम् ॥ ११ ॥

द्रव्यादिषट्केति। द्रव्यगुणकर्मादिषड्भावभिन्नत्वं तत्त्वम्। षट्त्वसंख्या द्रव्ये समवायेन बोध्या। मूले संसर्गान्योन्येति। द्वन्द्वान्ते श्रूयमाणपदमिति न्यायबलात्। मुक्तावल्यां तु व्यक्तमेव। तद्विभा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सर्गेति । संसर्गाभावान्योन्याभावभेदादित्यर्थः । अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते प्रागभाव इति । संसर्गाभावत्वमन्योन्याभावभिन्नाभावत्वम् । अन्योन्याभावत्वं तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । विनाश्यभावत्वं प्रागभावत्वम् । जन्याभावत्वं ध्वंसत्वम् । नित्यसंसर्गाभावत्वमत्यन्ताभावत्वम् । यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य सम्बन्धाघटकतयाऽत्यन्ताभावस्य नित्यत्वेऽपि घटाकाले न घटात्यन्ताभावबुद्धिः ।

तत्र उत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित् ।

अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतम्,

विवृतिः ।

गेति । अन्योन्याभावविभागेत्यर्थः । यथाक्रममभावद्वयमध्ये प्राक् संसर्गाभावं लक्षयितुकाम आह—संसर्गाभावत्वमिति । अन्योन्याभावेति । अन्योन्याभावभिन्नत्वे सत्यभावत्वं तत्त्वम् । ननु वाक्यार्थज्ञाने पदार्थज्ञानस्य हेतुत्वादन्योन्याभाव एव तावत्किमिति शिष्यजिज्ञासामनुरुद्ध्याह—अन्योन्याभावत्वं तादात्म्यसम्बन्धेति । अयमेव तादात्म्याभावोऽपि निगद्यते । तादात्म्यं च भेदाघटितत्वं प्रतियोगितावच्छेदको धर्मः । स चासौ सम्बन्धश्च तेनावच्छिन्ना युक्ता प्रतियोगिता यस्य सोऽभावस्तत्त्वम् । घटान्योन्याभाववान्पटः पटान्योन्याभाववान्घट इत्यादिकमस्योदाहरणं द्रष्टव्यम् । तादात्म्येन घटः स्वस्मिन्नेव न पटे इति पटे घटान्योन्याभावः स्पष्टः । एवमग्रेऽपि । प्रागभावत्वमिति । उत्पत्तेः पूर्वं कार्यस्याभावो यः स तत्त्वम् । प्रागभावसिद्धिस्तूत्पन्नस्य पुनरुत्पत्तिसाध्वसेनेह कपाले घटो भवितेत्यादिप्रत्ययेन वा बोध्या । जन्याभावत्वमिति । ध्वंसाप्रतियोगित्वे सति प्रागभावप्रतियोगित्वं तत्त्वम् । नित्यसंसर्गेति । अधिकरणपदार्थे वस्तुनः सदा सम्बन्धाभावत्वमित्यर्थः । पुनः—कालान्तरे । घटकालस्य—विशेषणरूपेण वर्तमानस्य । सम्बन्धाघटकेति । अभावस्वरूपसम्बन्धाप्रविष्टेत्यर्थः । चतुर्थोऽयमिति । पूर्वोक्तत्रितयवैधर्म्यात् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



श्यामघटे रक्तो नास्ति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावं तयोर्विरोधात् ।

नव्यास्तु तत्र विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तते इति प्राहुः ।

नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेत् । न । अनन्ताधिकरणात्मकत्वकल्पनापेक्षयातिरिक्तकल्पनाया एव लघीयस्त्वात् । एवञ्चाधाराधेयभावोऽप्युपपद्यते, एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमप्युपपद्यते, अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियाग्राह्यत्वात्प्रत्यक्षत्वं न स्यात् । एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्युक्तम्—अप्रत्यक्षत्वापत्तेः ॥ १२ ॥

विवृतिः ।

प्रागभावं—रक्तरूपप्रागभावम् । ध्वंसं—श्यामरूपध्वंसं, अवगाहते—विषयीकरोति । तदत्यन्तेति । रक्तश्यामात्यन्तेत्यर्थः । तयोः—प्रागभावध्वंसयोः, विरोधात् अत्यन्ताभावेन सहेति शेषः ।

नव्यास्तु इत्याहुरित्यग्रिमेणान्वयः । ध्वंसादीति । यस्मिन्काले ध्वंसस्तथा प्रागभावो वर्तते तस्मिन्नेव कालेऽत्यन्ताभावोऽपि तस्मिन्नेवाधिकरणे वर्तत इत्यर्थः । वादी शङ्कते—नन्विति । अधिकरणात्मत्वं—तत्तदधिकरणस्वरूपत्वम् । अनन्ताधिकरणेति । अधिकरणानामानन्त्येनाभावेऽपि तत्त्वं स्यादेवं च महद्गौरवमिति तदपेक्षया भावातिरिक्तत्वकल्पनैव लघीयसीति भावः । एवं च—अभावानामधिकरणेभ्यः पृथक्त्वे च। आधाराधेयभावोऽपीति । संप्रति भूतलमाधारः, घटाभाव आधेयः । भूतलमेव घटाभावस्वरूपं चेदुक्तसम्बन्धो न स्यादभेदे तदभावादिति भावः । परमतेऽनुपपत्त्यन्तरं स्वमते चोपपत्त्यन्तरं सिद्धान्ती दर्शयति—एवं चेति । अन्यथा—अभावस्याधिकरणरूपत्वे । तत्तदधिकरणानां—शब्दगन्धाद्यभावाधिकरणानाम् । तत्तदिन्द्रियेति । श्रोत्रघ्राणादीन्द्रियेत्यर्थः । प्रत्यक्षत्वं न स्यादिति । येनेन्द्रियेण यद् गृह्यते तद्गतजात्यभावयोरपि तेनेन्द्रियेण ग्रहणादिति भावः । एतेन—वक्ष्यमाणाप्रत्यक्षत्वापत्तिरूपदोषेण । प्रत्युक्तम्—निराकृतम् । तत्र हेतुमाह—अप्रत्यक्षत्वापत्तेः—गंधाद्यभावानामिति शेषः । ज्ञानस्यात्मध-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इदानीं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुं प्रक्रमते—

सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥

सप्तानामिति । समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यं, समानो धर्म इति फलितार्थः । एवं विरुद्धो धर्मो येषां ते विधर्माणः तेषां भावो वैधर्म्यं, विरुद्धो धर्म इति फलितार्थः । ज्ञेयत्वं ज्ञानविषयता, सा च सर्वत्रैवास्ति—ईश्वरादिविज्ञानविषयतायाः केवलान्वयित्वात् । एवमभिधेयत्वप्रमेयत्वादिकं बोध्यम् ॥ १३ ॥

द्रव्यादयः पञ्च भावा अनेके समवायिनः ।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥

द्रव्यादय इति । द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च । यद्यप्यनेकत्वमभावेऽप्यस्ति, तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम् । तथा चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितार्थः, तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः । समवायित्वं च समवायसम्बन्धेन सम्बन्धित्वम्, न तु समवा-

विवृतिः ।

मत्वेन बाह्येन्द्रियेण घ्राणेन प्रत्यक्षत्वायोगादिति भावः ॥ १२ ॥

इदानीं—पदार्थनिरूपणोत्तरमित्यर्थः । साधर्म्यमनुगतो धर्म एवं वैधर्म्यं व्यावृत्तो धर्मः । ज्ञानविषयतेति । विषयता च विषयनिष्ठज्ञानादिनिरूपितो धर्मविशेषो बोध्यः । सा च—ज्ञानविषयता च, केवलान्वयित्वात्—एकजातीयसम्बन्धेन सर्वत्र विद्यमानत्वादित्यर्थः । नास्तीदृश एकोऽपि पदार्थो यः सर्वज्ञेश्वरनित्यज्ञानगोचरो न भवतीति भावः । अभिधेयत्वेति । अभिधा च प्रकृते सङ्केतपदार्थः । सङ्केतश्च पदपदार्थयोः सम्बन्धरूपा वृत्तिः । सङ्केतीयविषयता चाभिधेयत्वमेतत्सर्वमन्यत्र विवृतमस्माभिर्विस्तरतः ॥ १३ ॥

साधर्म्यमिति । साधर्म्यपदार्थः पूर्वोक्त एव । समवायित्वं—समवायसम्बन्धेन सम्बन्धित्वम् । अभावेऽप्यस्तीति । तथा चोक्तलक्षणातिप्रसंग इत्यर्थः । भावत्वमिति । अनेकत्वं यद्यप्यभावेऽपि वर्तते तथापि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यवत्त्वं—सामान्यादावभावात् ।

सत्तावन्त इति । द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः । गुणादिरिति । यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वं च गगनादावतिव्याप्तम्, तथापि गुणवदवृत्तिधर्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं च तदर्थः । नहि घटत्वादिकं द्रव्यत्वादिकं

विवृतिः ।

भावत्वमभावस्य नास्ति भावभिन्नत्वात् । समवायेऽतिप्रसङ्गवारणाय सत्यन्तम् । अनेकभावेति । अनेकभावपदार्थेषु वर्तमानो यः पदार्थविभाजको द्रव्यत्वगुणत्वादिरूपोपाधिस्तद्वत्त्वमिति स्पष्टोऽर्थः । नाव्याप्तिरिति । अन्यथाऽनेकत्वविशिष्टभावत्वस्य प्रत्येकघटाकाशादिष्वभावादव्याप्तिर्दुर्वारैवेति भावः । ननु समवायवत्त्वमिति । अनुयोगितासम्बन्धेनेति शेषः । सामान्यादावित्यादिना विशेषपरिग्रहः । अभावात्—समवायेन कस्याप्यभावादित्यर्थः । एवं च समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वमित्यर्थोऽत्रापि कर्तव्यस्तेन च नित्यद्रव्येषु नाव्याप्तिरिति द्रष्टव्यम् ।

सत्तावत्त्वमिति । 'सदिति यतो द्रव्यगुणकर्मसु सा सत्ता' तद्वत्त्वं तत्त्वम् । अत एव द्रव्यं सत् गुणः सन् कर्म सदिति प्रयुज्यते । तथाचोक्तं भाष्ये—द्रव्यादीनां त्रयाणामपि सत्तासम्बन्ध—इति । ननु द्रव्यगुणकर्मभ्योऽतिरिक्तत्वेन सत्ता नानुभूयतेऽतो द्रव्याद्यन्यतममेव सत्तेति तु न शंक्यम्, कर्मादीनां कर्मस्ववृत्तिः सत्तायाः गुणकर्मणोरपि वृत्तिरिति ततो द्रव्यगुणकर्मवैधर्म्यस्य स्पष्टत्वादिति भावः । आद्यक्षण इति । प्रथमक्षण उत्पन्नद्रव्यस्य निर्गुणत्वं न्यायनयात् । गुणवदवृत्तीति । गुणवद्द्रव्यं तस्मिन्नवर्तमानो यो गुणत्वादिधर्मस्तद्वत्त्वम् । एवं कर्मवदवृत्तीति । कर्म क्रिया तद्वद्यद्द्रव्यं तत्रावर्तमानो यः पदार्थविभाजकोपाधिर्गुणत्वादिस्तद्वत्त्वस्य लक्ष्ये सत्त्वाल्लक्षणसमन्वयः । स्पष्टयति न हीत्यादिना । गुणवदवृत्तिकर्मवदवृत्तीति । किन्तु घटत्वादिकं द्रव्यत्वादिकं वा गुणवति कर्मवति च द्रव्ये वर्तते एवेत्यर्थः । तथा—गुणवदवृत्तिकर्मवदवृत्ति वेत्यर्थः । गुणत्वं समवायेन गुणे वर्तते न तु गुणवति द्रव्ये, एवं कर्मवत्त्वमपि समवायेन कर्मणि वर्तते न कर्मवति द्रव्ये इति भावः । न पदार्थेति ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वा गुणवद्वृत्ति कर्मवदवृत्ति वा, किन्तु गुणत्वादिकं तथा । आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः ॥ १४ ॥

सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥

सामान्येति । सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः । पारिमाण्डल्येति । पारिमाण्डल्यमणुपरिमाणम्, कारणत्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणं तु न कस्यापि कारणम् । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत्, तच्च न सम्भवति—परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात् महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात् ।

## विवृतिः ।

किन्तु द्रव्यविभाजकोपाधेरिति बोध्यमेवं चाकाशत्वमादाय नाकाशेऽतिप्रसङ्गोऽपीति हृदयम् । यद्वा गुणवद्वृत्तित्वे सति कर्मवद्वृत्तित्वे सति वा सत्ताव्याप्यजातिशून्यभावत्वं गुणादिपञ्चानां साधर्म्यमित्याद्युन्नेयम् ॥ १४ ॥

सामान्यानधीति । सामान्यादिचतुष्टयस्य सामान्यशून्यत्वं साधर्म्यमित्यर्थः । 'कारणत्वं चान्यत्र परिमाण्डल्यादिभ्य' इति प्रशस्तभाष्यमनुसृत्याह कारणत्वं तद्भिन्नानामिति । तद्भिन्नानां—पारिमाण्डल्यभिन्नानां, कारणत्वमित्यन्वयः । कारणतारूपं साधर्म्यमित्यर्थः । न कस्यापि—कार्यस्येति शेषः । तद्धि—अणुपरिमाणं हि । स्वाश्रयारब्धेति । स्वमणुपरिमाणं तदाश्रयं परमाणुद्व्यणुकं च तदारब्धं द्व्यणुकं त्र्यणुकात्मकं द्रव्यमन्यत्सुगमम् । असंभवे हेतुं निगमयति परिमाणस्येति । स्वसमानजातीयोत्कृष्टेति । स्वं परिमाणं तत्समानजातीयमणुत्वमहत्त्वादि तत उत्कृष्टेत्यर्थः । महदारब्धस्य महत्तरत्ववदिति । महता कपालद्वयपरिमाणेनारब्धस्य घटस्याधिकमहत्परिमाणत्ववदित्यर्थः । अणुजन्यस्य द्व्यणुकत्र्यणुकस्य अणुतरत्वप्रसङ्गात् । तथासति महत्त्वाभावात्त्रुटेः प्रत्यक्षं न स्यादिति अवधेयम् । द्व्यणुका-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः। इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम्, ज्ञायमानसामान्यं न प्रत्यासत्तिः, ज्ञायमानं लिङ्गं नानुमितिकरणमित्यभिप्रायेणोक्तम्। आत्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वात्परममहत्परिमाणमाकाशादेर्बोध्यम्। तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये। तन्न। ज्ञानातिरिक्तं प्रत्येवाकारणताया आचार्यैरुक्तत्वात्॥ १५॥

ननु कारणत्वं किम्? अत आह—

**अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता।**

विवृतिः।

दिपरिमाणनिष्ठजन्यतानिरूपितजनकता तु संख्यानिष्ठैव वक्ष्यते। परममहदित्यादि। कालादेः परममहत्परिमाणं परमाणुत्वादिकमतीन्द्रियसामान्यं विशेषाश्च न कस्यापि हेतव इत्यर्थः। इदमपि—पारिमाण्डल्यभिन्नानां कारणत्वस्याभिधानमपि। न योगिप्रत्यक्षे विषयस्य कारणतावादिनां प्राचामपि तु।नव्यानां तेषां मते ये योगिप्रत्यक्षे विषयस्य कारणत्वं न मन्यन्त इत्यवधेयम्। यथा योगिनः समाधिनाऽतीतानागतादिवस्तुप्रत्यक्षं विषयसत्तानिरपेक्षं तथा वर्तमानविषयपरमाणुपरिमाणादिप्रत्यक्षमपि ततस्तत्र तस्य न हेतुत्वमिति भावः। ज्ञायमानं सामान्यं—ज्ञानविषयीभूतं सामान्यम्। सामान्यलक्षणाजन्यज्ञानेऽनुमितौ च परमाणुपरिमाणस्य तत्त्वे पुनरपि मूलमसंगतमित्यत्रोक्तमिदं बोध्यम्। न प्रत्यासत्तिरिति। न प्रत्यक्षप्रयोजकसामान्यलक्षणप्रत्यासत्तिरित्यर्थः। किन्तु सामान्यज्ञानमात्रं प्रत्यासत्तिः। एवं ज्ञायमानलिङ्गमपि नानुमितिकरणमपि तु लिङ्गज्ञानमात्रं तथेत्यभिप्रायः। आत्ममानसप्रत्यक्षे—ज्ञानवानहमिच्छावानहमित्यात्मके, परममहत्परिमाणं—कारणताशून्यम्। आकाशादेरित्यादिना कालादिपरिग्रहः। तस्यापि—आत्ममहत्परिमाणस्यापि। ज्ञानातिरिक्तं—कार्यमिति शेषः। आचार्यैः—उदयनाचार्यैः। उक्तत्वादिति। ज्ञानं प्रति त्वात्ममहत्परिमाणस्य कारणता वारयितुमशक्यैवेत्याशयः॥ १५॥

कारणत्वं किमिति। कारणत्वपदार्थ एव तावत्क इत्यर्थः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥

अन्यथेति । तस्य—कारणत्वस्य ॥ १६ ॥

समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥

यत्समवेतं कार्यं भवति ज्ञेयन्तु समवायिजनकं तत् ।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥ १८ ॥

तत्रेति । समवायिकारणे आसन्नं—प्रत्यासन्नं, जनकं-कारणं, द्वितीयम्—असमवायिकारणमित्यर्थः । अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात् एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात् एवं ज्ञानादीनामपीच्छाद्यसमवायिकारणत्वं स्यात्, तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयम् । तुरीतन्तुसंयो-

विवृतिः ।

दण्डत्वादेरपि नियमेन घटादिपूर्ववृत्तित्वादव्याप्तिमाशंक्य मूलेऽन्यथासिद्धिशून्यस्येत्यभिहितं दण्डत्वादेरन्यथासिद्धियुक्ततैव न तच्छून्यतेत्यदोषः । नियतावश्यंभाविनी पूर्ववर्तिताऽव्यवहितपूर्ववृत्तिजातीयता । नियतेतिपदमनियतरासभादिवारणाय । नियतता च व्यापकता, सा च स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगितात्मिका । यद्यपि स्वव्यापकता स्वस्मिन्नप्यस्ति तथापि स्वप्राक्समयवर्तिता स्वस्मिन्दुर्घटा रासभादेस्तु घटं प्रति नियतत्वमेव नेत्यदोषः । एवं चारण्यस्थदण्डेऽपि स्वरूपयोग्यतायाः सद्भावाद्घटकारणतैव ॥ १६ ॥

तुरीतन्तुसंयोग इति । तुरीतन्तुसंयोगस्यापि तन्तुषु समवायेन वृत्तितया पटजनकत्वयोगादिति भावः । वस्तुतस्तु तुरीतन्तुसंयोगो निमित्तकारणं न त्वसमवायिकारणमिति न तन्तुसंयोगनाशेन पटनाशापत्तिरपीति ध्येयम् । वेगादीनामिति । वेगस्पर्शयोरभिघातनोदनयोरसमवायित्वं स्यादित्यर्थः । एवमेव ज्ञाने-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गस्तु तुरीसंपटयोगं प्रत्यसमवायिकारणं भवत्येव। एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति, तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयम्। आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव। अत्र समवायिकारणे प्रत्यासन्नं द्विविधं—कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च। आद्यं यथा—घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम्। तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति। द्वितीयं यथा—घटरूपं प्रति कपालरूपमसमवायिकारणम्। तत्र स्वगतरूपादिकं प्रति समवायिकारणं घटः, तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति। तथाच क्वचित्समवायसंबन्धेन क्वचित्स्वसमवायिसमवेतत्वसंबन्धेनेति फलितोऽर्थः। इत्थं च कार्यैकार्थकारणै-

विवृतिः।

च्छयोरपि यथायथमिच्छाप्रवृत्त्योस्तत्त्वमवधेयम्। तत्तत्कार्येति। प्रत्येकघटपटादिकार्यासमवायिकारणे निमित्तसमवायिकारणसंयोगभिन्नत्वमवश्यं निवेशनीयमित्यखण्डार्थः। आत्मविशेषगुणानां—ज्ञानादीनां, तद्भिन्नत्वं—आत्मविशेषगुणभिन्नत्वम्। सामान्यलक्षणे—यावत्कार्यासमवायिकारणलक्षण इत्यर्थः। द्विविधमिति। द्वे कार्यैकार्थकारणैकार्थरूपे विधे यस्य तादृशं प्रत्यासन्नत्वं द्विविधमिति फलितोऽर्थः। कार्यैकार्थप्रत्यासत्त्या इति। समवायेन कार्यसमानाधिकरणत्वं कार्यैकार्थप्रत्यासत्तिरेवं स्वसमवायिसमवायेन तत्त्वं कारणैकार्थप्रत्यासत्तिः। तत्र आद्ये प्रत्यासत्तिः एकार्थसमवेतत्वरूपसम्बन्धः। घटरूपमिति। घटे समवायसम्बन्धेन वर्तमानं रूपं प्रतीत्यर्थः एवं कपालरूपमित्यत्रापि ज्ञेयम्। स्वगतरूपादिकमित्यादिना गन्धादेरुपग्रहः। तेन सह—घटेन सह। तथाच—पूर्वोक्तद्विप्रकारकप्रत्यासत्तिविवक्षायां च। क्वचित्—आद्योदाहरणे। क्वचित्स्वसमवायीति। स्वं—कपालरूपं तत्समवायि कपालं तत्र समवेतो घटः, शिष्टं स्पष्टम्। असमवायिकारणस्य निष्कृष्टलक्षणं ब्रूते—इत्थं चेति। कार्यैकार्थप्रत्यासत्तिः—समवायसम्बन्धः, कारणैकार्थप्रत्यासत्तिः—स्वसमवायिसमवेतत्व-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कार्यान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्यवसन्नम् । आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः ॥ १७ ॥ १८ ॥

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामत आह—येनेत्यादिना ।

येन सह पूर्वभावः कारणमादाय वा यस्य ।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥ १९ ॥
जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥ २० ॥

यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः । यथा घटं प्रति दण्डत्वमिति ।

द्वितीयमन्यथासिद्धमाह—कारणमिति । यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः, किन्तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते, तद-

विवृतिः ।

सम्बन्धः । समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन कारणत्वे सत्यात्मविशेषगुणान्यत्वं सामान्यतोऽसमवायिकारणत्वमिति प्रकाशे । कार्येण कारणेन वा सहैकस्मिन्समवायिरूपाधिकरणे सम्बद्धत्वे सत्यात्मविशेषगुणभिन्नत्वे च सति कारणत्वं वा तत्त्वम् ॥ १७ ॥ १८ ॥

कियतामिति । कार्यं प्रत्यन्यथासिद्धा एव तावत्के के इत्यर्थः । यत्कार्य—घटकार्यं । येन रूपेण—दण्डत्वेन रूपेण, तद्रूपम्—दण्डत्वम् । यथेति । घटं प्रति दण्डस्य कारणता दण्डत्वेन गृह्यतेऽतो दण्डत्वस्य तथात्वमित्यर्थः ।

स्वातंत्र्येणेति । स्वभिन्नप्रकृतकार्यकारणान्वयव्यतिरेकाप्रयुक्तत्वेनेत्यर्थः । अन्वयव्यतिरेकौ न स्त इति । स्वाधिकरणे कार्यसत्त्वमन्वयः । स्वाभावाधिकरणे कार्यासत्त्वं व्यतिरेक इत्यत्र सूरयः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्यथासिद्धम् । यथा दण्डरूपम् ।

तृतीयमाह–अन्यं प्रतीति । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते, तस्य तत्कार्यं प्रति अन्यथासिद्धत्वम् यथा घटादिकं प्रत्याकाशस्य । तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात्, आकाशत्वं हि शब्दसमवायिकारणत्वम् । एवञ्च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम् । ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत्, पञ्चमीति गृहाण । नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत्, कवत्वादिकं विशेषपदार्थो वेति ।

चतुर्थमन्यथासिद्धमाह–जनकं प्रतीति । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं

### विवृतिः ।

यस्य स्वतंत्रतया कार्यसहनियतपूर्ववृत्तित्वरूपा व्याप्तिर्नेति यावत् । कारणमादायैव–स्वभिन्नकारणं गृहीत्वैव । दण्डरूपमिति । घटकार्यं–प्रतीति शेषः ।

अन्यं प्रति–शब्दं प्रति । यस्य–आकाशस्य । यत्कार्यं घटादिकार्यम् । अन्यं प्रतीत्यादिनोक्तं विशदयति–तस्य हीत्यादिना । तद्धि–आकाशं हि । तत्–आकाशं । शब्दाश्रयत्वेनेति । शब्दं प्रत्याकाशस्य समवायिकारणतामनुक्त्वैव शब्दाश्रयत्वमाश्रित्य घटादिकार्यं प्रति कारणत्वे कीदृगन्यथासिद्धत्वमित्यभिप्रायः । पंचमीति । अवश्यक्लृप्तनियतपूर्ववर्तिन इत्यादिकेत्यर्थः । किमवच्छेदकमिति । आकाशत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावादवच्छेकत्वासम्भवादिति भावः । शब्दनिष्ठजन्यतानिरूपिताकाशनिष्ठजनकतावच्छेदकत्वं कस्यास्तीति प्रष्टुराकूतम् । कवत्त्वादिकमपीति । ककारत्वादीनां वर्णधर्माणामित्यर्थः । ननु ककारादिवर्णानामनित्यत्वेनानेकत्वेन चावच्छेदकत्वस्वीकारे गौरवमित्यरुचावाह विशेषपदार्थो वेति ।

यत्कार्यजनकमिति । यत्कार्यं घटादिकार्यं तज्जनकं कुलालमि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रति अन्यथासिद्धत्वम् । यथा कुलालपितुर्घटादिकं प्रति । तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वेऽन्यथासिद्धिः । कुलालत्वेन जनकत्वे त्विष्टापत्तिः-कुलालमात्रस्य घटं प्रति जनकत्वात् ।

पञ्चममन्यथासिद्धमाह-अतिरिक्तमिति । अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणम्, अनेकद्रव्यवत्त्वमन्यथासिद्धम् । तत्र हि महत्त्वमवश्यं क्लृप्तं तेनानेकद्रव्यवत्त्वमन्यथासिद्धम् । न च वैपरीत्ये किं विनिगमकमिति वाच्यम्, महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ १९ ॥ २० ॥

## विवृतिः ।

त्यर्थः । यस्य-कुलालपितुः, यत्कार्यं-घटादिकमेवमग्रेऽपि । कुलालत्वेन रूपेण जनकत्वे त्विति । यदि घटनिष्ठजन्यतानिरूपितजनकता कुलालत्वेनाङ्गीक्रियते तदा कुलालपितुरपि कुलालत्वेन जनकत्वात्कारणत्वं निष्प्रत्यूहमेवेति भावः । तत्र हेतुमाह-कुलालमात्रस्येति ।

अवश्यक्लृप्तेति । गन्धनियतवृत्तिगन्धप्रागभावादेरेव गन्धोत्पत्तिनिर्वाहेण गन्धसहभूतरूपप्रागभावादेः पाकजगन्धं प्रति अन्यथासिद्धत्वं स्फुटमेव । कार्यसंभवे-घटोत्पत्तिरूपकार्यनिर्वाहे । तद्भिन्नमिति । दण्डादिभिन्नो रासभोऽन्यथासिद्ध इत्यर्थः । अत एव-अवश्यक्लृप्तनियतपूर्ववृत्तिव्यतिरिक्तस्यान्यथासिद्धत्वाङ्गीकारादेव । प्रत्यक्षे-घटादिप्रत्यक्षे, महत्त्वं-महत्परिमाणम् । अनेकद्रव्यवत्त्वमिति । परिमाण्डल्याभावविशिष्टद्रव्यत्वमित्यर्थः । तत्र हि-प्रत्यक्षे हि । ननु प्रत्यक्षेऽनेकद्रव्यवत्त्वस्य हेतुत्वं महत्त्वस्यान्यथासिद्धत्वं यदि कश्चिन्मन्येत तदानेकद्रव्यवत्त्वस्य तत्त्वे किं नियामकमित्याशङ्कते न चेति । समाधानहेतुमाह-महत्त्वत्वजातेरिति । कारणतावच्छेदकत्वे इति । घटादिप्रत्यक्षनिष्ठकार्यतानिरूपितकारणताया महत्त्वजातिनिष्ठावच्छेदकत्वे इत्यर्थः । लाघवं च त्रेधा शरीरकृतोपस्थितिकृतसम्बन्धकृतभेदादत्र शरीरकृतं बोध्यम् ॥ १९ ॥ २० ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥
तृतीयं तु भवेद्व्योम कुलालजनकोऽऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥

रासभादिरिति । यद्यपि यत्किञ्चिद्धटव्यक्तिं प्रति रासभस्य नियतपूर्ववृत्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि सम्भवे रासभोऽन्यथासिद्ध इति भावः । एतेष्विति । एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः—तेनैव परेषां चरितार्थत्वात् । तथा हि—दण्डादिभिरवश्यक्लृप्तनियतपूर्ववृत्तिभिरेव कार्यसम्भवे दण्डत्वादिकमन्यथासिद्धम् । नच वैपरीत्ये किं विनिगमकमिति वाच्यम्, दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धत्वकल्पने गौरवात् । एवमन्येषामप्यनेनैव चरितार्थत्वं सम्भवति ॥ २१ ॥ २२ ॥

विवृतिः ।

रासभस्य—गर्दभस्य । नियतपूर्ववृत्तित्वमिति । कार्याव्यवहितपूर्वक्षणावच्छिन्नकार्याधिकरणदेशनिरूपिताधेयतावदभावप्रतियोगितानवच्छेदकत्वं तत्त्वम् । घटजातीयं—यावद्धटव्यक्तिम् । सिद्धकारणभावैः—प्रसिद्धहेतुरूपैः । तद्व्यक्तेः—घटव्यक्तेः । पंचमो—रासभः, आवश्यकः—अवश्यमन्तव्यः । तेनैव—पंचमान्यथासिद्धेनैव, परेषां—दण्डत्वादीनां । चरितार्थत्वादिति । पंचमान्यथासिद्धेरेव सर्वत्र निर्वाहेण दण्डत्वदण्डरूपाकाशकुलालपितृरूपाणां चतसृणामन्यथासिद्धीनामकिञ्चित्करत्वादिति भावः । कार्यसंभवे—घटरूपकार्यसम्भवे । न च वैपरीत्य इति । घटरूपकार्यं प्रति दण्डत्वस्य हेतुत्वे दण्डस्य चान्यथासिद्धत्वे इत्यर्थः । विनिगमकमिति । दण्डत्ववृत्तिहेतुतां निरस्य दण्डनिष्ठहेतुतानियामकमिति प्रश्नाशयः । गौरवादिति । स्वाश्रयभ्रमीवत्तासम्बन्धेन दण्डनिष्ठकारणतामपेक्ष्य स्वाश्रयाश्रयभ्रमीवत्तासम्बन्धेन दण्डत्ववृत्तिकारणताकल्पनस्य स्फु-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥ २३ ॥

समवायीति । स्पष्टम् ।

गुणकर्मेति । असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं नतु गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यम् । अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः । तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि नाव्याप्तिः ॥ २३ ॥

अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।

अन्यत्रेति । नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वं तु समवायादिसम्बन्धेन वृत्तिमत्त्वं विशेषणतया नित्यानामपि कालादौ वृत्तेः ॥

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते—

विवृतिः ।

टमनीषत्करत्वादिति भावः ॥ २२ ॥

स्पष्टमिति । स्पष्टस्य स्वयमपि ज्ञातुं शक्यत्वेन दुरूहस्यैव स्पष्टीकरणमुचितमित्यभिप्रायः । क्रमत्यागमाशङ्क्याह—अथवेति । तद्वृति समवायेन वर्तमाना या सत्ताभिन्नजातिर्गुणत्वकर्मत्वरूपा तद्वत्त्वं गुणकर्मणोः साधर्म्यमित्यर्थः । तद्वति द्रव्येऽतिप्रसङ्गव्यावृत्तये वृत्त्यन्तम् । तेन—जातिघटितलक्षणकरणेन । ज्ञानादीनां आत्मविशेषगुणानामित्यर्थः ॥ २३ ॥

परमाण्वाकाशादीनीति । पृथिव्यादिचतुष्टयस्य परमाणवः आकाशकालदिगात्ममनांसि च नित्यद्रव्याणीत्यर्थः । आश्रितत्वमिति । यावत्पदार्थानामाश्रितत्वरूपोऽनुगतधर्मः । समवायादिना संयोगादेः संग्रहः । विशेषणतया—कालिकविशेषणतारूपसंबन्धेन । नित्यानां—परमाण्वाकाशादीनां । कालिकसंम्बन्धातिरिक्तसम्बन्धेनावृत्तित्वं वा तत्त्वं, तेन समवायेनावृत्तावपि नाव्याप्तिरित्यपि द्रष्टव्यम् ।

इदानीं द्रव्यसामान्यनिरूपणानन्तरमित्यर्थः । द्रव्यस्यैवेत्येवकारो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



क्षित्यादीनां नवानां तु द्रव्यत्वगुणयोगिता ॥ २४ ॥

क्षित्यादीनामिति । स्पष्टम् ॥ २४ ॥

क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥

क्षितिर्जलमिति । पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्तत्वं कर्मवत्त्वं वेगवत्त्वं च साधर्म्यम् । न च यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यम्, परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । मूर्तत्वमपकृष्टपरिमाणवत्त्वम्, तच्च तेषामेव–गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् । पूर्ववत् कर्मवत्त्वं–कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्, वेगवत्त्वं—वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम् ॥ २५ ॥

कालखात्मदिशां सर्वगतत्वं परमं महत् ।
क्षित्यादि पञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥ २६ ॥

विवृतिः ।

गुणादीन् व्यवच्छिनत्ति ॥ २४ ॥

मूर्तत्वमिति । परिच्छिन्नपरिमाणवत्त्वमित्यर्थः । वेगवत्त्वं वेगसंबन्धित्वं न तु वेगसदृशत्वमर्थः। यत्र घटादौ क्रियाकन्दुकादौ वा वेगो नोत्पद्यते स्म तत्राव्याप्तिव्युदासार्थमाह—पूर्ववत्कर्मवत्त्वमिति । 'धात्वर्थो हि क्रिया ज्ञेया भावः इत्यभिधीयते' इति हर्युक्तेः धात्वर्थरूपायां क्रियायामतिव्याप्तिमाशङ्क्य मूलस्थक्रियापदं व्याचष्टे—कर्मवत्त्वमिति । केचित्तु वाच्यतावच्छेदकत्वं क्रियात्वं वाचकतावच्छेदकत्वं धातुत्वमित्येवं लक्षणं कर्तव्यम् धात्वर्थत्वं क्रियात्वमित्यादेरन्योन्याश्रयदोषग्रस्तत्वादित्यपि वदन्ति। यत्र–उत्पन्नविनष्टरूपे, परत्वमपरत्वंपरत्वापरत्वधीः। परत्वादीति। परत्वादिसमानाधिकरणे वर्तमाना या द्रव्यत्वव्याप्यजातिः पृथिवीत्वजलत्वादिरूपा तद्वत्त्वस्येत्यर्थः । आकाशादौ मूर्तत्वव्यवहारवारणायाह–तच्चेति । मूर्तत्वं चेत्यर्थः । एषामेव—पूर्वोक्तपंचानामेव, कुतोऽपि—कस्यापेक्षयापि । पूर्ववदिति । परत्वादिवदित्यर्थः । कर्मवत्त्वं वेगवत्त्वं च पञ्चानां साधर्म्यं विज्ञेयम् २५॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कालेति । कालाकाशात्मदिशां सर्वगतत्वं सर्वमूर्तसंयोगित्वं परममहत्त्वं च । परममहत्त्वत्वं जातिविशेषः, अपकर्षानाश्रयपरिमाणत्वं वा । क्षित्यादीति । पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम् । तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम्, तेन ज्ञातो घट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात्तद्वति आत्मनि नातिव्याप्तिः, नवा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः, तस्यापि स्वरूपयोग्यत्वात् । महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षम् । अथवा आत्मावृत्तिविशेषगुणवत्त्वं

विवृतिः ।

सर्वगतत्वमिति । अतीतानागतव्यवहारः सार्वत्रिक इति सर्वगतत्वं कालस्य निष्प्रत्यूहमूहनीयम् । सर्वमूर्तसंयोगित्वं यावन्मूर्तपदार्थेषु संयोगसम्बन्धेन वृत्तित्वम् । परममहत्त्वमिति । क्षणलवमुहूर्तयामादिव्यवहारकारणे द्रव्ये कालाख्येति व्यवहारस्य सार्वत्रिकत्वात्सार्वत्रिकत्वम् तस्माच्च परममहत्त्वमिति सर्वानुमतः पन्थाः । अपकर्षेति स्पष्टम् । तच्च–भूतत्वं च, बहिरिन्द्रियं–घ्राणादिपंचकम्, विशेषगुणो–गन्धादिः । सामान्यविशेषत्वं गुणानामुपरिष्टाद्बोद्धव्यम् । आत्मन्यतिप्रसङ्गव्युदासाय बहिःपदम् । बाह्येन्द्रियविषयविशेषगुणवत्त्वं तत्त्वम् । लौकिकप्रत्यक्षेति । वक्ष्यमाणसंयोगादिषट्कसंनिकर्षजन्यसाक्षात्कारेत्यर्थः । तेन–पूर्वोक्तकथनेन । ज्ञानस्यापीति । ज्ञातो घट इत्यत्र प्रत्यक्षात्मकज्ञाने विषयतया प्रकारीभूतज्ञानस्यापीत्यर्थः । उपनीतभानविषयत्वादिति । ज्ञानलक्षणासंनिकर्षजन्यं ज्ञानमुपनीतभानमुच्यते तद्विषयत्वात्तन्निरूप्यत्वात् । अत्र संनिकर्षद्वयमस्ति-घटांशे लौकिको ज्ञानांशे त्वलौकिकः । तद्वति तादृशज्ञानवति, नातिव्याप्तिः भूतलक्षणस्येति शेषः । नन्वेवं परमाणौ भूतत्वलक्षणं न संघटते तद्रूपादेरप्रत्यक्षत्वादित्याशंक्य समाधत्ते तस्यापीति । परमाणुरूपादेरपीत्यर्थः । अप्रत्यक्षत्वे हेतुमाह महत्त्वेति । परमाणुरूपादेरतिसौक्ष्म्यं प्रत्यक्षे च महत्त्व कारणमित्यभिप्रायः । कारणतावच्छेदकधर्मवत्त्वं हि स्वरूपयोग्यत्वं तच्च न परमाणुरूपे तस्यानुद्भूतत्वादित्याह अथवेति । आत्मावृत्ती रूपादिविशेषगुणस्तद्वत्त्वम् भूतत्व-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तत्त्वम् । चत्वारीति । पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम् ॥ २६ ॥

द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥

पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वम् । न च द्रव्यानारम्भके घटादावव्याप्तिः, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । आकाशशरीरिणामिति । आकाशात्मनामव्याप्यवृत्ति-क्षणिकविशेषगुणवत्त्वं साधर्म्यमित्यर्थः । आकाशस्य विशेषगुणः शब्दः, स चाव्याप्यवृत्तिर्यदा किंचिदवच्छेदेन शब्द उत्पद्यते तदा-न्यावच्छेदेन तदभावस्यापि सत्त्वात् । क्षणिकत्वं च तृतीयक्षणवृत्ति-ध्वंसप्रतियोगित्वम् । योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्य-

विवृतिः ।

मित्यर्थः ।

पृथिव्यप्तेज इति । इयं षष्ठ्यर्थे सप्तमी तेन द्रव्यारम्भकत्वं पृथि-व्यादिचतुष्टयस्य साधर्म्यमर्थः । द्रव्यान्तरारम्भसमवायिकारणता-वच्छेदकतया तस्य तथात्वमस्तीति निष्कर्षः ॥ २६ ॥

घटादौ–घटरूपपृथिव्याम् । अव्याप्तिर्द्रव्यारंभकत्वस्येति शेषः । द्रव्यत्वव्याप्यजातीति । पृथिवीत्वादिकेत्यर्थः । तादृशजातिमत्त्वस्य यावद्घटादिकार्येपूपपत्तेर्द्रव्यारम्भकत्वमुपपन्नम् । मूलस्थशरीरिशब्द-स्य जीवात्मपरतामभिसन्धायाह आकाशात्मनामिति । अव्याप्येति । यस्तु सर्वदेशावच्छेदेन व्याप्य वर्तत इति व्याप्यवृत्तिस्तदन्योऽव्याप्य-वृत्तिः । क्षणे भवः क्षणिकः । विशेषगुणो बुद्ध्यादिस्तद्वत्त्वम् । एवं चाव्याप्यवृत्तिविशेषगुवणत्वं क्षणिकविशेषगुणवत्त्वं चाकाशजीवात्म-नामनुगतो धर्मः । स्वाधिकरणवृत्त्यभावप्रतियोगित्वमव्याप्यवृत्तित्वमु-न्नेयम् । कः कस्य विशेषगुण इत्यपेक्षायामाह–आकाशस्येति । स च–शब्दश्च । किञ्चिदवच्छेदेन–भेर्याद्यवच्छेदेन । तदा–तस्मिन् काले, अन्यावच्छेदन–घटाद्यवच्छेदेन । तदभावस्यापि–शब्दाभाव-स्यापि । घटपटादिवारणाय तृतीयक्षणवृत्त्यन्तम् योग्यविभ्विति । प्रत्यक्षयोग्यविभव आकाशादयस्तद्विशेषगुणाः शब्दादयस्तेषाम्, स्वपदं नाश्यत्वाभिमतपरमन्यत् स्पष्टम् । योग्यपदकथनेनायोग्यानां

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वात्प्रथमशब्दस्य द्वितीयशब्देन नाशः । एवं ज्ञानादीनामपि । ज्ञानादिकं यदात्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽस्त्येव । एवं ज्ञानादिकमपि क्षणद्वयावस्थायि । इत्थं चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं चार्थः । पृथिव्यादौ रूपादिर्विशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम् । पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीत्यतो विशेषगुणेत्युक्तम् । न च रूपादीनामपि कदाचित्तृतीयक्षणे नाशसंभवात्क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यम्, चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात् । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति, क्षणचतुष्टयं तु न किमपि जन्यज्ञानादिकं तिष्ठति रूपत्वादिकं तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्तत इति तद्व्युदासः । ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वाज्ज्ञानत्वस्य

विवृतिः ।

धर्मादीनां व्युदासः । योग्यत्वं च प्रत्यक्षविषयतावच्छेदकत्वम् । रूपादिनाशे संयोगादिनाशे च व्यभिचारमपनेतुं यथायथं विभुविशेषपदे । आत्मनि विभाविति । विभुत्वादेवात्मनः परममहत्त्वमुक्तम् 'कालखात्मदिशामित्यत्र' । सूत्रकृद्भिश्चोक्तम् 'वैभवान्महानाकाशस्तथा चात्मा चे' ति । तदभावो–ज्ञानेच्छाद्यभावः । ज्ञानादीनामपि अव्याप्यवृत्तित्वादिकं साधयितुमाह–एवं चेति । अतोऽव्याप्यवृत्तीत्युक्तमिति । तेनोक्तलक्षणस्य नातिप्रसङ्ग इत्यर्थः । विशेषगुणेत्युक्तमिति । संयोगादेश्च विशेषगुणत्वं नास्त्येवेत्यर्थः । अतिव्याप्तमिति । क्षणिकविशेषगुणवत्त्वेति द्वितीयलक्षणस्य पृथिव्यादावतिप्रसङ्ग इत्यर्थः । चतुःक्षणवृत्तीति । चतुःक्षणवृत्ति जन्यं घटादिकं रूपादिकं च तदवृत्तिजातिः शब्दत्वज्ञानत्वरूपा जातिस्तादृशजातिमद्विशेषगुणः शब्दो ज्ञानं च तद्वानाकाश आत्मा चेति विवक्षणे न पृथिव्यादिष्वतिव्याप्तिगंधोऽपि । तदर्थत्वात्—क्षणिकविशेषगुणशालित्वात् । अपेक्षाबुद्धिरिति । अपेक्षाबुद्ध्यात्मकं ज्ञानमित्यर्थः । जन्यज्ञानादिकमिति । जन्यमुत्पत्तिधर्मि । ज्ञानादिकमित्यादिनेच्छाद्युपग्रहः । चतुष्टयस्थायिनीति । क्षणचतुष्टयेत्युपलक्षणं तेन बहु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तद्वृत्तित्वाज्जन्येत्युक्तम् । यद्याकाशजीवात्मनोः साधर्म्यं तदा जन्येति न देयम्—द्वेषत्वादिकमादाय लक्षणसमन्वयात् । परममहत्त्वस्य तादृशगुणत्वाच्चतुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमाद्द्वित्वादीनामपि तथात्वात्तद्वारणाय विशेषेति । त्रिक्षणवृत्तित्वं वा वाच्यम् । द्वेषत्वादिकमादायात्मनि लक्षणसमन्वयः ॥ २७ ॥

रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥

पृथिव्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वं चेत्यर्थः । न च चक्षुरादीनां भर्जनकपालस्थवह्नेरूष्मणश्च रूपवत्त्वे किं मानमिति वाच्यम्, तत्रापि तेजस्त्वेन रूपानुमानात् । एवं वाय्वानीतपृथिवीजलते-

विवृतिः ।

कालस्थिती रूपत्वादेर्न विरुध्यते । तद्व्युदासः—'चतुःक्षणवृत्ति' पदेन रूपत्वादिजातिव्युदासः । तद्वृत्तित्वात्—ईश्वरज्ञानवृत्तित्वात् । जन्येत्युक्तमिति । लक्षणे जन्यपदमीश्वरज्ञानसंग्रहाय निवेशितमित्यर्थः । एवमग्रेऽपि । द्वेषत्वादिकमादायेति । ज्ञानत्वजातिस्थाने केवलजीवात्मगुणवृत्तिद्वेषत्वादिजातिमादायैव लक्षणसंगतेरित्यर्थः । परममहत्त्वस्य आकाशकालादेरिति शेषः । तादृशगुणत्वात्—चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वात् । तथात्वात्—तादृशजातिमद्गुणत्वात् । तद्वारणायेति । कालादिष्वतिप्रसङ्गवारणायेत्यर्थः । विशेषेति । परममहत्त्वाद्द्वित्वादीनां सामान्यगुणत्वेन विशेषगुणत्वाभावाच्च न दोष इति ध्येयम् । त्रिक्षणवृत्तित्वं वेति । लाघवाच्चतुःक्षणवृत्तित्वस्थाने इति शेषः ॥ २७ ॥

मूले रूपद्रवत्वेति । द्वन्द्वान्त इति न्यायबलेन योगीति पदं प्रत्येकमन्वेति, तेन रूपयोगित्वं द्रवत्वयोगित्वं प्रत्यक्षयोगित्वं च पृथिव्यप्तेजसामनुगतो धर्म इत्यर्थः पर्यवस्यति । भर्जनेति । भर्जनकपालस्थो रेणुस्तद्गतवन्हेरित्यर्थः । किं मानम्—प्रत्यक्षादिमध्ये कतरत्प्रमाणम् । तत्रापि—चक्षुरादिष्वपि । रूपानुमानादिति ॥ नेत्रेन्द्रियं रूपवत्तेजस्त्वात्, भर्जनकपालादिनिष्ठवन्ही रूपवान् तेजस्त्वादित्यनु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम्। न च घटादौ द्रुत-सुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यम्, द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। घृतजतुप्रभृतिषु–पृथिवीषु-जलेषु–द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात्तत्र च पृथिवीत्वादिसत्त्वात्तदादाय सर्वत्र लक्षणसमन्वयः। न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तमतिव्याप्तं च रूपादाविति वाच्यम्, चाक्षुषप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति। गुरुणी इति। गुरुत्ववत्त्वं रसवत्त्वं पृथिवीजलयोरित्यर्थः। न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानां च रसादिमत्त्वे किं मानमिति वाच्यम्, तत्रापि पृथिवीत्वादिना तदनुमानात्। द्वयोरिति।

## विवृतिः।

मानशरीरम्। ननु तत्र तेजस्त्वमेव स्वरूपासिद्धमिति न शंक्यम्, उष्णस्पर्शवत्त्वेन तदनुमानात्। पृथिवीत्वादिनेति। पृथिवीजलतेजोभागान् पक्षीकृत्येत्यर्थः। पृथ्वीजलतेजोभागा रूपवन्तः पृथिवीत्वजलत्वतेजस्त्वहेतुभ्य इत्यनुमानमवधातव्यम्। द्रवत्ववद्वृत्तीति। द्रवत्ववद्वृत्तिर्या द्रव्यत्वव्याप्यजातिः पृथिवीत्वादिस्तद्वत्त्वस्येत्यर्थः। वायावतिप्रसङ्गवारणाय वृत्त्यन्तमेवमग्रेऽपि। पृथिव्यादिषु लक्षणसमन्वयं दर्शयति–घृतजत्विति। तत्र च–पृथ्वीजलतेजःसु च, पृथिवीत्वादीत्यादिना जलत्वतेजस्त्वयोरुपसंग्रहः। तदादाय–पृथिवीत्वादिकमादाय। ननु पृथिव्यादिपरमाण्वादौ पूर्वोक्तप्रत्यक्षविषयताया असत्त्वेन रूपादौ च सत्त्वेन तदप्रत्यक्षत्वप्रत्यक्षत्वरूपाव्याप्त्यतिव्याप्तीत्याशङ्क्ते न चेति। समाधत्ते–चाक्षुषेति। जातिरत्र पृथिवीत्वादिरतिरोहितार्थमन्यत्। आत्मनीति। आत्मनो महत्त्वाभावेन चाक्षुषप्रत्यक्षभावान्नातिप्रसङ्ग इत्यर्थ एवमन्यदप्युन्नेयम्। गुरुत्ववत्त्वमिति। इदं पतनवत्त्वमप्युपलक्षयति। उल्का पततीति प्रयोगस्तु भाक्त एव। पार्थिवादीत्यादिना जलीयतैजसपरिग्रहः। किंमानं–किंहेतुकमनुमानम्। तत्रापि-घ्राणेन्द्रियादिपार्थिवाभागेष्वपि; तदनुमानात्—रसादिमत्त्वानुमानात्। तच्च घ्राणेन्द्रियादीनि रसवन्ति पृथ्वीत्वादिति। घटादौ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पृथिवीतेजसोरित्यर्थः । न च नैमित्तिकद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यम्, नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ २८ ॥

आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।

पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः ।

यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥

ज्ञेयत्वादिकं विहायेति बोध्यम् । तत्तु न कस्यापि वैधर्म्यं—केवलान्वयित्वात् ॥ २९

स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः ।
स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥

विवृतिः ।

घटादिपृथिव्याम्, वह्न्यादौ—वन्ह्यादितेजसि । नैमित्तिकेति । द्रव्यत्वव्याप्यजातिः पृथ्वीत्वादिस्तद्वत्त्वस्य साधर्म्यस्य विवक्षणे तात्पर्यादित्यर्थः ॥ २८ ॥

विशेषगुणवत्त्वमिति । साधर्म्यमित्यर्थः । ज्ञेयत्वादिकमित्यादिना प्रमेयत्वादीनां संग्रहः । ज्ञेयत्वादिकं विना यो यस्य समानो धर्म उक्तः स एवान्यस्य विरुद्धो धर्मोऽभ्युपेय इत्याशयेनाह—तत्त्विति । ज्ञेयत्वादिकमित्यर्थः । तत्र हेतुमाह—केवलान्वयित्वादिति । अत्रेदं बोध्यम्-हेतुस्तावत्केवलान्वय्यन्वयव्यतिरेकिकेवलव्यतिरेकिभेदात्त्रिविधः । तत्र सर्वधर्मिगतो धर्मः केवलान्वयी, यथा प्रमेयत्वाभिधेयत्वविशेष्यत्वविशेषणत्वादयो, न ह्यस्ति तादृशं किञ्चिद्यत्रैते धर्मा न विद्यन्ते, तथा च सर्वगतत्वमत्यन्ताभावाप्रतियोगित्वं वा केवलान्वयित्वमित्यन्यत्र विस्तरः ॥ २९ ॥

मूले स्पर्शादयोऽष्टावित्याद्युक्तिस्तु—

वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश ।
दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च ॥

इति प्राचामनुरोधेन द्रष्टव्या । स्पर्शसंख्यापरिमाणपृथक्त्वसंयो-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३२ ॥
धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश ।
संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३३ ॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥

ते च, खे—आकाशे ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

साधर्म्यवैधर्म्ये निरूप्य संप्रति प्रत्येकं पृथिव्यादिकं निरूपयति—

तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।
षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥

विवृतिः ।

गविभागपरत्वापरत्वान्यष्टौ एको वेगाख्यसंस्कारश्चेति संकलनया वायोर्नव गुणाः । अष्टौ स्पर्शादयस्त्रयो रूपद्रवत्ववेगा मिलित्वैकादशगुणा तेजसः । अष्टौ स्पर्शादयः षड् वेगादयो मिलिताश्चतुर्दशगुणा जलस्य । अष्टौ स्पर्शादयः षड् वेगगुरुत्वद्रवत्वरूपरसगन्धाख्या मिलित्वा चतुर्दश पृथिव्याः । षड् बुद्ध्यादयः पञ्च संख्यादयः एको भावनाख्यसंस्कारो द्वौ धर्माधर्मौ संकलिताश्चतुर्दश जीवात्मनः । पञ्च संख्यादयः एकः शब्दः इति षड् गुणा आकाशस्य । पञ्च संख्यादयस्त्रयो बुद्ध्यादयो मिलित्वाष्टौ ईश्वरस्य । संख्याबुद्धीच्छाप्रयत्नसुखान्येवेश्वरस्य गुणा इति केषांचिदनुभवो युक्तायुक्तत्वं स्वयमूहनीयम् । पञ्च संख्यादयस्त्रयः परत्वापरत्ववेगाख्या मनसः । मूले मानस इत्यत्र स्वार्थे प्रज्ञादित्वादण् बोध्यः ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥

मूले तत्रेति निर्धारणसप्तम्यन्तात्त्रल् नवद्रव्यमध्य इत्यर्थः । ननु समवाय्यसमवायिनिमित्तकारणभेदेन हेतूनां त्रैविध्याद् गन्धं प्रति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गन्धहेतुरिति। गन्धसमवायिकारणमित्यर्थः। यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितम्, तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम्। तथाहि—पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिध्यति, अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः। न च पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वाच्यम्, तत्रापि गन्धसत्त्वात्।

विवृतिः।

पृथिव्याः किं कारणत्वमित्याशंकापनोदायाह–गन्धसमवायीति। समवायेन गन्धरूपकार्यं प्रति तादात्म्येन पृथिव्याः कारणत्वमित्यर्थः। गन्धवत्त्वमात्रमिति। अत्र पक्षे गन्धवत्त्वं लक्षणं पृथिवीत्वं लक्ष्यतावच्छेदकम्। गन्धवत्त्वमिति च गन्धो विद्यतेऽस्या इति गन्धवती तद्भावस्तत्त्वं तच्च गन्ध एव। मतुबन्ताद्विहितो भावप्रत्ययः प्रकारं गमयतीत्युक्तेरेवं च गन्धनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वं पृथिव्या लक्षणं पर्यवस्यतीत्यलं पल्लवेन। सुगन्धि सलिलं सुरभिर्वायुरित्याद्यनुगतमतिसाक्षिकतया गन्धवत्त्वं जलादावपि निराबाधमिति तु न शंक्यम्। समवायसंबन्धेन गन्धवत्त्वमित्यभ्युपगमात्। अन्यदेव प्रकृते पृथ्वीलक्षणमित्याशयेनाह–तथापीति। प्रमाणोपन्यासायेति। अस्ति पृथिवीत्वजातिर्गन्धसमवायिकरणतावच्छेदकत्वादित्यनुमानरूपप्रमाणदर्शनायेत्यर्थः।

पृथिवीत्वं हि–पृथ्वीत्वजातिर्हि। गन्धसमवायीति। समवायेन गन्धनिष्ठकार्यतानिरूपितं पृथिवीनिष्ठसमवायिकरणत्वमवश्यं किञ्चिद्धर्मावच्छिन्नं कारणत्वात्, स च धर्मो लाघवात्तदवच्छेदको जातिरूपः ( पृथ्वीत्वरूपः ) एव सिद्ध्यतीति निष्कर्षः। यद्वा पृथिवीत्वं क्वाचित्कपदप्रवृत्तिनिमित्तं जातित्वाद्घटत्वदिति सामान्यतः सिद्धौ पृथिवीपदं पृथिवीत्वप्रवृत्तिनिमित्तकमितराप्रवृत्तिनिमित्तकत्वे सति प्रवृत्तिनिमित्तकत्वाद्यन्नैवं तन्नैवमिति साध्यमित्युपस्कारकृत्। विपक्षे बाधकमाह–अन्यथेति। गन्धत्वावच्छिन्नं प्रति पृथिव्या हेतुताया अस्वीकार इत्यर्थः। आकस्मिकत्वापत्तेः–गन्धं प्रति नियतकरणतानियमानुपपत्तेरित्यर्थः। पाषाणादौ–पाषाणादिरूपपृथिव्यां, गन्धवत्त्वं–गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्। तत्रापि–पाषाणा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते, कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते। भस्मनो हि पाषाणध्वंसजन्यत्वात्पाषाणोपादानोपादेयत्वं सिद्ध्यति—यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः। दृष्टं चैतत्खण्डपटे महापटध्वंसजन्ये। इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वं, तथा च तस्यापि गन्धवत्त्वे बाधकाभावः। नानारूपेति। शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्तते न तु जलादौ, तत्र शुक्लस्यैव सत्त्वात्। पृथिव्यां तु एकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसंभवात्। नच यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिरिति वाच्यम्। रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात्।

### विवृतिः।

द्वावपि, पृथिवीत्वेनेति शेषः। गन्धसत्त्वात्—गन्धस्यानुमानिकत्वात्। ननु यद्यस्ति तर्हि कथं नोपलभ्यते कारणसत्त्वे कार्यावश्यंभावनियमादित्याशंक्याह—अनुपलब्धिस्त्विवति। गन्धानुपलम्भस्तु अनुद्भूततया संगच्छते इत्यर्थः। तद्भस्मनि—पाषाणभस्मनि। कथमुपलभ्यत इत्यन्वयः। पाषाणादावभावेन तद्भस्मनिसुतरामभावादिति भावः। पाषाणोपादानोपादेयत्वमिति। पाषाणनिष्ठोपादानतानिरूपितोपादेयता भस्मनिष्ठा सिद्ध्यतीत्यर्थः। यद्द्रव्यमिति। यद्द्रव्यं—भस्मादिद्रव्यं, यद्द्रव्यध्वंसजन्यं-पाषाणादिद्रव्यध्वंसजन्यं, तद्द्रव्यं—भस्मादिद्रव्यं, तद्द्रव्यस्य—पाषाणादिद्रव्यस्योपादानस्योपादेयमिति निष्कर्षः। ननु किं क्वचिदन्यत्रापि दृष्टमीदृगुपादानोपादेयत्वमित्यत्राह—दृष्टं चैतदिति। खण्डपट इति। अतिमहत्पटनाशादुद्भूते पटैकदेश इत्यर्थः। तज्जन्येति। पाषाणपरमाणुजन्येत्यर्थः। पृथिवीत्वं—सिद्ध्यतीत्यर्थः। तथाच—पाषाणस्य पृथिवीत्वसिद्धौ च। तस्यापि—पाषाणस्यापि। बाधकाभाव इति। प्रतिबन्धकाभावात्पाषाणेऽपि गन्धो निष्प्रत्यूह एवेति भावः। तत्र—जलादौ, शुक्लस्यैवेत्येवकारेण नीलादिषड्रूपव्युदासः। नानारूपेति। शुक्लनीलपीतरक्तहरितकपिशचित्रभेदेनेत्यर्थः। तत्र—पटादौ। रूपद्वयवदिति। जातिरत्र पृथिवीत्वादिः। स्पष्टमन्यत्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात्, न्यायनये घटादावपि तत्सत्त्वाल्लक्षणसमन्वयः । षड्विध इति । मधुरादिभेदेन यः षड्विधो रसः स पृथिव्यामेव । जले च मधुर एव रसः । अत्रापि पूर्ववद्रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः । गन्धस्त्विति । द्विविध इति वस्तुस्थितिमात्रं न द्विविधगन्धवत्त्वं लक्षणं द्विविधत्वस्य व्यर्थत्वात् । द्वैविध्यं च सौरभासौरभभेदेन बोध्यम् ॥ ३५ ॥

स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः ।

तस्याः—पृथिव्याः । अनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्तते इत्युक्तं पाकज इति । इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तम् । वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणम्, अधिकस्य वैय-

विवृतिः ।

गौरवात्पक्षान्तरमाह—रूपनाशवदिति । नाशत्वस्याखण्डोपाधिरूपत्वेन गौरवाभावादिति हृदयम् । तत्सत्त्वात्—रूपनाशरूपान्तरसत्त्वात्, मधुरादीत्यादिना कटुकषायाम्ललवणतिक्तानां परिग्रहः । आश्रयं विभज्य दर्शयति—पृथिव्यामेवेति । नीलपीताद्यनेकप्रकारं रूपं पृथिव्या एवेत्यर्थः । मधुर एवेति । तेनान्यरसोपलंभस्तु क्वचिदुपाधिनिबन्धन एव माधुर्यप्रत्ययोऽप्यामलकभक्षणादेरुत्तरकालिकः । नानारसानुत्पादस्थलेऽव्याप्तिं निराकरोति अत्रापीति । द्विविधगन्धवत्त्वं पृथिवीत्वमिति भ्रमवारणायाह—द्विविध इति । लक्षणं—लक्षणान्तरं, पृथिव्या इति शेषः । व्यर्थत्वात्—निष्फलत्वात् । सौरभासौरभेति । सुगन्धोऽयं दुर्गन्धोऽयमित्युभयथा प्रयोगदर्शनमेवात्र बीजम् ॥ ३५ ॥

अनुष्णाशीतेति । अव्यक्तोष्णाव्यक्तशीतेत्यर्थः । इत्युक्तं पाकज इतीति । स च स्पर्शो वायौ पाकजत्वेन रूपेण नास्त्येवेति न दोषः । इति ज्ञापनार्थं—न तु पृथिवीलक्षणाभिप्रायेणेत्यर्थः । पृथिव्यास्तर्हि किं लक्षणमित्यत आह—पाकजेति । मात्रपदाद्याधिकस्य व्यर्थत्वे उक्तेऽपि स्पष्टप्रतिपत्तये आह—अधिकस्येति । नास्तीति । अतोऽव्याप्ते-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ध्यर्थात्। यद्यपि पाकजस्पर्शः पटादौ नास्ति, तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः।

नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥
अनित्या तु तदन्या स्यात्सैवावयवयोगिनी।
सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥

सा पृथिवी द्विविधा-नित्या अनित्या चेत्यर्थः। अणुलक्षणा परमाणुरूपा पृथिवी नित्या। तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्वाऽप्यनित्येत्यर्थः। सैव-अनित्या पृथिव्येवावयववतीत्यर्थः। ननु अवयविनि किं मानम्? परमाणुपुञ्जैरेवोपपत्तेः। न च परमाणूनामतीन्द्रियत्वाद्घटादीनां प्रत्यक्षं न स्यादिति वाच्यम्। एकस्य परमाणोरप्र-

विवृतिः।

दुर्वारत्वेनोक्तलक्षणसमन्वयो दुर्घट इत्याशङ्क्याह–तथापीति। वृत्तिरत्र समवायेन बोध्या, जातिः–पृथिवीत्वमन्यत्स्पष्टम्।

पृथ्वीं विभजते सेति। द्विविधामपि पृथिवीं दर्शयति–नित्याःऽनित्या चेति। गन्धवतः कार्यस्यद्रव्यान्तरत्वापत्तिवारणाय पूर्वपदं, अवयवानामनवस्थापत्तिवारणाय द्वितीयपदं च। परमाणुरूपा–ध्वंसाप्रतियोगिनीत्यर्थः। परमाणुलक्षणन्तूक्तमभियुक्तैः—

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः।
तस्य षष्ठतमो भागः परमाणुः प्रकीर्तितः ॥ इति ॥

सर्वाप्यनित्या–ध्वंसप्रतियोगिनीत्यर्थः। अवयविनि किं मानमिति। पृथिवी सावयवेत्यत्रैव किं प्रमाणमित्यर्थ इति बौद्धशंकनम्। परमाणुपुञ्जैः–विलक्षणसंयोगसहितैः परमाणुभिरेवेत्यर्थः। बौद्धः सिद्धान्तिनः शंकामुत्थाप्य निराकरोति–न चेति। अतीन्द्रियत्वादिति। जन्यद्रव्यावयवत्वमक्रियावत्त्वं निरवयवत्वं नित्यत्वमपि परमाणूनामनुसंधेयम्। ननु परमाणावेव किं प्रमाणनिति तु न शंक्यम्। त्रसरेणुः सावयवद्रव्यारब्धः चाक्षुषद्रव्यत्वादित्यनुमानेन द्व्यणुकवत्परमाणोरपि सिद्धेरित्याहुः। घटादीनामिति। यदि घटादीनां परमाणुपुंजात्मकत्वं स्वीक्रियेत तदा परमाणुवद्घटादीनामपि साक्षात्कारो न

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्यक्षत्वात्। यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेपि तत्समूहस्य प्रत्यक्षत्वम्। न चैको घटः स्थूल इति बुद्धेरनुपपत्तिरिति वाच्यम्। एको महान्धान्यराशिरितिवदुपपत्तेः। मैवम्, परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षायोग्यत्वात्। दूरस्थकेशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात्। न च तदानीमदृश्यपरमाणुपुञ्जाद्दृश्यपरमाणुपुञ्जस्योत्पन्नत्वान्न प्रत्यक्षत्वे विरोध इति वाच्यम् अदृश्यस्य दृश्यानुपादानत्वात्। अन्यथा चक्षुरूष्मादिसंततेरपि कदाचिद्दृश्यत्वप्रसङ्गात्। न चातितप्तैतलादौ कथमदृश्यदहनसंततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्। तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात्। न चादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरु-

विवृतिः।

भवेदिति प्रश्नाशयः। तत्समूहस्य–परमाणुसमूहस्य। उक्तमेवार्थं दृढयितुमाह–यथेति। तत्समूहस्य–केशसमूहस्य। प्रत्यक्षत्वमिति। एवं च मदुक्तरीत्या घटादीनां प्रत्यक्षत्वोपपत्तेः पुनरप्यवयविनि किं मानमिति बौद्धाभिमानः। अनुपपत्तिरिति। परमाणूनामनेकत्वादणुत्वाच्चेति भावः। समाधानहेतुमाह–एको महानिति। धान्यसमूहगतैकत्वमहत्त्वप्रतीतिवद्घटेऽपि तत्संभवादिति तत्त्वम्। तत्समूहस्यापि–परमाणुसमूहस्यापि। बौद्धमतोपोद्बलकं दृष्टान्तमपि प्रत्याचष्टे–दूरस्थेति। तस्यैव–दूरस्थकेशस्यैव। प्रत्यक्षत्वादिति। योऽतीन्द्रियस्तस्य सन्निधानेऽसन्निधाने वा न प्रत्यक्षयोग्यता यस्तु नातीन्द्रियस्तस्य दूरेऽयोग्यता सन्निधाने च योग्यतेति विवेकः। तदानीमुत्पत्तिकाले। दृश्येति। द्रष्टुं योग्यमेवमग्रेऽपि। उत्पन्नत्वादिति। क्षणभङ्गवादिमतमभिप्रेत्येदम्। अदृश्यपदार्थनिष्ठोपादेयतानिरूपितोपादानता दृश्यपदार्थनिष्ठा। न भवितुमर्हत्युभयोर्भिन्नरूपत्वादित्याह–अदृश्यस्येति। वैपरीत्यदोषमाह अन्यथा–अदृश्यस्य दृश्योत्पादकत्वाङ्गीकारे, चक्षुरूष्मादिसंततेरदृश्यस्येति शेषः। दृश्यत्वप्रसङ्गादिति। ततो नादृश्यं दृश्योपादानमिति। कथं–पात्रव्यवधानादिति भावः। तदन्तःपातिभिरति-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्पत्तिरिति वाच्यम्। यतो न वयं दृश्यत्वमदृश्यत्वं वा कस्यचित्स्वभावादाचक्ष्महे, किंतु महत्त्वोद्भूतरूपादिकारणसमुदायवशात् दृश्यत्वं तदभावे चादृश्यत्वम्। तथा च त्रसरेणोर्महत्त्वात्प्रत्यक्षत्वं न तु द्व्यणुकादेस्तदभावात्। नहि त्वन्मतेऽपि संभवतीदं परमाणौ महत्त्वाभावात्। इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम्। तेषां चावयवावयवधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः। अतः क्वचिद्विश्रामो वाच्यः। यत्र तु विश्रामस्तस्यानित्यत्वेऽसमवेतभावकार्योत्पत्तिप्रसङ्ग इति तस्य नित्यत्वम्। महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः। न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यम्। त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः।

विवृतिः।

तप्ततैलान्तःपातिभिः, स्वभावात्स्वरूपात्, आचक्ष्महे-मन्यामहे इत्यर्थः। तदभावे-महत्त्वोद्भूतरूपाद्यभावे, तदभावात्-महत्त्वाभावात्, त्वन्मते-परमाणुपुञ्जप्रत्यक्षवादिनस्तव मते। महत्त्वाभावादिति। महत्त्वप्रकर्षस्य चाक्षुषतानुविधानादित्यर्थः। तेषां-परमाणूनाम्। अनित्यत्वमिति। योऽवयवी सोऽवश्यमुत्पत्तिविनाशशाली-सावयवत्वाद्घटादिवत् यस्योत्पत्तिविनाशवत्त्वं तस्या नित्यत्वमिति विशदम्। साम्यप्रसङ्ग इति। परिमाणहेतुभूतावयवसंख्याया मेरुसर्षपयोरविशिष्टत्वादिति सारम्। एवं प्राप्तं कर्तव्यमाह-अत इति। निरुक्तस्थले दोषपरिहारायेत्यर्थः। वाच्यः-अवयवधाराया इति शेषः। विश्रामाश्रयस्य नित्यत्वादिकं साधयति-यत्र त्विति। तस्य-परमाणोः। महत्परिमाणतारतम्यस्येति। तारतम्यं न्यूनाधिक्यं तद्यथा त्रसरेणुमारभ्य गगनादौ विश्राम्यति तथाऽणुपरिमाणन्यूनाधिक्यमपि क्वचिद्विश्राम्यत्येव यत्र विश्राम्यति स परमाणुरिति विशदोऽर्थः। लाघवाच्छंकते नचेति। तदवयवेति। त्रसरेण्ववयवेत्यर्थः। महदारंभकत्वात्-त्रसरेणुरूपमहत्कार्यारंभकत्वात्, कपालवत्-घटरूपमहत्कार्यारम्भक-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न चेदमप्रयोजकम्, अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यत्वस्य प्रयोजकत्वात् । न चैवंक्रमेण तदवयवधारापि सिद्ध्येदिति वाच्यम् । अनवस्थाभयेन तदसिद्धेरिति । सा चेति । कार्यरूपा पृथिवी त्रिधेत्यर्थः । शरीरेन्द्रिय-विषयभेदादित्यर्थः ॥ ३६ ॥ ३७ ॥

तत्र देहमुदाहरति—

योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम् ।
विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥

योनिजादीति । योनिजमयोनिजं चेत्यर्थः । योनिजमपि द्विविधं -जरायुजमण्डजं च । जरायुजं मानुषादीनाम् । अण्डजं सर्पादीनाम् । अयोनिजं

विवृतिः ।

कपालवदित्यर्थः । तदवयवेति । त्रसरेणोरवयवावयवेत्यर्थः । इदमनुमानम् । अप्रयोजकमिति । अनुकूलतर्कानवतारादिति भावः । तदवयवधारा–परमाण्ववयवधारा । तदसिद्धेरिति । तदवयवधारा कार्यरूपा द्व्यणुकादिमहावयविपर्यन्तेत्यर्थः ।

शरीरेन्द्रियेति । द्वन्द्वान्ते इति न्यायेन भेदपदस्य प्रत्येकमन्वयस्तेन शरीरभेदादिन्द्रियभेदाद्विषयभेदादित्यर्थो बोध्यः । यद्वा शरीरेन्द्रियविषयाणां भेदस्तस्मात् । अत्र वृत्तित्वं षष्ठ्यर्थः असाधारणत्वं भेदशब्दार्थः । अभिन्नत्वं पंचम्यर्थः स च विधाशब्दार्थेनान्वेति । एवं च शरीरेन्द्रियविषयवृत्त्यसाधारणाभिन्नत्रित्वसंख्याविशिष्टविभाजकधर्मान्यतमवतीत्यर्थः ॥ ३६ ॥ ३७ ॥

तत्र–शरीरेन्द्रियविषयमध्ये । योनिजमयोनिजं चेति । योनिजायोनिजभेदेन द्विप्रकारमित्यर्थः ।

के ते द्विविधे इत्यत्राह जरायुजमण्डजं चेति । जरायुजाण्डजभेदेनेत्यर्थः । मानुषपशुमृगाणां गर्भाशयो जरायुस्तज्जन्यं शरीरं जरायुजम् 'गर्भाशयो जरायुः स्या'दिति कोषात् । सर्पादीनामित्यादिशब्देन पक्षिणां संग्रहः । अयोनिजमिति । योनेर्जातं योनिजं तद्भिन्नमयोनिजं तदुक्तं वाक्यपदीये—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्तिताः ॥ इति ॥



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्वेदजोद्भिज्जादिकम् । स्वेदजाः कृमिदंशाद्याः । उद्भिज्जास्तरुगुल्माद्याः । नारकिणां शरीरमप्ययोनिजम् । न च मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम् । गन्धादिमत्त्वस्यैव प्रमाणत्वात् । न च क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यम् । तथा सति जलत्वपृथिवीत्वादिना संकरप्रसङ्गात् । न च तर्हि जलीयत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यम् । क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानाद्व-

विवृतिः ।

तत्साद्दृश्यं गर्दभेऽनश्वोऽयमभावः प्रसज्यप्रतिषेधे, तदन्यत्वं प्रकृते, तदल्पत्वमनुदरा कन्या, अप्राशस्त्यं यथास्मत्सुलतानचरिते—

अङ्गीकृतं वदसि चेद्भ्रमर ! त्वमेनां
दीनामवेहि मघजां रमणाद्विहीनाम् ।
सर्वत्र तात भवता भ्रमता कुतोऽपि
दृष्टो यदस्मत्पतिः कथयाशु मह्यम् ॥

विरोधोऽसुरोऽधर्म इत्यादावित्यास्तां विस्तरः । शुक्रशोणितसंनिपातानपेक्षत्वं च तत्त्वम् । स्वेदजाः स्वेदाज्जाताः । कृमिदंशेति । कृम्यादिशरीराणामदृष्टविशिष्टेभ्योऽणुभ्य एव जननोपगमादिति भावार्थः । उद्भिज्जा उद्भिद्य भूमिं जाताः । 'ब्रह्मणो मानसा मन्वादयः पुत्रा' इत्यद्यागमेनायोनिजभेदोद्भिज्जादिकमित्यादिना देवर्षिशरीरमपि तथा बोध्यम् । 'तत्रायोनिजमनपेक्षितशुक्रशोणितं देवानामृषीणां च शरीरं धर्मविशेषसहितेभ्योऽणुभ्यो जायत' इति प्रशस्तपादोक्तेः । ननु नरकोत्पन्नानां शरीरं कीदृशमित्यत आह नारकिणामिति । गन्धादीति । पृथ्वीविशेषगुणो गन्धो मानवशरीरे आनाशमनपायी दृश्यते । इति तस्य नैसर्गिकत्वे 'पार्थिवं' तद्गन्धादिमत्त्वान्नीलादिरूपवत्त्वाद्वा पृथ्वीवदित्यनुमानस्यैव मानत्वादिति भावः । ननूक्तशरीरे कदाचिद्धर्मवशात्स्वेदस्य ज्वरादिवशादुष्णस्पर्शस्य दर्शनाज्जलीयत्वं तैजसत्वमपि तस्य स्यादित्याशंक्याह न चेति । सङ्करप्रसङ्गादिति । पृथिवीत्वं विहाय शरीरत्वं जलादिशरीरे शरीरत्वं विहाय पृथिवीत्वं घटादौ चोभे मनुष्यादिशरीरे इति तत्समन्वयः । शरीरत्वेन प्रत्यभिज्ञानादिति । तदेवेदं देवदत्तादिशरीरमिति प्रत्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः । तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम् । शरीरत्वं तु न जातिः पृथिवीत्वादिना साङ्कर्यात्, किन्तु चेष्टाश्रयत्वम् । वृक्षादीनामपि चेष्टासत्त्वान्नाव्याप्तिः । न च वृक्षादेः शरीरत्वे किं मानमिति वाच्यम् । आध्यात्मिकवायुसंबन्धस्य प्रमाणत्वात् । तत्रैव किं मानमिति चेत्, भग्नक्षतसंरोहणादिना तदुन्नयनात् । यदि हस्तादौ शरीरव्यवहारो न भवति तदान्त्यावयवित्वेन विशेषणीयम् । न च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वा-

विवृतिः ।

भिन्नात्मकप्रतिसन्धानादित्यर्थः । गन्धादीति । आनाशं मानवशरीरे गन्धाद्यनुवृत्तेरित्यभिप्रायः । पाकादीनां तु शुष्कशरीरेऽनुपलब्धिरिति तेषामौपाधिकत्वमित्युन्नेयम् । पार्थिवादीति । पार्थिवशरीरे जलादिचतुष्टयस्यैवं जलीयशरीरे पृथिवीतेजोवाय्वाकाशानां निमित्तत्वमेवमन्यत् । साङ्कर्यादिति । शरीरत्वाभावाधिकरणे घटे पृथिवीत्वं पृथिवीत्वाभावाधिकरणे वरुणादिशरीरे शरीरत्वमुभे मानुषादिशरीरे इति तत्प्रकारो द्रष्टव्यः । चेष्टाश्रयत्वमिति । चेष्टा चेप्सितं जिहासितं वार्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा । चेष्टात्वं तु प्रयत्नजन्यतावच्छेदको जातिविशेष एव । आध्यात्मिकेति । वृक्षः शरीरवान्प्राणवायुसम्बन्धादित्यनुमानस्यैव तथात्वे मानत्वादित्यर्थः । तत्रैव—आध्यात्मिकवायावेव, तदुन्नयनात्—वृक्षः आध्यात्मिकप्राणवायुसम्बन्धी भग्नक्षतसंरोहणान्मनुष्यादिशरीरवदित्यनुमानात् । यद्यपि वृक्षादयोऽपि शरीरभेदा एव—'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विता' इत्यागमेन भोगाधिष्ठानत्वात्, तथापि चेष्टावत्त्वमिन्द्रियवत्त्वं च न वृक्षादीनां स्फुटतरमिति न तत्र शरीरत्वव्यवहृतिरिति मन्तव्यम् ।

ननु हस्तादौ क्रियाविशेषात्मकचेष्टायाः सत्त्वेऽपि न शरीरत्वव्यपदेश इत्यत आह यदीति । विशेषणीयमिति । अन्त्यावयवित्वे सति चेष्टाश्रयत्वं शरीरत्वमित्येतावल्लक्षणं कर्तव्यमित्यर्थः । अन्त्यावयवित्वं च द्रव्यान्तरानारम्भकत्वमिहाभिप्रेतं तच्च शरीरस्यैव न हस्तादेर्द्रव्यान्तरारंभकत्वात् । यत्र शरीरे—मृतशरीरे, तत्राव्याप्तिः—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



च्यम् । तादृशे प्रमाणाभावात् । अथवा चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वा तत् । मानुषत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः । न च नृसिंहशरीरे कथं लक्षणसमन्वयः, तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावाज्जलीयतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यम् । कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात् । इन्द्रियमिति । घ्राणेन्द्रियं पार्थिवमित्यर्थः । पार्थिवत्वं कथमिति चेत् ? इत्थम्—घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत् । न च दृष्टा-

विवृतिः ।

तत्रोक्तशरीरलक्षणं न प्रसज्यत इत्यर्थः । समाधित्सुराह तादृश इति । ननु मृतशरीरमिदमिति कथं व्यवहृतिरिति शंकामपनिनीषुराह अथवेति । जातिरत्र मनुष्यत्वादिका । घटादावतिप्रसङ्गरूपारुच्याऽऽहाऽन्त्येति । द्रव्यत्वव्यवच्छेदाय पूर्ववृत्त्यन्तम् । चेष्टा पूर्वं दर्शितैव बोध्या, तेन घटादौ यत्किञ्चित्स्पन्दनात्मकचेष्टासत्त्वेऽपि न दोषः । लक्षणसमन्वय इति । शरीरलक्षणं सङ्गमनीयमित्यर्थः । तत्र-नृसिंहशरीरे । जातित्वाभावादिति । व्यक्तेरभेदस्य जातिबाधकत्वेन तत्त्वादिति भावः । ननु नृसिंहशरीरे देवत्वमादाय लक्षणं सङ्गमनीयमित्यत्राह जलीयेति । देवत्वस्यापीत्यपिना नृसिंहत्वसंग्रहस्तेन नृसिंहत्वस्य जातित्वे बाधकन्त्वेकव्यक्तिकत्वमेव न जातिसाङ्कर्यमिति ध्येयम् । जातित्वाभावादिति । देवत्वं विहाय तैजसत्वं स्वर्णादौ तैजसत्वं विहाय देवत्वं जलीयदेवेषूभयं तैजसदेवशरीरे इति रीत्या जातिसांकर्यादिति भावः ।

कल्पभेदेनेति । 'युगे युगे व्यतीतानि तन्नामानि भवन्ति चे'ति स्मरणादिति भावः । घ्राणेन्द्रियं—घ्राणपदवाच्यमिन्द्रियम् । ननु घ्राणेन्द्रियस्य पार्थिवत्वे किं मानमिति पृच्छन्तं प्रत्याह इत्थमिति । अनेनानुमानेनेत्यर्थः । घ्राणेन्द्रियं पार्थिवमिति प्रतिज्ञा । रूपादिष्विति हेतुः । षष्ठ्यर्थे सप्तमीयम् । कुंकुमेति दृष्टान्तः । अत्रेदमवधेयम् यथा कुंकुमगन्धाभिव्यंजकं गोघृतं कुंकुमरूपादिव्यंजकं न भवति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्ते स्वकीयरूपादिव्यञ्जकत्वादासिद्धिरिति वाच्यम्। परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात्। न च नवशरावगन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यम्। तस्य सक्तुरसाभिव्यञ्जकत्वात्। यद्वा परकीयेति न देयं वायूपनीतसुरभिभागस्य दृष्टान्तत्वसंभवात्। न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यम्। द्रव्यत्वे सतीति विशेषणात्। विषय इति। उपभोगसाधनं विषयः। सर्वमेव हि कार्यजातमदृष्टाधीनम्, यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परंपरया वा जनयत्येव, नहि बीजप्रयोजनाभ्यां विना कस्य-

विवृतिः।

पार्थिवं च तथा घ्राणेन्द्रियमपि गन्धस्य व्यञ्जकं न रूपादेः पार्थिवं चेति। ननु घृतदृष्टान्तो गन्धव्यञ्जकत्वे सति स्वरूपव्यंजकोऽप्यतो निरुक्तहेतुस्तत्रासिद्ध इत्याशङ्कते न चेति। तदर्थत्वादिति। यथा घ्राणेन्द्रियस्य स्वरूपव्यञ्जकत्वे सति गन्धाभिव्यञ्जकत्वं न परकीयरूपव्यञ्जकत्वमेवं घृतस्यापि तद्व्यञ्जकत्वे सति तद्व्यंजकत्वं न तद्रूपाभिव्यंजकत्वमिति न दृष्टान्तासिद्धिरिति भावः।

अनैकान्तिकत्वं—व्यभिचारः। तस्य—नवशरावगन्धव्यंजकजलस्य। न देयमिति। पूर्वोक्तहेताविति शेषः। इदमुक्तदृष्टान्तस्याप्युपलक्षणम्। नन्वेवं दृष्टान्तता किंनिष्ठा स्यादित्यत आह वायूपनीनेति। वातवेगेनाकृष्टकुसुमादिसुगन्धितभागानामित्यर्थः। घ्राणेन्द्रियसंनिकर्षस्येति। घ्राणेन्द्रियं—घ्राणसंज्ञकमिन्द्रियं, संनिकर्षः—गन्धेन सह स्वसंयुक्तसमवायरूपः। गन्धमात्रेति। मात्रपदं गन्धेतरस्य व्यंजकत्वं निषेधति। तत्र—घ्राणेन्द्रियसंनिकर्षे। द्रव्यत्वे सतीति। द्रव्यत्वे सति तन्मध्ये गन्धस्यैव व्यंजकत्वमिति वाच्यमित्यर्थस्तेनोक्तसंनिकर्षस्य संयोगरूपतया गुणत्वेन द्रव्यत्वाभावान्नास्ति व्यभिचार इति परमसारः। उपभोगसाधनमिति। साक्षात्परंपरासम्बन्धेन वा सुखदुःखान्यतरसाक्षात्कारप्रयोजकत्वं विषयत्वमित्यखण्डार्थः। तत्तदुपभोगमिति। तत्कार्यं तस्य जीवस्य तददृष्टानुरोधेनोपभोगं सुखदुःखान्यतरसाक्षात्कारमित्यर्थः। कार्योत्पत्तेर्निरपेक्षतां वारयन्नाह नहीति। न खलूत्पद्यमानं किंचिद् बीजं प्रयोजनं चापेक्ष्य दृष्टमन्यथा तु सर्वत्रैव

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ञ्चिदुत्पत्तिरस्ति । तेन द्व्यणुकादिब्रह्माण्डान्तं सर्वमेव विषयो भवति । शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरोपन्यासः शिष्यबुद्धि-वैशद्यार्थः ॥ ३८ ॥

जलं निरूपयति—

वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।
स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥

वर्णः शुक्ल इति । स्नेहसमवायिकारणतावच्छेदकतया जलत्व-जातिसिद्धिः । यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं, तथापि जन्यस्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न स्यात्तत्र जन्यस्नेहाभावात्, नित्यस्य च स्वरूपयोग्यत्वे फलावश्यंभावनियमा-दिति चेन्न । जन्यस्नेहजनकतावच्छेदिकाया जन्यजलत्वजातेः सिद्धौ, तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः । शुक्लरूपमेव

विवृतिः ।

सर्वकार्यप्रसवप्रसङ्ग इति भावः । विषयत्वेऽपीति । पूर्वोक्तोपभोग-साधनत्वरूपलक्षणाक्रान्तत्वेऽपीत्यर्थः । प्रकारान्तरेण—शरीरेन्द्रिय-भिन्नविषयत्वेन, उपन्यासः—विभागः । कश्चित्तु शरीरेन्द्रियभिन्न एव विषय इत्याह तन्मूलं मृग्यम् । पार्थिवशरीरपार्थिवेन्द्रियपार्थिव-विषयत्वानि च शरीरादिपदजन्यशाब्दबोधविषयतावच्छेदकानि ॥३८॥

जलत्वजातिसिद्धिं पृच्छन्तं प्रत्याह—स्नेहेति । समवायेन स्नेहरूप-कार्यं प्रति तादात्म्येन जलं समवायिकारणं तदवच्छेदकत्वेन च जलत्वमुपपद्यते । नित्यानित्यवृत्तितया—कार्याकार्यजलातिप्रसक्ततया, तथा—कार्यतावच्छेदकम् । एवं च जन्यस्नेहं प्रति जन्यजलवृत्त्येव समवायिकारणतादिकमवधेयम् । तत्र—परमाणौ, तस्य च—परमाणो-श्च, स्वरूपयोग्यत्वे—स्नेहोत्पत्तियोग्यत्वे । फलेति । फलस्यावश्यंभावो—नियमेन फलोत्पादः । जन्यस्नेहेनापि तत्रावश्यंभाव्यमिति भावः । अनित्यदण्डादेस्तु स्वरूपयोग्यत्वेऽपि फलावश्यंभावनियमाभावान्न दोषः । जन्यस्नेहेति । जन्यस्नेहवृत्तिजन्यत्वनिरूपितं यज्जन्य-जलवृत्तिजनकत्वं तदवच्छेदिकाया इत्यर्थः । तदवच्छिन्नेति । तदव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जलस्येति दर्शयितुमुक्तं वर्णः शुक्ल इति, न तु शुक्लरूपवत्त्वं लक्षणम् । अथवा नैमित्तिकद्रवत्ववदवृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थः, तेन स्फटिकादौ नातिव्याप्तिः । रसस्पर्शाविति । जलस्य मधुर एव रसः शीत एव स्पर्शः । तिक्तरसवदवृत्तिमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः, तेन शर्करादौ नातिव्याप्तिः । (शीतेतरस्पर्शवदवृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः ।) ननु शुक्लरूपवत्त्वमेवेति कुतः ? कालिन्दीजलादौ नीलिमोपलब्धेरिति चेन्न । नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेर-

विवृतिः ।

च्छिन्ना–जन्यजलत्वजात्यवच्छिन्ना या जनकता शुद्धजलनिष्ठा जनकता तदवच्छेदकतयेत्यर्थः । जलत्वजातीति । शुद्धजलत्वजातीत्यर्थः । सर्वं वाक्यं सावधारण'मब्भक्षो वायुभक्ष' इति न्यायमभिसंधायाह शुक्लरूपमेवेति । ननु शुक्लमेव रूपमित्यनुपपन्नं कालिन्दीजलादौ नैल्यस्यौपलब्धेरित्युपरिष्टादुपपादयिष्यते । पृथिव्यादावतिप्रसङ्गवारणायाह–नन्विति । शुक्लरूपवत्त्वलक्षणस्यापि साधुत्वं प्रदर्शयितुं पक्षान्तरं निगमयति अथवेति । नैमित्तिकद्रवत्ववत्–पृथ्वीतेजःप्रभृति, जातिरत्र जलत्वमन्यत्सुगमम् । द्रव्यत्वव्याप्यवायुत्वमादाय वायौ पृथिवीत्वादिकमादाय पृथिव्यादौ चातिप्रसङ्गव्युदासाय यथायथं रूपवद्वृत्तिनैमित्तिकद्रवत्ववदवृत्तीत्यादिकमुन्नेयम् । कल्पान्तरं दर्शयति अभास्वरेति । अभास्वरशुक्लेतररूपं नीलपीतादिकं तदसमानाधिकरणरूपवज्जलमन्यत्स्पष्टम् । तदर्थः–'वर्णः शुक्ल' इति ग्रन्थार्थः । नातिव्याप्तिरिति । इतरथा तु शुक्लवर्णवत्त्वेन तत्र स्फुट एव जलत्वस्यातिप्रसङ्ग इत्यवधेयम् । मधुर एव रस इति । रसः–स्वादः 'रसो जले द्रवे स्वादे' इति धरणिः । अत्र यद्वक्तव्यं तदुक्तमस्माभिरधस्तात् । शीत एव स्पर्श इति । वस्तुतः स्वाभाविकं शीतत्वमेव च तल्लक्षणं, तेन शिलातलश्रीखण्डौ नातिप्रसङ्गः । उष्णत्वं तु तत्र जलान्तर्गततेजोनिष्ठोष्णस्पर्शस्यैवेति न तत्रापि सः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भावाज्जले नीलरूपासम्भवात् । कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी, अत एव वियति विक्षेपे धवलिमोपलब्धिः । अथ जले माधुर्ये किं मानम्? नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते । नच नारिकेलजलादौ माधुर्यमुपलभ्यत एवेति वाच्यम् । तस्याश्रयोपाधिकत्वात्, अन्यथा जम्बीररसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादिति चेन्न । हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात् । नच हरीतक्यामेव जलोष्मसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यम् । कल्पनागौरवात् । पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जले नाम्ला-

विवृतिः ।

विशेष्यमहिम्ना चात्र पुंस्त्वमेवमग्रेऽपि । तेन—जातिघटितलक्षणकरणेन । नातिव्याप्तिरिति । शर्करादिगतपृथिवीत्वजातेस्तिक्तरसवद्वृत्तित्वादिति भावः । कालिन्दी—कलिन्दनन्दिनी यमुनेति यावत् । नीलजनकतेति । नीलनिष्ठजन्यतानिरूपितजनकतेत्यर्थः । आश्रयौपाधिकीति । स्वाश्रयनीलपृथ्वीसम्बन्धरूपोपाधिनिबन्धनेत्यर्थः । यदुक्तम्—'भूसंसर्गवशाच्चास्य रूपमन्यत् प्रकाशते' । अत एव—तादृशप्रत्ययसाक्षिकत्वादेव । वियतीति । वियद्विकीर्णकालिन्दीजले धावल्योपलम्भ इत्यर्थः । किंमानमिति । जलगतमाधुर्यनियामिका युक्तिरेव तावत्केत्यर्थः । प्रत्यक्षेण—रासनप्रत्यक्षेण, तत्र—जले, जलादीत्यादिनेक्षुपरिग्रहः । तस्य—तद्गतमाधुर्यस्य । आश्रयौपाधिकत्वादिति । पृथ्वीसंपेर्कणायातत्वादित्यर्थः । विपक्षे दोषमाह अन्यथेति । आश्रयौपाधिकत्वाभाव इत्यर्थः । अम्लादीत्यादिना तैक्त्यादिसंग्रहः । हरितक्यादीति । हरितक्यादिभक्षणानन्तरं यन्माधुर्यमनुभूयते तज्जलस्यैव तद्भक्षणस्य नैसर्गिकमाधुर्यबोधकत्वात् घृतस्य कुंकुमगन्धाभिव्यंजकतावत् । ननु हरीतकीमाधुर्यप्रकर्ष एवांभसा व्यज्यतेऽतो हरीतक्या एव तन्माधुर्यं जलाद्यभिव्यङ्ग्यमित्यशंक्याह नचेति । कल्पनागौरवादिति । तदीयकषायादिरसानां जलानभिव्यङ्ग्यत्वदर्शनात्, हरीतक्या कषायरसस्यैवोपलंभाच्च । न च कल्पनागौरवं मृष्यतामिति वाच्यम् । युक्त्यनुपलम्भादिति मूकीभव । ननु स्वीक्रियतां जले माधुर्यं परन्तु जम्बीरजलादावाम्लरसोऽपि निराकुल एव

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दिकम् । जम्बीररसादौ स्वाश्रयौपाधिकी तथा प्रतीतिः । एवं जन्यशीतस्पर्शजनकतावच्छेदकं जन्यजलत्वं तदवच्छिन्नजनकतावच्छेदकं जलत्वं बोध्यम् । घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशीततरसलिलस्यैव । तेजःसंयोगाज्जले उष्णत्वप्रतीतिरौपाधिकी स्फुटैव—तत्र पाकासम्भवात् । स्नेहस्तत्रेति । घृतादावपि तदन्तर्वर्तिजलस्यैव स्नेहः—जलस्य स्नेहसमवायिकारणत्वात्, तेन जल एव स्नेह इति मन्तव्यम् । द्रवत्वमिति । सांसिद्धिकद्रवत्वत्वं जाति-

विवृतिः ।

प्रतिबन्धकविरहादित्याशंकां परिहरति पृथिवीत्वस्येति । अम्लादिनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्य पृथ्वीमात्रनिष्ठत्वादिति भावः । आश्रयौपाधिकीति । स्वसमवायिसंयोगसम्बन्धेनोपाधिनिबन्धनैव न वास्तविकीत्यर्थः । तथाप्रतीतिराम्लरसप्रतीतिः । जंबीरजले तु स्वाश्रयसमवेतत्वसम्बन्धेन तत्प्रतीतिः । हरीतक्यां तु माधुर्याभावादेव न जलेऽपि तद्धीः । एतदुक्तं भवति—यज्जलस्य मधुर एव रसः कषायद्रव्येण माधुर्यस्योपलम्भात् । तथाहि—स्नातकस्य हरीतकीस्वादानन्तरं वाराणसीपरिसरे कमण्डलुपरिस्खलदमलगङ्गाजलविमलधारासु मधुराकारा मनीषोन्मिषतीति । अथोपसंहार एवमिति । जन्यशीतेति । जन्यशीतस्पर्शनिष्ठजन्यतानिरूपितजनकतावच्छेदिका जन्यजलत्वजातिः जन्यजलत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका तु शुद्धजलत्वजातिरिति विवेकः । सलिलस्यैवेत्येवकारो घृष्टचन्दनव्यवच्छेदार्थः । तेजोऽग्निः, संयोगः—संपर्कः, तत्र—जले, घृतादौ—घृते तैले चेत्यादेरर्थः । तदन्तर्वर्तीत्यर्थः । जलस्यैवेति । स्वाश्रयसंयोगसम्बन्धेन जलस्यैव न घृतस्य । तत्र हेतुमाह जलस्येति । स्नेहरूपकार्यं प्रति तस्यैव समवायिहेतुत्वात् । तेन—घृतादौ स्नेहाभावकथनेन । स्नेह इति । स्नेहस्तु गुणविशेष एव न तु दुग्धत्वदधित्ववत्सामान्यविशेषः स्निग्धतरादितारतम्यधियो जातावभावात् । जल एवेति । न तु घृतादावपि तत्रोपष्टंभकसलिलगतस्य स्नेहस्य संयुक्तसमवायेन तद्गततया प्रतीतेरेवमन्यत्रापि । तथाचोक्तमाकरे-'स्नेहोऽम्भस्येवे'ति । सांसिद्धिकद्रवत्वेति । सांसिद्धिकं स्वाभावि-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विशेषः प्रत्यक्षसिद्धः, तदवच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः। तैलादावपि जलस्यैव द्रवत्वं स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ॥ ३९ ॥

नित्यतादि प्रथमवत्किन्तु देहमयोनिजम्।
इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ४० ॥

प्रथमवदिति। पृथिव्या इवेत्यर्थः। तथाहि। जलं द्विविधं-नित्यमनित्यं च। परमाणुरूपं नित्यं द्व्यणुकादिकं सर्वमनित्यमवयवसमवेतं च। अनित्यमपि त्रिविधं-शरीरेन्द्रियविषयभेदात्। पृथिवीतो यो विशेषस्तमाह-किंत्विति। देहमयोनिजम्-अयोनिजमेवेत्यर्थः। जलीयं शरीरमयोनिजं वरुणलोके प्रसिद्धम्। इन्द्रियमिति।

विवृतिः।

कमग्न्यादिसंयोगाजन्यमिति यावत् यद्द्रवत्वत्वं तत्। तदवच्छिन्नजनकतावच्छेदकं-सांसिद्धिकद्रवत्वावच्छिन्नजनकतावच्छेदकं, तदेवजन्यजलत्वमेव, जन्यजलत्वावच्छिन्नजनकतावच्छेदकं च जलत्वमिति निष्कर्षः। ननु तैलादावाप्यसम्बन्धे तैलस्य दहनप्रतिकूलतापत्तिराप्यभागस्य दहनपरिपन्थित्वादित्याशंकामपनुदति स्नेहप्रकर्षेणेति। तैले चाप्यभागस्य स्नेहप्रकर्षवत्त्वेन दहनानुकूलत्वादिति भावः ॥ ३९ ॥

द्विविधं-द्वौ द्वित्वविशिष्टौ विभाजकधर्मौ यस्य तथा नित्यानित्यभेदेनोभयप्रकारमित्यर्थः। परमाणुरूपमिति। पृथिव्यादिचतुष्कस्य परमाणूनामेव नित्यत्वोपगमात्। अवयवसमवेतं चेति। अवयवेषु समवायसम्बन्धेन वृत्तिमच्चेत्यर्थः। नित्यस्य भेदाभावादनित्यं विशिनष्टि-त्रिविधमिति। तिस्रो विधाः प्रकारा अस्येति तत्-'विधा विधौ प्रकारे चेति' कोषात्। शरीरेन्द्रियेति। शरीरेन्द्रियविषयाणां भेदो व्यावर्तकः शरीरेन्द्रियविषयविशेष्यकेतरभेदप्रकारकानुमितिजनक इत्यर्थः। यद्वा शरीरेन्द्रियविषयाणां यो भेदः परस्परवृत्तिभेदप्रतियोगित्वं तज्ज्ञानज्ञाप्यत्वं पंचम्यर्थो ऽवधेयः। क्वचिदेव शब्दं विनापि तदर्थप्रतीतिरित्याशयेनाह—अयोनिजमेवेत्यर्थ इति। ननु जलीयशरीरसद्भावे कुतो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जलीयमित्यर्थः । तथाहि—रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत् । रसनेन्द्रियसंनिकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् । विषयं दर्शयति । सिन्धुरिति । सिन्धुः—समुद्रः । हिमं तुषारः । आदिपदात्सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः । न च हिमकरकयोः कठिनत्वात्पार्थिवत्वमिति वाच्यम् । ऊष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात् । यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानोपादेयत्वसिद्धेः । अदृष्टविशेषेण वा द्रवत्वप्रतिरोधात् करकादीनां काठिन्यप्रत्ययस्य भ्रान्तित्वात् ॥ ४० ॥

विवृतिः ।

नाध्यक्षमित्यत आह—वरुणलोक इति । तथा च दूरस्थत्वान्नोपलक्ष्यत इति भावः । न च जलीयशरीरस्य कराद्यभावेनाहाराद्यसम्भव इति वाच्यम् । पार्थिवादिसम्पर्काद्घनत्वेन तादृशकार्यक्षमत्वसम्भवात् । रसमिति । रसयत्यनेनेति रसनं रसं गृह्णातीति भाष्यम् । रसविषयकसाक्षात्कारजनकत्वे सतीन्द्रियत्वं तत्त्वम् । रसनस्य जलीयत्वमनुमानतो दर्शयति—जलीयमिति । रसव्यञ्जकत्वात्—रूपादिषु पंचसु मध्ये रसस्यैवाभिव्यंजकत्वादिति निष्कर्षः । द्रव्यत्वं देययिति । द्रव्यत्वे सति गंधाद्यव्यंजकत्वे च सति इति वक्तव्यमित्यर्थः । संनिकर्षस्तु न द्रव्यमिति प्रागवोचाम । 'स्त्री नद्यां ना नदे सिन्धुर्देशभेदेऽम्बुधौ गजे' इति नानार्थकोषात्सिन्धुशब्दस्य नानार्थत्वमाशंक्य तं व्याख्याति-सिन्धुः समुद्र इति । 'तुषारो मिहिका हिममिति' कोषादाह—हिमं तुषार इति । कासारः—सरः, करका—वर्षोपलः, कठिनत्वात्—कठिनस्पर्शवत्त्वात्, उष्मणा—तेजःसंयोगेन, तस्य-हिमकारकादेः, तेजसा विलीनो हिमादिर्जलत्वेन साक्षादेवोपलभ्यते इति भावः । द्वयोरुपादानोपादेयत्वं साधयितुमाह—यद्द्रव्यं-जलद्रव्यं, यद्द्रव्यध्वंसजन्यं-हिमकरकादिद्रव्यध्वंसजन्यं, तत्तदुपादानोपादेयमिति व्याप्तेः हिमादिनिष्ठोपादानतोपादेयताया जलनिष्ठत्वात्करकादिषु जलत्वोपपत्तेरित्याशयः । अदृष्टविशेषेण—दुरदृष्टवलेन, द्रवत्वप्रतिरोधात्—हिमादौ द्रवत्वस्याप्रत्यक्षात् । प्रतिरोधकसाचिव्येन द्रवत्वस्याग्रहे भ्रमात्मिकैव काठिन्यधीरिति हृदयम् ॥ ४० ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तेजो निरूपयति—

उष्णस्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् ।
नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥ ४१ ॥

उष्ण इति । उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः । इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः । तस्य च परमाणुवृत्तित्वं तु जलत्वस्येवानुसंधेयम् । न चोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यम् । तत्राप्युष्णत्वस्य सत्त्वात्, किन्तु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः । एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः । रूपमित्यादि । वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवाच्छुक्लरूपाग्रहः । ननु तद्रू-

विवृतिः ।

तेजो निरूपयतीति । निरूपणं नाम लक्षणस्वरूपप्रामाण्यज्ञापनम्, उष्णत्वं उष्णस्पर्शवृत्तिधर्मः । प्रत्यक्षसिद्धः । उष्णमुष्णमित्यनुगतमतिसाक्षिकत्वेनानुभूयत एवेत्यर्थः । इत्थं च—उष्णत्वनिष्पत्तौ च । जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं—जन्योष्णस्पर्शनिष्ठकार्यतानिरूपितसमवायिकारणतावच्छेदिका तेजस्त्वजातिरित्यर्थः । तस्य—तेजस्त्वस्य । जलत्वस्येवेति । जन्यजलत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वेन जलपरमाणौ जलत्ववत् जन्यतेजस्त्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वेन तेजःपरमाणौ तेजस्त्वमप्युपपद्यते । उष्णस्य—उष्णस्पर्शस्य । तदा कथमुष्णस्पर्शो नानुभूयत इत्याशंकां मनसि निधायाह—किन्त्विति । तदन्तरिति । चन्द्रकिरणान्तरस्थवारिस्पर्शाभिभूतत्वादुष्णस्पर्शानुपलब्धिरित्यखण्डार्थः । चन्द्रकिरणादीत्यादिशब्दपरिगृहीते रत्नकिरणादावव्याप्तिं परिहरति—एवमिति । पार्थिवेति । रत्नकिरणान्तर्गतपार्थिवेत्यर्थः । अनुद्भूतत्वादग्रह इति । अनुद्भूतत्वं च जातिरित्युपाध्यायः । वैश्वानर इति । वैश्वानरोऽग्निः, तदुक्तमाचार्ययास्केन—विश्वान्नरान्नयति विश्वे नरा एनं नयन्ति वेति विश्वानरः तस्यापत्यं वैश्वानरोऽग्निरिति । मरकतो—मणिविशेषः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेन्न । अन्यदीयरूपेणापि धर्मिणो ग्रहसंभवात्, शङ्खस्येव पित्तपीतिम्ना । वह्नेस्तु शुक्लरूपं नाभिभूतं किन्तु तदीयं शुक्लत्वममभिभूतमित्यन्ये । नैमित्तिकमिति । सुवर्णादिरूपे तेजसि तत्सत्त्वात् । न च नैमित्तिकद्रवत्ववत्त्वं दहनादावव्याप्तं घृतादावतिव्याप्तं चेति वाच्यम् । पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात् । पूर्ववदिति । जलस्येवेत्यर्थः । तथाहि तत् द्विविधं—नित्यमनित्यं च । नित्यं परमाणुरूपं तदन्यदनित्यम्, अवयवि च । तच्च त्रिधा—शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजमेव । तच्च सूर्यलोकादौ प्रसिद्धम् ॥ ४१ ॥

## विवृतिः ।

धर्मिणः—वैश्वानरादेः, चाक्षुषत्वं—प्रत्यक्षत्वम् । अन्यदीयरूपेणैव—पार्थिवरूपेणापीत्यर्थः । ग्रहसंभवात् वैश्वानरादेरिति शेषः । शङ्खस्येवेति । पित्तदोषदूषितः पुमान्यथा श्वेतमपि शङ्खं पीतं पश्यति तथेत्यर्थः । वन्हेस्तु शुक्लं रूपमिति । ननु कथं शुक्लमेव रूपं वन्हेररुणकपिलादिरूपोपलब्धेरिति चेन्न । तस्यारुणादिप्रतीतेरौपाधिकत्वादिति तूष्णीं भव । शुक्लत्वं-शुक्लरूपनिष्ठा शुक्लत्वजातिः । तत्सत्त्वात्—नैमित्तिकद्रवत्वसत्त्वात् । पृथिव्येति । जातिरत्र तेजस्त्वं तच्च यावत्तेजोवृत्तीति सर्वं सुस्थम् । षष्ठीसमर्थाद्वतिरित्याशयेनाह—जलस्येवेत्यर्थ इति । तत्-तेजः । नित्यमनित्यं चेति । नित्यत्वेन विभज्यमानस्य नित्यतेजसः अनित्यत्वेन विभज्यमानस्यानित्यतेजसो भेदबोधकश्चशब्दः एवं च विशेषधर्मानवच्छिन्नसामान्यधर्मावच्छिन्नव्युदासः सामान्यधर्मानवच्छिन्नविशेषधर्मावच्छिन्नव्युदासः विशेषधर्माणां मिथः सामानाधिकरण्यव्युदासश्चेति विभागवाक्यं त्रिधा फलति । विनापि चकारमर्थसंगतिरिति चेत्स्पष्टप्रतिपत्त्यर्थं गृहाण । तच्च-अनित्यतेजश्च, तच्च—तैजसशरीरं च । ननु तच्छरीरमनुपलब्धेर्निष्प्रमाणमित्यत आह—सूर्यलोकादाविति । तथाच न्यायभाष्यम्—आप्यतैजसवायव्यानि लोकान्तरे शरीराणि—इति ॥ ४१ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अत्र यो विशेषस्तमाह—

इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः ।

इन्द्रियमिति । ननु चक्षुषस्तैजसत्वे किं मानमिति चेत् । चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् । प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽव्याप्तिवारणाय प्रथमं परकीयेति । घटादेः स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति । अथवा प्रभाया दृष्टान्तत्वसंभवादाद्यं परकीयेति न देयम् । चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् । विषयं दर्शयति—वह्निरिति । ननु सुवर्णस्य तैजसत्वे किं मानमिति चेन्न । सुवर्णं तैजसम् असति प्रतिबन्धके अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात् यन्नैव तन्नैवम्, यथा पृथिवीति । न चाप्रयोजकम्, पृथिवीविद्रुतिः ।

अत्र—तेजसि । स्वीयस्पर्शेति । प्रदीपस्य स्पर्शाभिव्यंजकत्वं स्वस्यैव न घटादेः तद्वत्तैजसस्यापि । ननु सत्यन्तं . घटादेरपि संभवतीत्यत आह—घटादेरिति । विषयतासंवंधेन घटादेः स्वीयरूपग्राहकत्वमेवेति पूर्वोक्तहेतौ परकीयपदनिवेशे न व्यभिचारः । उच्छृंखलास्तु—नेत्रं गोलकव्यतिरिक्तमिन्द्रियं न मन्यन्ते, स्वस्थानस्थितेनैव च तेन विषयोपादानमतोऽप्राप्यप्रकाशकारित्वं तस्येति वदन्ति । तदतीव फल्गु—नेत्रस्यापि प्राप्यकारित्वसंभवात् । शालिकाचार्यास्तु—नेत्रमिन्द्रियं बाह्यालोकश्च नेत्रान्तरमारभते तेन शाखाचन्द्रमसौ युगपत्पश्यामीति मतिः संभवतीत्याचचक्षिरे । तदपि न विचारचारु—तादृशमतेर्भ्रमत्वात् । युगपच्छतपत्रभेदनवत्तस्यातिवेगित्वेन क्षणविलंबेनैव तद्ग्रहणोपपत्तेः । केचित्तु दर्पण इव नेत्रे प्रतिबिम्बो भवति तदनु साक्षात्कार इत्यामनन्तीति दिक् । चक्षुःसंनिकर्षे—घटादिना चक्षुःसंयोगे । द्रव्यत्वं देयमिति । द्रव्यत्वे सतीत्यपि हेतुशरीरे निवेशनीयमित्यर्थः । अनुच्छिद्यमानद्रवत्वात्—न च द्रवत्वमुच्छिद्यतेऽत्यन्ताग्निसंयोगेऽपि प्रत्यक्षसिद्धत्वात्ततस्तस्य तैजसत्वं कल्प्यते यन्न तैजसं तन्नात्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्ववत्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



द्रवत्वस्य जन्यजलद्रवत्वस्य चात्यन्ताग्निसंयोगनाश्यत्वात् । ननु पीतिमगुरुत्वाश्रयस्य पार्थिवभागस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेन्न । जलमध्यस्थमसीक्षोदवत्तस्याद्रुतत्वात् । अपरे तु पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि पूर्वरूपापरावृत्तिदर्शनात्तत्प्रतिबन्धकं विजातीयं द्रवद्रव्यं कल्प्यते । तथाहि—अत्यन्ताग्निसंयोगे पीतिमगुरुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः, अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात्, जलमध्यस्थपीतपटवत् । तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात् ॥

वायुं निरूपयति—

अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः ॥ ४२ ॥
तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।

विवृतिः ।

यथा सर्पिरादि । अप्रयोजकमनुकूलतर्काभाववदनुमानम् । अतः सुवर्णस्य तैजसत्वे न साधकमित्याशंक्य समाधानहेतुमाह—पृथिवीद्रवत्वस्येत्यादि । अत्यन्तानलसंयोगेन घृतलाक्षादिरूपपृथिव्या नाशो दृश्यते न सुवर्णस्येत्यनुकूलतर्कोऽप्यस्तीति भावः । तेन—सुवर्णेन सहेत्यर्थः । वृद्धो यूनेतिवत्तृतीया । तस्य—पीतिमगुरुत्वाश्रयस्य, तत्प्रतिबन्धकं—रूपपरावृत्तिप्रतिबंधकम् । प्रतिबंधकत्वं च कारणीभूताभावप्रतियोगित्वमेव ग्राह्यम् । विजातीयमपूर्वं, कल्प्यतेऽनुमीयते । प्रकारमेव दर्शयति—तथाहीत्यादिना । पूर्वरूपविजातीयेति । प्रथमरूपविलक्षणरूपानधिकरणत्वदर्शनेन ज्ञायते यदवश्यं सुवर्णस्थपार्थिवभागो विलक्षणरूपविरोधिना केनचिद्द्रवद्रव्येण सहितोऽन्यथा विजातीयरूपाधिकरणत्वमस्य सुलभमेवेति भावः । जलमध्यस्थेति । जलभृतपात्रमध्यस्थपीतपटेऽनलसंयोगेऽपि विजातीयरूपादर्शनवदित्यर्थः । तस्य च—द्रवद्रव्यस्य च । यत्तु कैश्चित्—भिन्नमेव द्रव्यं सुवर्णमिति निगद्यते, तत्तुच्छम्—क्लृप्तेष्वन्तर्भावसंभवे पृथग्द्रव्यत्वकल्पनस्य गौरवप्रतिहतत्वादिति दिक् ।

'स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकज इति भाष्यमनुसृत्याह—मूलेऽ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥

अपाकज इति । अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादुक्तमपाकज इति । अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तमनुष्णाशीत इति । तेन वायवीयो विजातीयः स्पर्शो दर्शितः । तज्जनकतावच्छेदकं वायुत्वमिति भावः ॥ ४२ ॥

एष—वायुः स्पर्शादिलिङ्गकः । वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते—विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पेन च वायोरनुमानात् । यथाच वायोर्न प्रत्यक्षं तथाग्रे वक्ष्यते । पूर्ववदिति । वायुर्द्विविधो—नित्योऽनित्यश्च । परमाणुरूपो नित्यस्त-

विवृतिः ।

पाकज इति । सत्त्वात्—वायुलक्षणाव्याप्तेरपाकजपदप्रवेश इत्यर्थः । एवं चानुष्णशीतस्पर्शवत्वं तत्त्वमुक्तं भवति । उक्तमनुष्णाशीतेति । तेन सलिलादावपाकजस्पर्शसत्त्वेऽपि नातिप्रसङ्गः । एतेन—स्पर्शस्यानुष्णाशीतत्वकथनेन, वायवीयो—वायुनिष्ठः, विजातीयः—पार्थिवादिस्पर्शविलक्षणः । ननु शीतो वायुरिति प्रतीतिः कथमिति चेन्न । तादृशप्रतीतेरौपाधिकत्वात् । तज्जनकतावच्छेदकं—विजातीयस्पर्शनिष्ठजन्यतानिरूपितजनकतावच्छेदकम् ॥ ४२ ॥

विजातीयस्पर्शेनेति । चतुर्ष्वपि तृतीयार्थस्य विशेष्यत्वेन विजातीयस्पर्शादिनिष्ठविशेष्यतानिरूपकानुमानादित्यर्थोऽवसेयः । योऽयं रूपवति द्रव्ये समवायेनावर्तमानः स्पर्शोऽनुभूयते स कुत्रचिदवश्यमाश्रितः स्पर्शत्वात् पृथिव्यादिस्पर्शवद्यत्र चाश्रितः सः वायुरित्यनुमानशरीरम् । एवमेव शब्दादीनां वायौ लिङ्गत्वमुन्नेयम् । एतेन वायुसत्त्वे नानुमानं मानं भवितुमर्हति लिङ्गाभावादिति मन्दोक्तमपास्तम्—स्पर्शादिचतुष्कस्यैव लिङ्गत्वात् । ननु प्रत्यक्षत्वाद्वायोरलं धृत्यादिलिङ्गानामन्वेषणेनेत्यत आह यथा चेति । न प्रत्यक्ष इति । अरूपद्रव्यत्वादाकाशवदित्यनुमानतोऽतीन्द्रियत्वस्यैवोपपत्तेरित्यादिहेतुनेत्यर्थः । ननु प्रत्क्षत्वमेव वायोः स्पर्शाश्रयत्वाद्घटवदिति तु न शंकनीयम् । उद्भूतरूपशालित्वस्यात्रोपाधित्वादिति संक्षेपः । वायुं विभजते वायुर्द्विविध इति । नित्योऽनित्यश्चेति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दन्यो ऽनित्यो ऽवयवसमवेतश्च । सो ऽपि त्रिविधः—शरीरेन्द्रियाविषयभेदात् । तत्र शरीरमयोनिजं पिशाचादनिाम् । परन्तु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगक्षमत्वं जलादीनां प्राधान्याज्जलीयत्वादिकमिति । अत्र यो विशेषस्तमाह—देहव्यापीति । शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् । तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् ॥ ४३ ॥

विवृतिः ।

नित्यत्वेन विभज्यमानस्य नित्यवायोरनित्यत्वेन विभज्यमानस्यानित्यवायोर्भेदबोधकश्चकारः प्रयोजनन्तूक्तमस्माभिः प्राक् । अवयवसमवेतश्च—समवायसंबंधेनात्मावयवनिष्ठ इत्यर्थः । सोऽपि—अनित्यवायुरपि । तत्रेति । अत्र तदा व्यवहितपूर्वोपस्थितशरीरेन्द्रियविषयाः परामृश्यन्ते तथाच शरीराद्यन्तर्घटकीभूतमित्यर्थः । पिशाचादीनामिति । अवच्छेदकत्वं षष्ठ्या अर्थः, तेन पिशाचाद्यवच्छेदकं शरीरं वायवीयमित्यर्थो द्रष्टव्यः । वायुलोके प्रसिद्धमिति शेषः । पार्थिवभागोपष्टंभात्-पार्थिवभागेन सह संसर्गात्, तेन विनोपभोगसाधनत्वानुपपत्तेः । जलीयत्वादिकमिति । 'प्राधान्येन व्यपदेशा भवन्तीति' न्यायेन जलभागस्य मुख्यत्वं यत्र तज्जलीयं तेजोभागस्य मुख्यत्वं यत्र तत्तैजसमेवमन्यदप्युन्नेयम् । अत्र—त्वचि । शरीरव्यापकमिति । अवयवावच्छेदेन यावच्छरीरवृत्तीत्यर्थः । नखकेशदन्तलोम्नां तु शरीरोत्तरमेवोत्पत्तेरागमसिद्धत्वेन न तदवयवत्वमित्यवधातव्यम् । त्वगिन्द्रियं लक्षयति—स्पर्शग्राहकमिति । इदं चोपलक्षयति महत्वोद्भूतरूपस्पर्शवद्द्रव्यतद्वृत्तिकर्मादीन्यपि । काले चक्षुषि चातिप्रसङ्गव्युदासाय यथायथमुभयपदम् । तच्च—त्वगिन्द्रियं च । स्पर्शस्यैवेत्येवकारेण मनो व्यवच्छिद्यते । तत्र दृष्टान्तं दर्शयति—अङ्गसङ्गीति । व्यजनानिलेन शरीरस्वेदशीततोपग्रहवत् त्वचोऽपि स्पर्शग्राहकत्वमेवेति तस्य वायवीयत्वमुपपन्नम् । एतेनेन्द्रियाणि न भौतिकानि इन्द्रियत्वान्मनोवत्, अन्यथा मनोऽपि भूतात्मकमेव स्यादिति मन्दोक्तमपि परास्तम् । अत्र तत्त्वे मानेन तत्र तथाभावे मानाभावादित्यलं तर्ककर्कशविचारचातुरीधुरीणताप्रदर्शनेन ॥ ४३ ॥



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विषयं दर्शयति—

**प्राणादिस्तु महावायुपर्यन्तो विषयो मतः ।**

प्राणादिरिति । यद्यप्यनित्यो वायुश्चतुर्विधः तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे । तथापि संक्षेपादत्र त्रैविध्यमुक्तम् । प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नानासंज्ञां लभत इति पर्यवसितो वायुः ॥

आकाशं निरूपयति—

**आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥**

आकाशस्येति । आकाशकालदिशामेकैकव्यक्तित्वादाकाशत्वादिकं

विवृतिः ।

तस्य—अनित्यवायोः । ननु क्वेत्थं विधोक्तेत्यत आह आकर इति । प्रशस्तपादभाष्य इत्यर्थः। ननु भाष्यविरुद्धं कुतो नादरणीयमित्याशंक्याह संक्षेपादिति । प्राणस्य विषयरूपत्वेनापि विभागसंभवादित्यर्थः । संक्षेपे तु न विरोधो लघूपायेन बोधनायोत्तरोत्तरशास्त्रकृत्प्रवृत्तेः । अपानादीनां प्राण एवान्तर्भावं कर्तुमाह—प्राणस्त्वेक एवेति । हृदादीत्यादिना गुदनाभिकण्ठसर्वशरीरसंग्रहः । मुखनिर्गमनादीत्यादिना प्रवेशनाधोनयनसमुन्नयनोर्ध्वनयनवितननपरिग्रहः । तथाच मुखनासिकाभ्यां निर्गमनप्रवेशनात्प्राणः मलादेरधोनयनादपानः भुक्तपरिणामाय जठरानलस्य समुन्नयनात्समानः अन्नादेरूर्ध्वनयनादुदानः नाडीमुखेषु वितननाद् व्यानः । नानासंज्ञां लभत इति । प्राणापानादिविशेषसंज्ञाभिर्व्यपदिश्यत इत्यर्थः । इति पर्यवसित इति । लेशतोऽपि न्यूनताविरहादिति भावः । यद्यपीतिशब्देनैव पर्यवसितशब्दो गतार्थः 'इति हेतौ प्रकरणप्रकारादिसमाप्तिषु' इति कोशात्तथापि स्पष्टप्रतिपत्त्यर्थमिहोक्तो बोध्यः । यद्वा इति वायुप्रकरणे, वायुः पर्यवसित इति समाधेयम् । सर्वथा स्थितस्य गतेश्चिन्तनीयत्वात्तेन पौनरुक्त्यमपि नेति दिक् ।

आकाशत्वादिकमित्यादिना कालत्वदिक्त्वसंग्रहः । न जातिरिति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न जातिः, किन्तु आकाशत्वं शब्दाश्रयत्वम् । वैशेषिक इति कथनं तु विशेषगुणान्तरव्यवच्छेदाय । एतेन प्रमाणमपि दर्शितम् । तथाहि—शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत्, शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवत्, इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे, शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत् । पाकजरू-

विवृतिः ।

एकत्रैव समवायसम्बन्धेन विद्यामानत्वादिति शेषः । समसमयेन जात्यभावबोधनं तु त्रयाणां प्रसङ्गसङ्गतेः । शब्दाश्रयत्वं—समवायसम्बन्धेन शब्दस्याश्रयत्वम् । विशेषगुणेति । आकाशे शब्दातिरिक्तगुणाभावसूचनार्थमेवेति न तत्पदमपार्थम् । एतेन—विशेषगुणवत्त्वकथनेन, शब्दः क्वचिदाश्रितो गुणत्वात् रूपादिवदिति सामान्यतो दृष्टादष्टद्रव्यातिरिक्तद्रव्यत्वमाकाशस्योपपद्यते । चक्षुर्ग्रहणायोग्येति । जातिमत्त्वे सति बाह्यैकेन्द्रियमात्रग्राह्यत्वादित्यर्थः । अनित्यत्वे सति विभुसमवेतत्वाज्ज्ञानादिवद्वा । स्पर्शवदिति । स्पर्शो यथा चक्षुर्ग्रहणयोग्यबाह्यत्वगिन्द्रियग्राह्यजातिमांस्तथैवायमपीति भावः । अनुमानान्तरमाह—शब्दो द्रव्येति । एतदनुमानेन पूर्वोक्तपरिशेषानुमाने हेतौ विशेष्यासिद्धिर्वारिता ।

परिशेषादुपपन्नस्य गगनस्यानयवकल्पने मानविरहान्नित्यता सर्वत्र शब्दोपलंभाद् व्यापकता चावधेया । न स्पर्शवद्विशेषेति । स्पर्शवतां—पृथिव्यादीनां विशेषगुणो नेत्यर्थः । तथाचाह भगवान् कणादः—कार्यान्तराप्रादुर्भावाच्छब्दः स्पर्शवतामगुण इति । अकारणगुणेति । तादृशं कार्यं नोपलभ्यते यत्र कारणगुणपूर्वकं प्रत्यक्षविषयः शब्दो भवेदित्यर्थः । एतदनुमानेन शब्दस्य गुणत्वं मन्यमाना वैयाकरणमीमांसका व्युदस्ताः । तारतारतरादिप्रतीतेरपि शब्दस्य न तथात्वमिति ध्येयम् । सुखवदिति । यथा सुखं न स्पर्शवत्पृथिव्यादिचतुष्टयविशेषगुणस्तदभावे सति तत्पूर्वकप्रत्यक्षत्वाच्चथेत्याशयः । पाकजरूपादौ—पृथिवीनिष्ठाग्निसंयोगजरूपादावित्यर्थः । पार्थिवरूपासमवायिकारणतायाः पाकनिष्ठत्वान्न व्यभिचारः । अकारणगुणेति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पादौ व्यभिचारवारणाय सत्यन्तम् । पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात् । नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वाद्रूपवत् । इत्थं च शब्दाधिकरणं नवमं द्रव्यं गगनात्मकं सिध्यति । नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम् । अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् ॥ ४४ ॥

### विवृतिः ।

पटरूपे कारणीभूततन्तुगुणपूर्वकत्वविरहान्न सः । प्रत्यक्षेतीति । जलपरमाणुरूपादेरतीन्द्रियत्वेव प्रत्यक्षत्वायोगाच्चादोषः । ननु भवतु नाम शब्दस्याकाशगुणत्वमेव परन्तु शब्दो जन्य उत व्यङ्ग्य इति चेदश्रवणावस्थायां तत्सत्त्वे मानाभावात् कुड्यादिनावृतस्य चैत्रादेः शब्दोच्चारणेनानुमानाद् व्यंजकस्य प्रदीपादेर्व्यङ्ग्येन घटादिनानुमितेरदर्शनाच्च जन्य एवेत्यवेहि ।

विशेषगुणत्वादिति । प्रत्यक्षत्वादित्यर्थः । एकेनैव हेतुना गुणत्वप्रतिषेधस्तु तुल्यन्यायत्वेन । नन्वात्मगुणस्तु शब्दो भविष्यतीत्याशङ्कमानं प्रत्याह—नात्मविशेषगुण इति । बहिरिन्द्रिययोग्यत्वात्—बाह्येन्द्रियवेद्यत्वात् । बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादिति यावत् । किंच शब्दस्यात्मगुणत्वं यदि स्यात्तदाऽहं सुख्यहं जाने इत्यादिवदहं पूर्येऽहं शब्दवानित्यपि धीर्दुर्वारैव न च दृश्यते शङ्खः पूर्यते इत्यादिप्रतीतेरेवानुभवसिद्धत्वात् । शब्दाधिकरणमिति । समवायसम्बन्धेनेति शेषः । सिद्ध्यतीति । गगनमितरेभ्यो भिद्यते शब्दसमवायित्वान्न यदेवं न तदेवं यथा घट इति प्रकारेणेत्यर्थः । सूक्ष्मशब्दक्रमेणेति । प्रथमं सूक्ष्मशब्दः ततः स्थूलवायौ कारणगुणपूर्वकः स्थूलशब्दो भवतीत्येवं क्रमेणेत्यर्थः । अयावद्द्रव्यभावित्वेनेति । अयमर्थः । यः पृथिव्यादिचतुष्टयवृत्तिगुणो गन्धादिः स सर्वोऽपि स्वाश्रयपृथिव्यादिनाशान्नश्यति ; शब्दस्तु न तथा यतोऽयं नश्यति न तदाश्रय आकाशमित्यस्य पृथिव्यादीनां गन्धादिगुणेभ्यो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तत्र शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति—

**इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः ।**

इन्द्रियमिति । नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं तु पुरुषभेदेन भिन्नं कथमाकाशं स्यादिति चेत्तत्राह—एकः सन्नपीत्यादि । आकाश एक एव सन्नपि उपाधेः कर्णशष्कुल्यादेर्भेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः ।

कालं निरूपयति—

**जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥**

जन्यानामिति । तत्र प्रमाणं दर्शयितुमाह—जगतामिति । तथाहि

विवृतिः ।

विपरीतत्वान्न वायोर्विशेषगुणत्वम् । प्रत्यक्षयोग्यता तु नाकाशस्य महत्त्वादुद्भूतरूपवत्त्वाभावान्महत्त्वे सत्युद्भूतरूपवत्त्वस्यैव चाक्षुषतानुविधाननियमाच्च ॥ ४४ ॥

गगनस्य शरीरादिकं नास्ति किन्त्विन्द्रियमेवेत्याह—तत्र चेति । आकाशे चेत्यर्थः । लाघवात्—क्षितिकर्तुरेकत्ववत् इत्यर्थः । श्रोत्रं—शब्दबुद्धिकृच्छ्रोत्रेन्द्रियम् । पुरुषभेदात्प्रतिपुरुषं गतत्वात् । कथमिति प्रश्ने, विषयवैषम्यादिति भावः । एकः सन्नपीति । अविरोधित्वमपिशब्दार्थः । तच्च तद्व्यापकीभूताभावप्रतियोगिताविरहः । अर्थान्तरे तात्पर्यग्राहकोऽपि । पृथिव्यादिवदनेकत्वं तु प्रमाणाभावप्रतिहतम् । ननु यद्येकस्तदा कथं भेदप्रत्यय इत्यत आह—उपाधेरिति । कर्णशष्कुलीभेदादिति । 'शष्कुली पूरिकेति' निघंटुः । शष्कुलीव कर्ण इति कर्ण शष्कुली । कर्णविवरोपाधिभेदादित्यर्थः । चैत्रकर्णशष्कुल्यवच्छिन्नमाकाशं चैत्रश्रोत्रं मैत्रकर्णशष्कुल्यवच्छिन्नमाकाशं मैत्रश्रोत्रं तत्तत्पुरुषीयकर्णशष्कुल्यवच्छिन्नशब्दस्यैव तत्तत्पुरुषेण ग्रहणान्न सर्वेषां सर्वशब्दोपलब्धिरित्यपि ज्ञेयम् । श्रोत्रात्मकमिति । शब्दधीजनकमिन्द्रियम् श्रोत्रम् । तस्याकाशत्वसाधनमवशिष्यते तथाहि—यदिन्द्रियं रूपादिपंचकमध्ये यं गुणमुपादत्ते तदिन्द्रियं तद्गुणयुक्तमिति नियमाच्छ्रोत्रस्य शब्दगुणकत्वं समवायेन शब्दसमवायिकारणमाकाशमित्याकाशलक्षणलक्षितत्वादाकाशत्वं च । घटाकाशादिव्यपदेशस्य तूपाधिभेदेनोपपत्तिरिति संक्षेपः ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इदानीं घट इत्यादिप्रतीतिः सूर्यपरिस्पदादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः। स च सम्बन्धः संयोगादिर्न संभवतीति काल एव तत्संम्बन्धघटकः कल्प्यते। इत्थं च तस्याश्रयत्वमपि सम्यक् ॥ ४५ ॥

प्रमाणान्तरं दर्शयति—

**परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।**

परापरत्वेति। परत्वापरत्वादिबुद्धेरसाधारणं निमित्तं काल एव। परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः काल एव क-

चित्तृतिः।

मूले जनक इति। जनकत्वं च निमित्तत्वमेव न जननानुकूलसहकारित्वं दोषात्। तच्च यावत्कार्यं प्रति कालिकासम्बन्धवच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणतया निमित्तत्वं काललक्षणमाहुः। श्रुतौ तु 'कालः स्वभावो नियतिर्यदृच्छाभूतानि योनि'रित्यादिविशेषः। ननु कालस्य सर्वोत्पत्तिमन्निमित्तत्वं मानाभावबाधितमिति चेन्न, इदानीं घटो भवतीति प्रतीतेरेव मानत्वात्। तत्र—काले। ननु कालस्थाने दिगेवाभिषिच्यतां तस्यास्तादृशत्वाल्लघुत्वाद्वेति तु न शंक्यम्, तस्या एवासिद्धेः। ततश्च सूर्यस्पन्दभेदपिण्डसंसर्गोपनायकः पदार्थः इतरेभ्यो भिद्यते उपाधिभेदसंसर्गोपनायकत्वादित्यवधेयम्। संयोगादिर्नेति। इदं च 'द्रव्ययोरेव संयोग' इति प्राचोक्तमुपजीव्य बोध्यम्। काल एवेति। एवकारेणाकाशादिकं व्यवच्छिद्यते। सम्बन्धघटकः—घटादिसंबंधकल्पकः, संबंधश्च स्वाश्रयतपनसंयोगिसंयोगात्मकोऽत्र बोध्यः। इत्थं च—पूर्वोक्तान्यकालापपत्तौ च। तस्य—कालस्य ॥ ४५ ॥

प्रमाणांतरं—कालसद्भाव इति शेषः। काले परत्वापरत्वादेर्निमित्तत्वेन लिङ्गतामुपन्यस्यति परत्वापरत्वादीति। स्थविरे युवानमवधिं कृत्वा परत्वं स्थविरमवधिं कृत्वा यून्यपरत्वं जायते। संयोगाश्रय इति। संयोगः कालपिण्डसंयोगस्तदाश्रयोऽनुयोगितासंबंधेन गगनकाष्ठात्मनामपेक्षया लघुत्वात्कालोऽनुमीयते। एकस्य कालस्येति।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रूप्यत इति भावः । नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह—क्षणादिरिति । कालस्त्वेकोऽप्युपाधिभेदात्क्षणादिव्यवहारविषयः । उपाधिस्तु—स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा । न चोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यम् । कर्मान्तरस्यापि सत्त्वादिति । महाप्रलये

विवृतिः ।

अनेकत्वे मानाभावादिति भावः । क्षणदिनमासेति । क्षणस्तु त्रिंशत्कलात्मकः । यदुक्तममरसिंहेन—अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कलाः । तास्तु त्रिंशत्क्षण—इति । केचित्तु निमेषस्य चतुर्थो भागः क्षण इत्याहुस्तदसत्त्वं न्यायलीलावत्यां द्रष्टव्यम् । विस्तरभिया न बहु प्रपंच्यते । मानाभावान्नास्त्येव क्षणिकः क्षण इति किं तदा तद्व्यपदेशबीजं ज्ञानविशेष इत्यपि तत्रैव व्यवस्था । मुहूर्तैस्त्रिंशता दिनमिति, हेमचन्द्रः । द्वौ पक्षौ मासः । वर्षादीत्यादिना युगादिपरिग्रहः । 'तद् द्वयं वत्सर' इति महावीराचार्यवचनाद्‌यनद्वयं वर्षः । उपाधिभेदादिति । क्षणदिनमासादिभेदभानस्य चोपाधिनिबंधनत्वादित्यर्थः । कालस्यैकस्यापि सतः सूर्यस्पन्दाद्यवच्छेदभेदेन तत्तत्कार्यावच्छेदभेदेन च भिन्नत्वेनावभासः । ननु तथापि भूतभविष्यद्वर्तमानभेदेन कालत्रित्वं दुर्वारमेव आगमसिद्धत्वादिति चेन्न । वस्तुतत्प्रागभावतत्प्रध्वंसावच्छेदेन कालत्रित्वव्यवहारोपपत्तेरिति मौनमास्ताम् । क्षणादिव्यवहारेति । आदिना लवमुहूर्तयामदिवसाहोरात्रपक्षमाससंवत्सरादेः संग्रहः । ननु कोऽयमुपाधिरिति शिष्यजिज्ञासामनुरुध्याह—उपाधिस्त्विति । स्वजन्येति । स्वजन्यः तपनादिनिष्ठक्रियाजन्यो यो विभागस्तस्य यः प्रागभावस्तदवच्छिन्नं यत्कर्म तदेवोपाधिपदार्थ इत्यर्थः । पूर्वसंयोगेति । स्वजन्यविभागनाश्येत्यपि प्राक् योज्यम् । पूर्वसंयोगनाशेति । स्वजन्यविभागजन्येति पूर्वमूह्यम् । उत्तरसंयोगेति । स्वनाशकमात्रमप्यत्र पूर्वसंबंधनीयम् । इति यथाक्रमं चतुःक्षणोपाधयः । उत्तरसंयोगानन्तरं—पूर्वक्रियानाशकोत्तरक्रियासंयोगानन्तरम् । कर्मान्तरस्यापि सत्त्वादिति । पूर्वकर्मस-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



क्षणादिव्यवहारो यद्यस्ति तदानायत्या ध्वंसेनोपपादनीय इति । दिना-दिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति ।

दिशं निरूपयति—

दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥

दूरान्तिकेति । दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं बोध्यम् । तद्बुद्धेरसाधारणं बीजं दिगेव । दैशिकपरत्वापरत्वयोरसमवायिकारण-संयोगाश्रयतया लाघवादेका दिक् सिध्यतीति भावः ॥ ४६ ॥

नन्वेकैव दिक् यदि तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यता-मित्यत आह—

विवृतिः ।

माप्त्युत्तरं तत्रैव मूर्तद्रव्ये तद्व्यवहारनियामककर्मान्तरस्यान-पायादित्यर्थः । महाप्रलय इति । सर्वभावकार्यध्वंसो हि सः । तत्प्र-कारस्त्वेषः—

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते ॥

यद्यस्तीति कश्चिन्मन्येतेत्यर्थस्तत्र क्षणादिव्यवहाराभावस्तु व-स्तुस्थितिः । अनायत्या—उपायान्तरासंभवेन । ध्वंसेनेति । तत्तत्पदा-र्थध्वंसेनेत्यर्थः । तत्तत्क्षणकूटैः—तत्तत्क्षणसंघातविशेषैरुपपादनीय इत्यनुषङ्गः ॥

दैशिकं परत्वमपरत्वमिति । विप्रकृष्टे दिक्कृतं परत्वं सन्निकृष्टे दि-क्कृतमपरत्वमित्यर्थः—दैशिकपरत्वापरत्वबुद्धेः एकत्र दिश्यवस्थित-योः समीपस्थमवधिं कृत्वाऽयमस्माद्दूर इति यद् ज्ञानं तदेव निमि-त्तमेव मग्रेऽपि । असाधारणं—कार्यत्वव्याप्यधर्मावच्छिन्नकार्यता-निरूपितकारणतावदुक्तमेवेतरत्र बोध्यम् । संयोगाश्रयतयेति । सं-योगः पिण्डपरदिक्संयोगः तदाश्रयतया समवायसम्बन्धेन । दै-शिकपरत्वापरत्वप्रकारकबुद्धिनिष्ठकार्यतानिरूपितकारणता परत्वापर-त्वनिष्ठास्तीति भावः। कालस्य तु क्रियामात्रोपनायकत्वान्न संयोगोप-नायकत्वं दिक्तु पूर्वापरादिधीसंयोगोपनायिकेत्यत एवेतरेभ्यो भिद्यते ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।

उपाधिभेदादिति । यत्पुरुषस्य उदयगिरिसंनिहिता या दिक् सा तत्पुरुषस्य प्राची । एवमुदयगिरिव्यवहिता या दिक् सा प्रतीची । एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची । तद्व्यवहिता त्ववाची- "सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः" इति नियमात् ॥

आत्मानं निरूपयति-

आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥

आत्मेति । आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्ध्यति । ईश्वरेऽपि सा जातिरस्त्येव, अदृष्टादिरूपकारणा-

विवृतिः ।

नियतानियतोपाध्युन्नायकत्वं वा यथायथं कालदिशोर्भेदकं यत् पुरुषस्य यो वर्तमानः स तत्पुरुषस्य वर्तमान एव दिक्तु यं प्रति प्राची तं प्रति कदाचित्प्रतीच्यपीति ॥ ४६ ॥

कथमिति प्रश्ने, एकत्र विरुद्धानेकव्यवहारस्य कर्तुमशक्यत्वादिति भावः ॥ उपाधीति । उपाधिभेदप्रयोज्यत्वादेव स व्यवहारो न वस्तुतः । पूर्वापरादिदशप्रत्ययास्तु न दिशि लिङ्गं तत्प्रत्ययानां निरुपाधिदिगवलंबनत्वे दिशां दशत्वप्रसङ्गे नव द्रव्याणीति ग्रन्थव्याघातात् । पुरुषस्येति पदार्थमात्रमुपलक्षयति । सा तस्य प्रची-यथा प्रयागतः काशी । सा प्रतीची—यथा गयातः काशी । सोदिची-यथा रामेश्वरतः काशी । तद्व्यवहिता त्ववाची—यथा काशीतो रामेश्वरम् । उदयाचलसंनिहिदेशावच्छिन्ना प्राची । अस्ताचलसंनिहितदेशावच्छिन्ना प्रतीची । मेरुसंनिहितदेशावच्छिन्नोदीची । मेरुव्यवहितदेशावच्छिन्नावाचीति विवेकः । सर्वेषामेव वर्षाणामिति । भारतकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञकानां नववर्षाणामित्यर्थः । केचित्तु गगनादीनामीश्वरेऽन्तर्भावमाहुस्तदसत्त्वं सविशेषं प्रकाशकृता प्रकाशितमिति तत्तत्रैव कर्णेहत्यालोकनीयम् ।

सुखदुःखादिरित्यादिशब्दो ज्ञानेच्छादीनुपगृह्णाति तथा चाह-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भावान्न सुखदुःखाद्युत्पत्तिः । नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव इति नियमस्याप्रयोजकत्वात् । परे त्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात् । न च दशमद्रव्यत्वापत्तिः ज्ञानवत्त्वेन विभजनादित्याहुः । इन्द्रियादीति । इन्द्रियाद्यधिष्ठाता इन्द्रियाणां शरीरस्य च परंपरया चैतन्यसंपादकः । यद्यप्यात्मनि 'अहं जाने अहं सुखी' इत्यादिप्रत्यक्षविषयत्वमस्त्येव, तथापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्न-

विवृतिः ।

भगवानक्षपादः—'इच्छाद्वेषसुखदुःखज्ञानान्यात्मनो लिङ्गमिति' । समवायेन सुखादिकार्यं प्रत्यात्मनः कारणत्वं तदवच्छेदकत्वेनात्मत्वं जातिः सिद्ध्यति । ज्ञानहेतुतावच्छेदकत्वेन वा सा जातिः साध्या ज्ञानत्वाद्यवच्छिन्नं प्रति आत्मत्वावच्छिन्नस्य हेतुत्वात् । सा—आत्मरूपा श्रुत्यादावात्मपदस्येश्वरविषयकतयाभ्युपगमात् । अदृष्टादीति । आत्मत्वजातिसत्त्वेऽपि धर्माधर्मशरीरादिहेत्वन्तरविरहादेवेश्वरे न सुखादेरुत्पाद इत्यर्थः । अस्मदादिशुभाशुभकर्मणा त्वदृष्टजननमीश्वरे दुर्वचमन्यक्रिययान्यात्मन्यदृष्टोत्पादस्य निर्वक्तुमशक्यत्वात् । स्वरूपयोग्यत्वे फलेति । प्रकृते च स्वरूपयोग्यत्वं सुखादियोग्यत्वं फलं सुखादि । गतमन्यत् । इति नियमस्य—इति व्याप्तेः, अप्रयोजकत्वात्—व्यभिचारित्वेनायुक्तत्वादित्यर्थः । जलपरमाणौ स्नेहयोग्यतासत्त्वेऽपि स्नेहानुत्पादो व्यभिचारः । दशमद्रव्यत्वापत्तिरिति । ईश्वरे आत्मत्वजात्यनङ्गीकर्तुर्नये नव द्रव्याणीति ग्रन्थस्याकुलीभावः स्यादिति भावः । ज्ञानवत्त्वेनेति । आत्मस्थाने ज्ञानवत्पदनिवेशेनेत्यर्थः । समवायसम्बन्धेन ज्ञानवत्त्वमीश्वरस्य निर्विवादमिति नापत्तिलेशोऽपीति भावः । मतान्तरसूचनायाहुरिति । इन्द्रियाणां जनकतासम्बन्धेन शरीरस्यावच्छेदकतासम्बन्धेनेति विवेकः । शरीरेन्द्रियनिष्ठावच्छेदकतानिरूपितावच्छेद्यता चात्मनिष्ठा बोध्या । इन्द्रियाणि शरीरं च ज्ञात्राधिष्ठितं अचेतनत्वे सति उक्तान्यतरसम्बन्धेन ज्ञानवत्त्वाद् वास्यादिवदित्यनुमानमात्मनि मानमुक्तं भवति । नन्वात्मनि प्रत्यक्षमेव मानमित्यलं मानान्तरगवेषणेनेत्याशंक्याह—यद्यप्यात्मनीति । प्रत्यक्षविषयत्वमिति । मानसप्रत्यक्षविषयत्वमित्यर्थः । सुखादेरात्मगोच-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणान्तरं दर्शयति–करणमिति । वास्यादीनां छिदादिकरणानां कर्तारमन्तरेण फलानुपधानं दृष्टम् । एवं चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्ता कल्प्यते ॥ ४७ ॥

ननु शरीरस्यैव कर्तृत्वमस्त्वत आह–

शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥

शरीरस्येति । ननु चैतन्यं ज्ञानादिकमेव मुक्तात्मनां त्वन्मत इव मृतशरीराणामपि तदभावे का क्षतिः, प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेन्न । शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः, शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात् । न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पद्यत इति वाच्यम् ।

विवृतिः ।

रत्वादिति भावः । 'आत्मा तावन्न प्रत्यक्ष' इत्याकरग्रन्थस्तु परमात्माभिप्रायपरो द्रष्टव्यः । विप्रतिपन्नं—वादिनम् । तत्प्रतीतिरहं सुखीत्यादिप्रतीतिः ।

छिदादिकरणानां—छेदनादिक्रियाकरणभूतानाम् ,कर्तारं-तक्षकादिम् । फलानुपधानं—फलाजनकत्वम् । ज्ञानकरणेति । प्रत्यक्षज्ञानकरणेत्यर्थः । फलोपधानं—प्रत्यक्षजनकत्वरूपम् । अतिरिक्तः—चक्षुरादिकरणातिरिक्तः । कल्प्यतेऽनुमीयते, तथाच करणं सकर्तृकं ( कर्तृप्रयोज्यं ) करणत्वात्कुठारवत् यः करणानां प्रयोक्ता स आत्मेति ॥४७॥

चार्वाकमतं निराचिकीर्षुस्तदेव पल्लवयति—नन्विति । त्वन्मते मुक्तात्मनां ज्ञानेच्छादिरूपचैतन्यानुत्पादवन्मन्मतेऽपि मृतशरीराणां तद्रूपचैतन्याभावेन शरीरमेवात्मास्त्विति भावः । तदभावे-ज्ञानेच्छादीनामभावे, का क्षतिः—किं बाधकमित्यर्थः । प्राणेति । ज्ञाने प्राणस्य हेतुत्वेन व्यतिरेकव्याप्त्योपपत्तेरिति भावः । चैतन्ये—चेतनताङ्गीकारे, स्थाविरे—वार्द्धके । स्मरणानुपपत्तेरिति । यस्यानुभवः तस्य स्मृतिरिति नियमात् । बाल्यावच्छेदेनानुभूतपदार्थस्य स्थविरावच्छे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अनन्तसंस्कारकल्पने गौरवात् । एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्—इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानी-मिष्टसाधनतानुभावकत्वाभावात, मन्मते तु जन्मान्तरानुभूतेष्टसाधन-त्वस्य तदानीं स्मरणादेव प्रवृत्तिः । न च जन्मातरानुभूतमन्यदपि स्मर्यतामिति वाच्यम् । उद्बोधकाभावात् । अत्र त्वनायत्या जीवनादृष्ट-मेवोद्बोधकं कल्प्यते । इत्थं च संसारस्यानादितया आत्मनोऽनादित्वसि-द्धावनादिभावस्य नाशासंभवान्नित्यत्वं सिद्धयतीति बोध्यम् ।

ननु चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वं चास्तु विरोधे साधकाभावादत आह—तथात्वमिति । तथात्वं—चैतन्यमित्यर्थः । उपघाते—नाशे सति, अर्थाच्चक्षुरादीनामेव । कथं स्मृतिः, पूर्वं चक्षुषा

विवृतिः ।

देनास्मरणप्रसङ्गादित्यभिप्रायः । उपचयो वृद्धिरपचयो ह्रासः । उत्पा-देति । क्षणपरिणामित्वात्यर्थः । अनन्तसंस्कारेति । पूर्वपूर्वशरीरोत्पन्नसं-स्कारनिष्ठजनकतानिरूपितोत्तरोत्तरशरीरसंस्कारनिष्ठजन्यतास्वीकारे इत्यर्थः । ननु फलमुखं गौरवं न दोषायेत्याशंकापनोदाय प्रका-रान्तरेण तन्मते दोषमाह—एवमिति । तद्धेतुत्वात्—स्तन्यपानप्र-वृत्तिकारणत्वात् । अनुभावकः—स्मारकः । ननु तवापि मते क-थंकारं प्रवृत्तिरित्याह—मन्मते तु—सिद्धान्तिनो नये त्वित्यर्थः । ज-न्मान्तरानुभूतेति । पूर्वजन्मानुभूतेत्यर्थः । प्रवृत्तिरिति । बालक-स्य स्तन्यपान इति न विस्मर्तव्यमिति सुशकः समाधिः । ननु यदि जन्मान्तरेष्टसाधनताज्ञानस्यैव प्रवृत्तौ हेतुता तदेष्टसाधनतातिरिक्त-स्यापि स्मरणमस्त्वित्याशंकते—न चेति । अत्र-प्रकृते, अनायत्या—गत्यन्तराभावेन । अनादिभावस्येति । जन्यभावस्य घटादेर्नाशदर्श-नात्तद्वारणायानादिपदम् । नित्यत्वं सिद्धयतीति । आत्मन इति न विस्मर्तव्यम् । तथा चानुश्रूयते—'अविनाशी वाऽरेऽयमात्मानुच्छित्ति-धर्मा इति चार्वाकमतखण्डनम् ।

ननु ज्ञानेच्छादिकार्यं प्रति चक्षुरादेरेवोभयत्वमस्तूभया-धिकरणवृत्तित्वे दोषानवकाशादित्याशंकते—नन्विति । कथं स्मृतिरिति । न कथमपि भवेदित्यर्थः । चक्षुषानुभूतानां—चक्षु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ऽनुभूतानां चक्षुषोऽभावे स्मरणं न स्यात्—अनुभवितुरभावात् । अन्यदृष्टस्यान्येन स्मरणासंभवात् । अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः ॥ ४८ ॥

ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह—

मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।
धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥

मनोपीति । न तथा—न चेतनम् । ज्ञानाद्यनध्यक्षं तदा भवेत्, मनसोऽणुत्वात्प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तेरित्यर्थः । यथा मनसोऽणुत्वं तथा वक्ष्यते ।

नन्वस्तु विज्ञानमेवात्मा, तस्य स्वतःप्रकाशरूपत्वाच्चेतनत्वम् ।

विवृतिः ।

रिन्द्रियेण साक्षात्कृतानामर्थानाम् । नन्वन्येन केनचिदिन्द्रियेणानुसन्धानं स्यादिति शंकां मनसि निधायोत्तरयति—अन्येनेति । स्मरणासम्भवात्—अनुसन्धानायोगात्, सामानाधिकरण्येन—एकात्मरूपाधिकरणे वृत्तित्वेन, अधिकरणतानियामकश्चात्र समवायः विषयतया चैकत्र द्वयोर्वृत्ति'र्यत्रानुभवस्तत्र स्मृतिरिति' नियमात् कारणमनुभवः कार्यं स्मृतिरिति विवेकः । इति चार्वाकैकदेश्यभिमतेन्द्रियात्ममतखण्डनम् ॥ ४८ ॥

नित्यस्येति । एतेन चक्षुरादिभ्यो वैलक्षण्ययुक्तम् । चैतन्यं स्यादिति । चक्षुरादिनाशेऽपि मनसाखिलव्यवहारदर्शनादिति भावः । मनसोऽणुत्वादिति । तथाच पारमर्षं सूत्रं 'तदभावादणु मन' इति । तत्प्रत्यक्षानुपपत्तिरिति । यदा मन एवाणुत्वादप्रत्यक्षं तदा तदाश्रितानां सुतरामेव ज्ञानसुखदुःखादीनामप्रत्यक्षत्वप्रसङ्ग इत्यर्थः । नन्वणु मन इत्येव कुत उपपन्नमित्याशंकां शमयन्नाह—यथा चेति । एतच्चाग्रे मूलकृता विस्पष्टयिष्यत इत्याह—तथाग्र इति ।

क्षणिकविज्ञानवादियोगाचारमतमाह—नन्वस्त्विति । विज्ञानमेवात्मेति । 'अन्योऽन्तरात्मा विज्ञानमय' इति श्रुतेः । तस्य—विज्ञा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ज्ञानसुखादिकं तु तस्यैवाकारविशेषः। तस्यापि भावत्वादेव क्षणिकत्वम्। पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञाने हेतुत्वात् सुषुप्त्यवस्थायामप्यालयविज्ञान-धारा निराबाधैव, मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनित-संस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेन्न। तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः। यत्किंचिद्विषयकत्वे विनिगमना-विरहः। सुषुप्तावपि विषयावभासप्रसङ्गाच्च—ज्ञानस्य सविषयत्वात्। तदानीं निराकारा चित्सन्ततिरनुवर्तत इति चेन्न। तस्याः स्वप्रकाशत्वे प्रमाणाभावात्, अन्यथा घटादीनामपि ज्ञानत्वापत्तिः। न चेष्टाप-

विवृतिः।

नस्य। स्वतःप्रकाशेति। प्रकाशकान्तरापेक्षाऽनधीनत्वादित्यर्थः। तस्यैव—विज्ञानस्यैव, आकारः—स्वरूपम्,प्रसिद्ध्यभावात्तदन्यवस्त्व-भावः। तस्यापि—विज्ञानस्यापि। ननु तस्य क्षणिकत्वे सुषुप्तावा-त्मसाधनं दुःशकमित्याशंक्याह—पूर्वपूर्वेति। पूर्वपूर्वज्ञाननिष्ठज-नकतानिरूपितजन्यताया उत्तरोत्तरज्ञाननिष्ठत्वादित्यर्थः। आल-यविज्ञानधारा—अहं जानामीति विज्ञानसन्तानः। एवं सति स्मृत्य-भावमाशङ्क्य निराकरोति मृगमदेति। कस्तूरीसुगन्धित-वस्त्रवदित्यर्थः। नानुपपत्तिर्नासिद्धिः। तस्य—विज्ञानस्य, जगद्-विषयकत्वे—यावद्वस्तुविषयकत्व इत्यर्थः। सर्वज्ञत्वेति। जीवात्मन इति शेषः। न चेष्टापत्तिः 'यदल्पं तन्मर्त्यमिति' श्रुतेरल्प-ज्ञत्वोपगमात्तस्येति भावः। विनिगमनाविरह इति। घटविषयकत्वं पट-विषयकत्वं वेत्येकपक्षसाधिन्या युक्तेरभाव इत्यर्थः। सुषुप्ताविति। सा च पुरीतद्देशावस्थितमनःसंयोगः। विषयावभासेति। विषया-वभासो—विषयज्ञानम्। न चैतद्युज्यते—'अथ यदा सुप्तो भवति तदा न कस्यचन वेदेति' श्रुतेः। निराकारा—विषयशून्या, चित्सन्त-ति—विज्ञानसन्ततिः, तस्याः—चित्सन्ततेः। प्रमाणाभावादिति। चितां साकारत्वेन प्रबन्धाद्वा। विपक्षे दोषमाह—अन्यथेति। पूर्वोक्तार्थस्वी-कारे सर्वत्रैव ज्ञानसुखदुःखादिसन्ततेरनुवृत्तिप्राप्तेः। यदि तु माना-गोचरस्याप्यभ्युपगमः स्वीक्रियते तदा खपुष्पादेरप्यभ्युपगमप्रसंगो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्तिर्विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यम् । घटादेरनुभूयमानस्यापलपितुमशक्यत्वात् । आकारविशेष एवायं विज्ञानस्येति चेत् । किमयमाकारोऽतिरिच्यते विज्ञानात्? तर्हि समायातं विज्ञानव्यतिरिक्तेन । नातिरिच्यते चेत्? तर्हि समूहालम्बने नीलाकारोऽपि पीताकारः स्यात्—स्वरूपतो विज्ञानस्याविशेषात् । अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न । नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात् । इतरथा विरोधावधारणस्यैव दुरुपपादत्वात् । न वा वासनासंक्रमः संभवति, मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गात् । न चोपादानोपादेयभावो नियामक इति वाच्यम् । वासनायाः संक्रमासंभवत् । उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति

विवृतिः ।

दुर्वार इति भावः । नन्वस्तु तेषां ज्ञानत्वापत्तिः किं नश्छिद्यते इत्याह—इष्टापत्तिरिति । यावत्पदार्थेषु विज्ञानतेष्यत एवास्माभिरित्यर्थः । तत्र हेतुमाह—विज्ञानेति । वस्तुमात्रस्य विज्ञानरूपत्वादित्यर्थः । अत्रेष्टापत्तौ दोषमाह—अनुभूयमानस्येति । विज्ञानव्यतिरिक्तत्वेनानुभवविषयस्येत्यर्थः । आकारविशेषः—स्वरूपविशेषः, पटस्तन्तूनामिव । अयं—घटादिः । समूहालम्बने—'नीलपीते' इति ज्ञाने, स्वरूपतो विज्ञानस्य—विज्ञानस्वरूपस्येत्यर्थः । अविशेषात्—एकत्वात्, अपोहरूपः—अनीलव्यवच्छेदात्मकः । नीलत्वादिरित्यादिना पीतत्वादिपरिग्रहः । एकस्मिन्—विज्ञानरूपधर्मिणीत्यर्थः । इतरथा—विरुद्धानामेकस्मिन्समावेशाङ्गीकारे । विरोधावधारणस्यैव दुरुपपादत्वादिति । विरोधस्थलस्य निर्विषयत्वमेव स्यादिति भावः ।

दोषान्तरं दर्शयन्नाह—नवेति । मातृपुत्रयोरिति । कथमन्यथा जनन्यानुभूतपदार्थस्य गर्भस्थितबालेन स्मृतिर्न स्यादिति भावः । ननूपादानवासनाया एवोपादेये संक्रमो माता चात्मपुत्रस्य निमित्तमिति न दोषगन्धोपीत्याशङ्क्याह—नचेति । संक्रमासंभवादिति । संक्रमः—संचारः 'संचारे संक्रमः स्मृत' इति रभसः । वासनाया धर्मत्वाद्धर्म्यतिरिक्ते गन्तुमशक्तत्वादिति भावः । ननूत्तरत्र विज्ञाने पूर्वविज्ञानवासनाप्रसवो न संक्रमादतिरिच्यते इत्यत आह—नेति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चेन्न । तदुत्पादकाभावात् । चितामेवोत्पादकत्वे तदानन्त्यप्रसङ्गः । क्षणिकविज्ञानेऽतिशयविशेषः कल्प्यत इति चेन्न । मानाभावात्कल्पनागौरवाच्च । एतेन क्षणिकशरीरेष्वेव चैतन्यमपि प्रत्युक्तं, गौरवादतिशये मानाभावाच्च । बीजादावपि सहकारिसमवधानासमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वाकल्पनाच्च ।

अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा "अविनाशी वाऽरेऽयमात्मा, सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतेश्चेति चेन्न । तस्य विषत्वासंभवस्य दर्शितत्वान्निर्विषयस्य ज्ञानत्वे मानाभावात्सार्वविषयकत्वस्याप्यननुभवात्, अतो ज्ञानादिभिन्नो नित्य आत्मेति सिद्धम् ।

विवृतिः ।

तदुत्पादकाभावादिति । वासनोत्पादकस्य पूर्वविज्ञानस्य नष्टत्वात्कथमुत्तरत्र वासनोद्भव इत्यर्थः । उत्पादकमन्तरेण तु न किमप्युत्पद्यते इति सर्वानुभवः । चितामेवेति । यदि संस्कारनिष्ठजन्यतानिरूपितजनकता विज्ञाननिष्ठाऽङ्गीक्रियेत तदा विज्ञानानामनन्तत्वात्सुतरां संस्काराणामप्यनन्तत्वप्रसङ्गो गीर्वाणगुरुणापि दुरुद्धरः । क्षणिकेति । उत्तरोत्तरक्षणिकेत्यर्थः । अतिशयः—शक्तिविशेषः । कल्पनागौरवादिति । कल्पनागौरवमत्र क्षणिकानेकशक्तितत्प्रागभावध्वंसकल्पनात्मकं बोध्यम् । एतेन—वक्ष्यमाणदोषकथनेन, प्रत्युक्तम्—निराकृतम् । ननु क्षेत्रस्थबीजादेवाङ्कुरप्रसवदर्शनाद्यथाङ्कुरं प्रति कुर्वद्रूपता कारणं तथा प्रकृतेऽपि क्षणिकशरीरं प्रति तस्याः कारणत्वं स्वीकर्तव्यम् तस्याश्चोभयत्र समव्याप्तत्वेन संक्रमो युक्त इत्याशंक्याह—बीजादाविति । सहकारि—सहायकं भूतलादिकम् । तस्य समवधानं संनिधिः तेनाङ्कुरमुत्पद्यते कुसूलादौ तु तदभावादेव न तदुत्पत्तिः । कुर्वद्रूपत्वाकल्पनादिति । कुर्वद्रूपता चैकत्र तदुपजननयोग्यजातिविशेषः । परत्र वासनाजनकजातिविशेष इति विशेषः प्रेक्षितव्यः ।

नित्यविज्ञानत्वे श्रुतिं प्रमाणयति—अविनाशीति । तस्य—नित्यविज्ञानस्य । दर्शितत्वादिति । 'तस्य जगद्विषयकत्वे' इत्यादिना—पूर्वोक्तसंदर्भेणेत्यर्थः । मानाभावादिति । नहि निर्विषयं किमपि ज्ञानं भव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मू०। 'सत्यं ज्ञानमिति' हि ब्रह्मपरं जीवेषु नोपयुज्यते। ज्ञानाज्ञानसुखित्वदुःखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः, अन्यथा बन्धमोक्षव्यवस्थानुपपत्तेः। योऽपीश्वराभेदबोधको वेदः सोऽपि तदभेदेन तदीयत्वं प्रतिपादयन्स्तौति-अभेदभावनयैव च यतितव्यमिति वदति। अत एव "सर्वे एवात्मनि समर्पिताः" इति श्रूयते। मोक्षदशायामज्ञाननिवृत्तावभेदो जायते इत्यपि न, भेदस्य नित्यत्वेन नाशायोगात्। भेदनाशेऽपि

विवृतिः।

तीति भावः। नित्य इति। नित्यत्वमवयवकल्पने मानाभावादुपपद्यते वायुपरमाणुवत् गुणवत्त्वाद्द्रव्यत्वं च। नन्वात्मनोऽविनाशिताङ्गीकारे सत्यमिति वेदवाक्यस्य तर्हि कुत्रोपयोग इत्यत आह सत्यमिति। द्वितीयमिदं वाक्यं तु परमात्मन एव सत्यविज्ञानरूपतां गमयति न जीवस्यानुपयोगात्। जीवेश्वरयोर्भेदं साधयितुमाह-ज्ञानाज्ञानेति। सुतरामीश्वरभेद इति। ज्ञानाज्ञानसुखित्वदुःखित्वादिवैचित्र्यात् जीवात्मनां बहुत्वादीश्वरस्य चैकत्वादिति भावः। अन्यथा-ईश्वरस्य जीवात्मकत्वे। बन्धमोक्षेति। शरीरे आत्मत्वाभिमानो बन्धस्तन्निवृत्तिर्मोक्षः। व्यवस्थानुपपत्तेरिति। कश्चित् संसारी बद्धः कश्चिद् ज्ञानी मुक्त इति व्यवस्था न संगच्छते वेदान्तिमते सर्वस्य ब्रह्मात्मकत्वश्रुतेरिति भावः। वेदः-तत्त्वमसीत्यादिः। तदभेदेन-ईश्वराभेदेन, तदीयत्वमीश्वरीयत्वम्। सेव्यसेवकभावसंबन्धेनेत्यर्थः। एवमपीश्वरीयो जीवो न जीवस्येश्वरः यदुक्तमाचार्यशङ्करेण—

यद्यपि भेदापगमे नाथ! तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥

तच्छब्देनेश्वरस्तु बुद्ध्या सन्निकृष्ट एव परामृश्यते। स्तौति जीवमिति शेषः। दुःखापगमेन तत्सदृशस्त्वमसीत्यर्थस्तेन न तत्त्वमसीत्यादेरप्यसङ्गतिः। अतएव-जीवेश्वरयोर्भेदाङ्गीकारादेव। स्वोक्तएवार्थे श्रुतिमनुकूलयति अत एवेति। सर्वे-पुत्रशरीरादयः। अज्ञाननिवृत्ताविति। जीवोऽहमीश्वराद्भिन्न इत्यलीकप्रतिसंधानापगम इत्यर्थः। ननूपाधिनिबन्धनभेदनाशे न दोष इत्यत आह भेदनाशेऽपी-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्यक्तिद्वयं स्थास्यत्येव । न च द्वित्वमपि नश्यतामिति वाच्यम् । तव निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्यस्वरूपं तदितिवद्द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात् । मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेत् । एकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमित्यप्युच्यताम् । प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात् । योऽपि तदानीमभेदप्रतिपादको वेदः सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति, संपदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत् । अत एव "निरञ्जनः परमं साम्यमुपैति" इति श्रूयते ।

## विवृतिः ।

ति । औपाधिकभेदनाशेऽपीत्यर्थः । स्थास्यत्येव मोक्षदशायामिति न विस्मरणीयम् । द्वित्वं–जीवब्रह्मरूपव्यक्तिद्वयनिष्ठम् । तव—वेदान्तिनः, निर्धर्मके यावद्धर्मशून्ये । तदिति । तद्–ब्रह्म । द्वित्वाभावेऽपि-जीवेश्वरनिष्ठद्वित्वाभावेऽपि, तौ–ब्रह्मजीवात्मानौ । मिथ्यात्वेति । मिथ्यात्वमलीकप्रपंचस्तदभावः । अधिकरणात्मक इति । अधिकररूपत्वमभावस्योक्तप्रायमेव । तत्र–ब्रह्मणि । नैयायिक आह एकत्वाभाव इति । मन्मते प्र्येकत्वसंख्याभावरूपव्याक्तिद्वयरूपं द्वित्वं मोक्षकाले निराकुलमेवाभ्युपेयमिति भावः । स्वोक्तमर्थं लोकप्रसिद्ध्या द्रढयति–प्रत्येकमिति । प्रतिव्यक्तीत्यर्थः । पृथिवीजलयोर्नेति । यथा पृथिवीजले न गन्धयुक्ते किन्त्वेका पृथिव्येव गंधवतीति प्रतीतिस्तथा प्रत्येकमेकत्वे सत्यप्युभये नैकमितिप्रतीतिरतिरोहितैवेति भावः । तदानीं–मोक्षकाले, अभेदप्रतिपादको वेदः–ब्रह्मविद् ब्रह्मैव भवतीत्यादिः । निर्दुःखत्वादीत्यादिना सुखित्वादेपरिग्रहः । साम्यं–ब्रह्मसाम्यं,प्रतिपादयति–जीवस्येति शेषः । तत्र विशेषाख्यानमाह–संपदाधिक्य इति । यथा धनबहुले पुरोहिते न राज्ञ्यपि राजव्यवहारस्तथा दुःखादिरहिते पुरुषेऽब्रह्मण्यपि ब्रह्मव्यवहारः पुरोहिते संपदाधिक्यप्रयुक्तराजत्ववत्पुरुषे दुःखाभावप्रयुक्तं ब्रह्मत्वं न साक्षादुभयत्र राजत्वं ब्रह्मत्वं वेति नाभेदप्रतिपादकवेदो विरुध्यत इति भावः । अतएव—जीवब्रह्मणोर्भेदप्रतिपादनादेव, निरंजनो—दुखरहितः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ईश्वरो न ज्ञानसुखात्मा किन्तु ज्ञानाद्याश्रयः "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः—"यः सर्वज्ञः स सर्ववित्" इत्यनुरोधात्। आनन्दमित्यस्याप्यानन्दवदित्यर्थः। अर्श-आदित्वान्मत्वर्थीयोऽच्प्रत्ययः, अन्यथा पुल्लिङ्गत्वापत्तेः। आनन्दोऽपि दुःखाभावे उपचर्यते, भाराद्यपगमे सुखी संवृत्तोऽहमितिवत् दुःखाभावेन सुखित्वप्रत्ययात्। अस्तु वा तस्मिन्नानन्दो न त्वसावानन्दः—"असुखम्" इति श्रुतेः। न विद्यते सुखं यस्येति कुतो नार्थ इति

विवृतिः।

प्रहीणक्लेश इति यावत्। क्लेशास्तु अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च। तत्रानित्येषु नित्यत्वाभिमानोऽनात्मनि देहेन्द्रियादावात्मधीरित्यादिविभ्रमोऽविद्या। अस्मिताऽहङ्कारः। रागोऽभिमतविषयाभिलाषः। द्वेषोऽनभिमतेषु रोषः। अभिनिवेशः कार्याकार्येष्वाग्रहः। साम्यमुपैति—ब्रह्मसायुज्यं गच्छति, इति श्रूयते—श्रुतिरेषा संगच्छत इत्यर्थः।

ज्ञानादीत्यादिना सुखादिसंग्रहः। ज्ञानाश्रय एवेति। अधिकरणे ल्युड्विधानस्य तत्राङ्गीकारादिति भावः। य सर्वज्ञः—सर्वपदार्थज्ञानवानित्यादौ तस्यैवार्थस्य प्रतीतेः। नन्वेवं श्रुतिस्थानन्दपदस्य तर्हि का गतिरित्यत आह आनन्दमित्यस्यापीति। मत्वर्थीयोऽच्प्रत्यय इति। अत एव 'दृढः स्थूलबलयोरिति' पाणिनीयसूत्रस्य 'स्थूले बलवति च निपात्यत' इति वृत्तिरपि संगच्छत इति दिक्। अन्यथा अच्प्रत्ययानङ्गीकारे। पुंल्लिङ्गत्वापत्तेरिति। 'स्यादानन्दथुरानन्द' इत्यमरकोशेनानन्दशब्दस्य नित्यपुंल्लिगत्वबोधनात् श्रुतिस्थानन्दपदस्य क्लीबतानुपपत्तेरित्याशयः। ननु छान्दसत्वात्तत्र नपुंसकत्वस्वीकारे नापत्तिरिति चेन्न। छान्दसत्वाभ्युपगमस्य गत्यन्तराभाव एव स्वीकर्तुमुचितत्वात। आनन्दोपीति। एकत्रानन्दप्रतीतिरपरत्र सुखित्वप्रतीतिश्च दुःखाभावमूलिकैव बोध्या। लाघवमभिप्रेत्याह—अस्तु वेति। तस्मिन्—ईश्वरे, असावीश्वरः। असुखमितीति। अत्रत्यो नञ् ब्रह्मसुखयोरभेदप्रतीतिं स्थगयति स्वस्मिन्स्वस्य भेदासंभवाच्चेति भावः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चेन्न। क्लिष्टकल्पनापत्तेः; प्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच्प्रत्ययविरोधाच्चेति संक्षेपः ॥

एतेन "प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः किन्तु चेतनः—कार्यकारणयोरभेदात्। कार्यनाशे सति कार्यरूपतया तन्नाशो न स्यादित्यकारणत्वं तस्य। बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत्क-

विवृतिः।

क्लिष्टकल्पनापत्तिमनङ्गीकुर्वतां मुखमुद्रणाय निरुक्तार्थानङ्गीकारे हेत्वन्तरमाह–प्रकरणेति। तादृगर्थस्वीकारे द्वैतसाधनप्रकरणमपि व्याकुपितं भवतीत्यर्थः। प्रत्ययाविरोधाच्चेति। न विद्यते सुखमिति बहुव्रीहिस्वीकारेऽच्प्रत्ययनिष्पन्नानन्दवदित्यर्थविरोधाच्चेत्यर्थः। 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचने'त्यत्र भेदस्य स्पष्टत्वाच्चेत्यपि बोध्यम् ॥

वेदान्तिमतं निराकृत्य संप्रति सांख्यमतं निराचिकीर्षुराह एतेनेति। इति मतमपास्तमित्यग्रेतनेनान्वयः। वक्ष्यमाणकथनेनेत्यर्थः। प्रकृतिरिति। प्रकरोतीति प्रकृतिः प्रधानं मूलप्रकृतिरिति यावत्। प्रकृतिनिर्वचनं प्रवचनभाष्ये—

प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः साभिधीयते ॥

मूलं च सा विश्वस्य कार्यसंघातस्य तस्यास्तु न मूलमनवस्थाप्रसङ्गात। कर्त्री जगत्कर्त्री महदादेरहङ्कारादीन्प्रति प्रकृतित्वेन कर्तृत्वेऽपि न जगत्कर्तृत्वमनभ्युपगमात्। पुष्करपलाशवत्कमलपत्रवत् यथा जलेन कमलपत्रं न लिप्यति तथा पुरुषोऽपि कर्तृत्वभोक्तृत्वादिना न तथेत्यर्थः। चेतन इति। इदमुपलक्षणम् सुखाद्यननुषङ्गी न कस्यचित्प्रकृतिर्न विकृतिश्चेत्यपि बोध्यम्। तथाचागमः'–न प्रकृतिर्न विकृतिः पुरुष' इति। तन्नाशः–पुरुषनाशो, न स्यात्—माभूत, किंचित्कार्यनिष्ठकार्यतानिरूपितकारणताभावादेवास्य न विनाशित्वमपीति भावः। बुद्धिगतचैतन्याभिमानेति। चेतनोहमिति बुद्धिनिष्ठाभिमानेत्यर्थः। अन्यथानुपपत्त्या—पुरुषस्यास्वीकारेऽसि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ल्पनम् । बुद्धिश्च प्रकृतेः परिणामः । सैव महत्तत्त्वम्, अन्तःकरणमित्युच्यते । तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ । तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना संबन्धः । पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात् । ममेदं कर्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया तत्प्रतिविम्बादतात्त्विको दर्पणस्येव मुखोपरागः, इदमिति विषयोपरागः, इन्द्रियप्रणालिकया परिणतिभेदस्ता-

विवृतिः ।

ल्पना, तत्कल्पनम्–पुरुषकल्पनम् । ननु बुद्धिरेव कः पदार्थ इत्यपेक्षायां बुद्धिमाह बुद्धिश्चेति । प्रकृतेरिति । मूलप्रकृतेरित्यर्थः । परिणाम इति । परिणामो हि धर्मलक्षणावस्थाभेदात्त्रिविधः । प्रकृतेर्धर्मिणः प्रकृतेर्बुद्धिर्धर्मपरिणामः । सैव–बुद्धिरेव । तत्सत्त्वासत्त्वाभ्यामिति तत्पदेन बुद्धेर्ग्रहणम् । बुद्धिसत्त्वे संसारो बुद्धिनाशे मोक्षः । अर्थात्–विषयसंबन्धभानं पुरुषस्य संसारस्तदभावो मोक्षः । दुःखसम्बन्धतद्ध्वंसरूपौ संसारमोक्षौ तु बुद्धेरेव न पुरुषस्य बुद्धावेव दुःखस्य तद्ध्वंसस्य चोत्पाददिति भावः ।

तस्या एव—बुद्धेरेव । इन्द्रियेति । चक्षुरादीन्द्रियद्वारेत्यर्थः । परिणतिरिति । घटादिपदार्थविषयकज्ञानात्मकपरिणाम इत्यर्थः । स्वातन्त्र्येण पुरुषे विषयसम्बन्धस्तु निर्मूलत्वादुपेक्ष्य एव । कर्तृत्वाभिमानः—अहं करोमित्यात्मको भ्रमः । चैतन्येति । प्राकृतत्वादचेतनाया अपि चेतनाऽहमिति रूपः, भेदाग्रहात्–बुद्धेः पुरुषस्य च परस्परमभेदज्ञानात् । ममेदमिति । मम १ इदं २ कर्तव्य ३मित्यंशत्रये मदंशः प्रथमांशः पुरुषोपरागः–पुरुषसम्बन्धः, तत्प्रतिविम्बात्–पुरुषप्रतिविम्बात्, अतात्त्विकोऽलीकः, वस्तुतः पुरुषस्यासङ्गत्वात् । श्रूयतेऽपि 'असंगो ह्ययं पुरुष' इति । दृष्टान्तयति दर्पणस्येवेति । यथा स्वच्छदर्पणे मृषैव मुखप्रतीतिरेवं स्वच्छबुद्धावपि यः प्रतिबिंबाधीनः स्वत्वप्रत्ययः सोऽलीक इति भावः । प्रथमांशमुपपाद्य द्वितीयांशमाह–इदमिति । बुद्धिरेव चक्षुरादीन्द्रियप्रणालिकया परिणता

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्त्विको निःश्वासाभिहतदर्पणस्येव मलिनिमा, कर्तव्यमिति व्यापारांशः, तेनांशत्रयवती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः संबन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते । ज्ञानादिवत्सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव—कृतिसामानाधिकरण्येन प्रतीतेः । न च बुद्धिश्चेतना परिणामित्वादिति" मतमपास्तम्—कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्च । 'चेतनोऽहं करोमीति' प्रतीतिश्चैतन्यांशे भ्रम इति चेत् । कृत्यंशेऽपि किं नेष्यते । अन्यथा

विवृतिः ।

विषयमनुबध्नाति । सम्बन्धश्चोभयत्र वास्तविक एव । अंशत्रयवती—पुरुषविषयव्यापारैः सम्बन्धत्रयवतीत्यर्थः । तत्परिणामेन-बुद्धिपरिणामेन । उपलब्धिरुच्यत इति । बुद्धिपरिणामात्मकज्ञानेन योऽलीकः सम्बन्धः स एव सांख्याचार्यैरुपलब्धिपदेनाभिधीयते तन्मते बुद्ध्युपलब्ध्योरनर्थान्तरत्वादिति भावः । ज्ञानवत्परिणामिज्ञानवत् । प्रतीतेरिति । 'अहं कर्ताहं सुखी'त्यादिप्रत्ययतः सुखादीनां कृत्या (बुद्धिधर्मेण) सहैकाधिकरणत्वभानादित्यर्थः । परिणामित्वात्-प्रयत्नाद्यनित्यधर्माश्रयत्वात् । कृत्यदृष्टभोगानामिवेति । कृतिरहं कर्ता अदृष्टमहं धार्मिकः भोगोऽहं भोक्तेत्यादिप्रत्ययो यथैकाधिकरणे तथाहं चेतन इति प्रत्ययोऽपि तत्र दुर्निवार इत्यर्थः । तद्भिन्ने—कर्तृभिन्ने । मानाभावाच्चेति । कर्तृतो भिन्ने चेतनताङ्गीकारस्तु प्रमाणाभावनिरस्त इत्याशयः । भ्रम इति । यतश्च न वस्तुतश्चैतन्यं बुद्धौ पुरुषप्रतिबिम्बेन चेतनतोपगमादतोऽलीक एवाभिमानः । कृत्यंशे—प्रयत्नांशे । किं नेष्यत इति । प्रतीतौ द्वयोरपि सामानाधिकरण्यस्य भानादिति । विपक्षे दोषमुद्भावयति—अन्यथेति । कर्तुश्चेतनस्य चाभेदानङ्गीकारे इत्यर्थः । तत्र पृच्छ्यते—बुद्धिर्नित्याऽनित्या वा ? नाद्यः, बुद्धिसत्त्वनिबन्धनस्य जगतोऽपि नित्यत्वप्रसङ्गेनापवर्गनिरर्गलतापत्तेः । न द्वितीयोऽपि तथासत्युत्पत्तिमत्त्वस्यावश्यमन्तव्यत्वेनानुत्पत्तिमतो विलयानुपपत्तेरेवं च बुद्धेरुत्पत्तितः प्राग्बुद्धिसत्त्वनिबन्धनस्य जगतः सुतरामभावप्रसङ्गोऽपि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्वमसंसारापत्तिः । नन्वचेतनायाः प्रकृतेः कार्यत्वाद्बुद्धेरचेतनत्वं कार्यकारणयोस्तादात्म्यादिति चेन्न । असिद्धेः, कर्तुर्जन्यत्वे मानाभावात् । वीतरागजन्मादर्शनादनादित्वम् । अनादिभावस्य नाशासंभवान्नित्यत्वम् । तत्किं प्रकृत्यादिकल्पनेन । न च–

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते"॥ (गीता अ. ३ श्लो. २७)

विवृतिः ।

शङ्कते–नन्विति । कार्यत्वादिति । प्रकृतिनिष्ठकारणतानिरूपितकार्यताया बुद्धिनिष्ठत्वं तु 'प्रकृतेर्महा'नित्यादिनागमेनोपपन्नम् । कार्यकारणयोस्तादात्म्यादिति । कार्यस्य कारणगुणात्मकत्वादित्यर्थः । अतएव सुखदुःखमोहात्मकप्रकृतिकार्यस्य महदादिलक्षणस्य सुखदुःखमोहात्मकत्वमुपपद्यते । निरस्यति–नेति । असिद्धेरिति । प्रकृतिनिष्ठकारणतानिरूपितकार्यता बुद्धिनिष्ठास्तीत्येतस्यासिद्धेरित्यर्थः । कर्तुर्जन्यत्वे–यः यः कर्ता स स जन्य इति जन्यतानिरूपितव्याप्तिमत्त्वे । वीतरागेति । विरक्तानुरक्तपुरुषयोरनुरक्तस्यैव पुनरुत्पाद इति वीतरागेति पारमर्षसूत्रेणापि बोधनादनादित्वं कर्तुरव्याहतमित्यर्थः ।

अनादिभावस्येति । जन्यभावस्य तु नाशः संभवत्येव । भावानुक्तौ प्रागभावनाशो न स्यादतो भावपदम् । तत्किं प्रकृत्यादीति । प्रमाणरहितानां प्रकृत्यादिपदार्थानां कल्पनं सांख्यानामपार्थमेव प्रतिभाति पुरुषस्यैव कर्तृत्वात् । प्रकृतेः क्रियमाणानीति । प्रकृतिः–सत्त्वरजस्तमोद्वारा तत्तन्महाभूतरूपेण परिणता माया, तस्या गुणाः सत्त्वरजस्तमोलक्षणा वा कार्यभूताः शरीरेन्द्रियादयस्तैरेव क्रियमाणानि न क्वचिदप्यात्मना कर्माणि भवन्ति अहंकारोऽहमितिबुद्धिस्तेन विमूढो विपरीतग्रहणपर आत्मा मनो यस्य सः यद्वा शरीरेन्द्रियादिष्वहंकरणेन विमोहितोऽहं द्रष्टाहं स्प्रष्टाहं कर्ताहं भोक्तेति तत्तदुपाधिसंबंधसंभाविताली‍कवृत्तिविषयत्वं प्रापितो येनात्मा स पुरुषोऽहंकर्तेति मन्यते सुकृतदुष्कृतादिकर्मकर्तृत्वेनात्मानमवगच्छतीत्यर्थः । यदुक्तमन्यत्रापि—'गुणकर्तृत्वेऽपि तथा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इत्यनेन विरोध इति वाच्यम् । प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यैरिच्छादिभिः कर्ताहमेवेत्यस्य तदर्थत्वात् । "तत्रैवं सति कर्तारमात्मानं केवलं तु यः" इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय-इति संक्षेपः ।

धर्माधर्मेति । आत्मेत्यनुषज्यते । शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरेण भोगानुपपत्तेः । विशेषेति । योग्यविशेषगुणस्य ज्ञानसुखादेः संबन्धेनात्मनः प्रत्यक्षत्वं संभवति न त्वन्यथा–'अहं जाने अहं करोमि' इत्यादिप्रतीतेः ॥ ४९ ॥

विवृतिः ।

कर्तेव भवत्युदासीन' इति । इत्यनेन—पुरुषकर्तृत्वनिषेधकेन भगवद्वाक्येन सह विरोधस्तव नैयायिकस्येति शेषः । तदर्थत्वात्–भगवद्वाक्यार्थत्वात्तेन स्वतन्त्रकर्तृत्वमात्मनो नास्तीत्युक्तम् । 'अधिष्ठानं तथा कर्ता करणं च तथाविध'मित्यादिना पञ्चानामधिष्ठानादीनामेव सर्वकर्मनिष्पत्तिकारणत्वोपगमादिदमेव, 'तत्रैवं सती'त्यादिना प्रतिपादितं भवति । तदयमखण्डार्थः—पंचानां सर्वकर्मनिवर्तकत्वे योऽकृतबुद्धिरहमेतस्य कर्मणः कर्तेत्यकर्तारमेवात्मानं केवलं कर्तारं पश्यति दुर्मतिरेवं च सामान्यकर्तृत्वमनिवार्यमेव । 'अनन्तश्चात्मा विश्वरूपो ह्यकर्ते'त्यादिशास्त्रं सर्वथा कर्तृत्वाभावमात्मनो गमयतीति चेन्न । केवलस्यात्मनोऽकर्तृत्वेऽप्युपाधिविशिष्टस्य कर्तृत्वसिद्धेरिति दिक् ।

शरीरस्येति सुखाद्याश्रयं शरीरम् । तथा च भाष्यम् 'यत्रायतने इन्द्रियार्थसंनिकर्षादुत्पन्नयोः सुखदुःखयोः प्रतिसंवेदनं प्रवर्तते तच्छरीरमिति' । ननु यथा सुखादेराश्रयस्तथा धर्मादेरपि स्यादित्यत्राह—तदाश्रयत्व इति । धर्माधर्माश्रयत्वे इत्यर्थः । देहान्तरेति । अन्येन कायेनानुष्ठितस्य पुण्यपापादेरन्येनोपभोगो न स्याकर्तुर्नाशादित्यर्थः । न त्वन्यथा–ज्ञानसुखादिप्रत्यक्षयोग्यविशेषगुणसंबन्धमनपेक्ष्यापीत्यर्थः । करोमीत्यादीत्यादिना यते इच्छामीत्यादेः संग्रहः ॥ ४९ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः।
अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः॥ ५०॥

प्रवृत्त्येति। अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते। प्रवृत्तिरत्र चेष्टा। ज्ञानेच्छाप्रयत्नादीनां देहेऽभावस्योक्तप्रायत्वाच्चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्मानुमीयते इति भावः। अत्र दृष्टान्तमाह—रथेति। यद्यपि रथकर्म चेष्टा न भवति, तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्मणा परात्मापीति भावः।

अहंकारस्येति। अहंकारोऽहमिति प्रत्ययस्तस्याश्रयो विषयः आत्मा न शरीरादिरिति। मन इति। मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः। रूपाद्यभावेनेन्द्रियान्तरायोग्य-

विवृतिः।

धर्माधर्माश्रयत्वस्य चागमप्रामाण्यग्रहं विना दुर्ग्रहत्वाविशेषादनुमानमाह—प्रवृत्त्यादिनानुमीयत इति। आदिना हर्षशोकभयादिपरिग्रहः। एतैरेव प्रत्ययैर्ज्ञानादिप्रकारकत्वेन जीवात्मनो मानमिति भावः। उक्तप्रायत्वादिति। 'शरीरस्य न चैतन्य'मित्यादिग्रन्थेनेत्यर्थः। प्रयत्नवानात्मानुमीयत इति। परदेहे परचेष्टामवलोक्येयं चेष्टा प्रयत्नजन्या चेष्टात्वात्स च प्रयत्न आत्मजन्यः प्रयत्नत्वादित्यनुमानेनात्मानुमितिविषयो भवतीत्यर्थः। चेष्टा न भवतीति। ईप्साजिहासारूपकर्मणोऽचेतने रथादावभावात्तादृशकर्मण एव च चेष्टापदार्थत्वादिति भावः। परात्मानुमीयत इति। यथैवाचेतनो रथश्चलन्स्वस्थितं चेतनं सारथिमनुमापयति तथाऽचेतनो देहोऽपि प्रवृत्तिमन्तमात्मानमवगमयतीति निष्कर्षः। अहङ्कारोहमिति प्रत्यय इति। भवति च मम देह इति ममत्वसाधारण्येनाहंकारस्य प्रतीतिर्ममात्मेति प्रयोगस्तु राहोः शिर इति वदुपचारनिबंधन एव। न शरीरादिरिति। यतोऽहं जानेऽहं सुखीत्यादि प्रतीतिरात्मानमनुबध्नाति न शरीरादिमतो ज्ञानसुखादीनामन्य एव शरीरादेराश्रयो वक्तव्यः। स आत्मैवेति सर्वं सुस्थम्। मनोभिन्नेन्द्रियेति। केवलं मनसैवात्मनः प्रत्यक्षं भवति न रूपादिवच्चक्षुरादीन्द्रियैरपी-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वात् ॥ ५० ॥

विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥ ५१ ॥

विभुरिति । विभुत्वं—परममहत्परिणामवत्त्वम् । तच्च पूर्वोक्तमपि स्पष्टार्थमुक्तम् । बुद्ध्यादीति । बुद्धिसुखदुःखेच्छादिचतुर्दशगुणाः पूर्वोक्ता वेदितव्याः । अत्रैव प्रसङ्गाद्बुद्धेः कतिपयं प्रपञ्चं दर्शयति—बुद्धिस्त्विति । द्वैविध्यं व्युत्पादयति—अनुभूतिरिति । अनुभूतिश्चतुर्विधेति । एतासां चतसृणां करणानि चत्वारि—प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति—सूत्रोक्तानि वेदितव्यानि ॥ ५१ ॥

प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।
घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥

प्रत्यक्षमिति । इन्द्रियजन्यं ज्ञानं प्रत्यक्षम् । यद्यपि मनोरूपेन्द्रियजन्यं

विवृतिः ।

त्यर्थः । इन्द्रियान्तरायोग्यत्वात्—मनोभिन्नेन्द्रियागोचरत्वात् कश्चिद् विद्वान्कश्चिन्मूर्ख इति मतिरात्मनो नानात्वं व्यवस्थापयतीत्युक्तं प्राक् ॥ ५० ॥

परममहदिति । विभवो निखिलमूर्तपदार्थसंयोगित्वं तच्च परममहत्परिमाणवत्त्वं विनानुपपद्यमानं परममहत्वं गमयितुमर्हति । यदि पूर्वोक्तमात्मनो मन्येत तदा तत्र तत्र मूर्तपदार्थेषु कर्म नोत्पद्येतात्मसंयोगादपि, एवं संचरणशीले तत्र तत्र देहे ज्ञानादिप्रसवोऽपि आत्मनो विभुत्वमनङ्गीकृत्य दुर्घट इति सिद्ध्यत्यात्मनो विभुत्वम् तथाच श्रुतिरपि—'आकाशवत्सर्वगतो नित्य' इति । पूर्वम्—कालखात्मदिशामित्यादिग्रन्थेनेत्यर्थः । प्रसङ्गादिति । प्रसङ्गत्वं चानन्तराभिधानप्रयोजकशिष्यजिज्ञासाजनकज्ञानविषयत्वम् । एतासां चतसृणां—प्रत्यक्षानुमित्युपमितिशाब्दप्रमितीनाम् । इति सूत्रोक्तानि—एतस्मिन्गौतमीयतृतीयसूत्रे उद्दिष्टानीत्यर्थः ॥ ५१ ॥

प्रत्यक्षस्य सर्वप्रमाणेषु ज्येष्ठत्वादनुमानादीनां तदधीनत्वाच्च प्रथमं प्रत्यक्षं लक्षयति—इन्द्रियजन्यमिति । प्रत्यक्षं—प्रत्यक्षप्रमिति-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सर्वमेव ज्ञानं, तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने कारणत्वं तत्प्रत्यक्षमिति विवक्षितम् । ईश्वरप्रत्यक्षं तु न लक्ष्यम्—'इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति' सूत्रे तथैवोक्तत्वात् । अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् । अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य कारणत्वात्तत्र तत्र नातिव्याप्तिः । इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् ।

परामर्शजन्यं ज्ञानमनुमितिः । यद्यपि परामर्शप्रत्यक्षादिकं परा-

विवृतिः ।

कारणमिन्द्रियमित्यर्थः । सर्वमेव ज्ञानमिति । मनःसन्निधानादेव तत्तज्ज्ञानोत्पत्तिदर्शनादित्यभिप्रायः । इन्द्रियाणां—चक्षुरादीनां, यत्र ज्ञाने—रूपादिज्ञाने, न लक्ष्यम्—किन्तु जन्यप्रत्यक्षमेव लक्ष्यमिति भावः । अमुमेवार्थं दृढयितुं पारमर्षं सूत्रं प्रमाणत्वेनोपन्यस्यति—'इन्द्रियार्थसंनिकर्षोत्पन्नमिति' । इन्द्रियाणां चक्षुरादीनामर्थेन घटादिना यः संनिकर्षः संयोगादिस्तदुत्पन्नमव्यभिचारि भ्रमभिन्नमव्यपदेश्यं निर्विकल्पकं व्यवसायात्मकं विशिष्टज्ञानात्मकं ज्ञानं प्रत्यक्षमिति तदर्थः । इन्द्रियस्यार्थेन यदुत्पद्यते ज्ञानं तत्प्रत्यक्षम् ज्ञानं च "रूपमिति वा रस इति" वेति भाष्यम् । तथैवोक्तत्वादिति । ईश्वरप्रत्यक्षस्यालक्ष्यत्वाभिप्रायेणैवोक्तत्वादित्यर्थः । तस्यापि लक्ष्यत्वमभिसंधाय पक्षान्तरमाह—अथवेति । ज्ञानाकरणकमिति । ज्ञानस्य व्याप्त्यादेरकरणत्वं प्रत्यक्षस्य करणकत्वं चानुमित्यादेरिति विशेषोऽवगन्तव्यः । यस्य ज्ञानस्य ज्ञानान्तरं करणं नास्ति तज्ज्ञानं प्रत्यक्षमिति परमार्थः । अनुमितौ—अनुमित्यात्मकज्ञानेप्रतीत्यैवमग्रेऽपि । न तत्रातिव्याप्तिरिति । एतेषामनुमित्यादिज्ञानानां ज्ञानान्तरकरणकत्वं प्रत्यक्षस्येन्द्रियकरणकत्वमिति नानुमित्यादावतिप्रसङ्ग इति भावः ।

तत्र प्रत्यक्षकार्यत्वादनुमितिं प्रत्यक्षानन्तरं लक्षयति—परामर्शेति । परामर्शस्तु विषयितासम्बन्धेन व्याप्तिविशिष्टं व्याप्तिप्रकारकं पक्षविशेष्यकं यत्पक्षधर्मताज्ञानं हेतुतावच्छेदकसंसर्गावगाहि ज्ञानं तदेव तज्जन्यं पर्वतो वह्निमानित्यात्मकं ज्ञानमनुमितिरिति नि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मर्शजन्यं तथापि परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं तदेवानुमितिः। न च कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम्। तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः। एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः। पदज्ञानकरणकं ज्ञानं शाब्दबोधः। वस्तुतो यां कांचिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वम्। एवं यत्किंचित्प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति।

जन्यप्रत्यक्षं विभजते–घ्राणजादीति। घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम्। न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वम्, जन्यप्रत्यक्षस्यैव निरूपणीयत्वादुक्तसूत्रानुसारात्॥५२॥

विवृतिः।

त्कर्षः। प्रत्यक्षादिकमित्यादिना परामर्शध्वंसोपग्रहः। हेत्वविषयकमिति। हेतुं यन्न विषयीकरोति तादृशं वह्निमानिति रूपमित्यर्थः। कादाचित्कहेतुविषयकानुमितौ–यदा कदाचिद् धूमरूपहेतुं विषयीकुर्वाणे धूमवान्पर्वतो वह्निमानिति ज्ञाने। अव्याप्तिरिति। अनुपदोक्तानुमितिलक्षणस्येत्यर्थः। अत्र पक्षतावच्छेदकरूपेण धूमरूपहेतुप्रतीतेर्दुर्निवारत्वादिति भावः। समाधानहेतुमाह–तादृशज्ञानेति। व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यानुमितिज्ञानेत्यर्थः। जातिरनुमितित्वम्। अथवेति। लाघवमेवोत्तरलक्षणानुसरणे बीजम्। तद्व्यक्तिवृत्तीति। अनुमितिव्यक्तिवृत्तीत्यर्थः। जातिरनुमितित्वम्। तद्व्यक्तिवृत्ति–प्रत्यक्षव्यक्तिवृत्ति, जातिः–प्रत्यक्षत्वम्। प्रत्यक्षत्वादिकमित्यादिनोपमितित्वशाब्दबोधत्वसंग्रहः।

घ्राणजादीतीति। घ्राणजत्वादिकं तु जिघ्रामि आस्वादयामि पश्यामि शृणोमि स्पृशामि मनसा सुखं साक्षात्करोमीत्यनुभवसिद्धो जातिविशेष एव। षड्विधत्वावगतौ स्पष्टप्रतिपत्त्यर्थं तत् मूलं तु संख्याविप्रतिपत्तिनिरासाय तथोक्तिरिति ध्येयम्। अविभजनात्–विभागाकरणात्, न्यूनत्वं मूलकृत इति शेषः। जन्यप्र-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥

गोचर इति । ग्राह्य इत्यर्थः । गन्धत्वादिरिति । आदिपदात् सुरभित्वादिपरिग्रहः । गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा । गन्धाश्रयग्रहणे तु घ्राणस्य न सामर्थ्यमिति बोध्यम् । तथा रस इति । रसत्वादिसहित इत्यर्थः । तथा शब्दोऽपि शब्दत्वादिसहितः । गन्धो रसश्च उद्भूतो बोध्यः ॥ ५३ ॥

उद्भूतरूपं नयनस्य गोचरो
द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ।
विभागसंयोगपरापरत्व-
स्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥

विवृतिः ।

त्यक्षस्यैवेति । इन्द्रियार्थसंनिकर्षोत्पन्नमिति न्यायसूत्रानुरोधेन प्रकृते जन्यप्रत्यक्षनिरूपणस्यैव योग्यत्वादीश्वरप्रत्यक्षं तु न जन्यम् ॥ ५२ ॥

मूले यस्येन्द्रियस्य यद्ग्रहणे सामर्थ्यं तत्प्रदर्शयितुमाह–घ्राणस्येति । गन्धत्वावच्छिन्ने पृथिवीत्वेन कारणत्वाद् गन्धत्वजातिसिद्धेराह गन्धत्वादिरिति । सुरभित्वादीति । गन्धत्वव्यापकजातिरित्यर्थः । तद्वृत्तिजातिरपि प्रत्यक्षेति । 'येनेन्द्रियेण यद् गृह्यते तेनेन्द्रियेण तन्निष्ठजातिरपि गृह्यते' इति नियमाद् गन्धत्वजातिप्रत्यक्षत्वमक्षतम् । गन्धाश्रयग्रहणे त्विति । समवायेन गन्धाश्रयस्य पुष्पादिपृथिव्या ग्रहणे त्वित्यर्थः । असामर्थ्यमिति । इन्द्रियाणां स्वाविषयभिन्नविषयानवभासकत्वनियमादिति भावः । प्रदर्शितदिशमनुसंधायैवाह–रसत्वादिति । रसनेन्द्रियद्वारा रसो गुणो रसनिष्ठरसत्वजातिश्च गृह्यत इति निष्कर्ष एवमग्रेऽपि । उद्भूत इति । प्रत्यक्षयोग्य इत्यर्थः । तेनानुद्भूतयोर्गन्धरसयोरप्रत्यक्षत्वेऽपि न क्षतिरिति ध्येयम् ॥ ५३ ॥

मूले उद्भूतरूपमिति क्लीबपदसमभिव्याहाराद्गोचरमिति वक्त-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ग्रीष्मोष्मादावनुद्भूतरूपमिति न तत्प्रत्यक्षम् । तद्वन्ति उद्भूतरूपवन्ति ॥ ५४ ॥

क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ।
गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥ ५५ ॥

योग्येति । पृथक्त्वादिकमपि योग्यवृत्तितया बोध्यम् । तादृशः योग्यव्यक्तिवृत्तिरित्यर्थः । चक्षुर्योग्यत्वमेव कथं तदाह—गृह्णातीति । आलोकसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम् । तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसंबन्धेन कारणत्वम् , द्रव्यसमवेतरूपादिप्रत्यक्षे स्वाश्रयसमवायसंबन्धेन, द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेनेति ॥ ५५ ॥

विवृतिः ।

व्येऽपि तस्य नित्यपुंल्लिंगत्वबोधनाय तथा चोक्तमित्यभिप्रेयम् । अनुद्भूतरूपामिति । अत्रेदमवधेयम् तेजो हि चतुर्विधं–किञ्चिदुद्भूतरूपस्पर्शं यथा सौरादि, किञ्चिदुद्भूतरूपमनुद्भूतस्पर्शं यथा चान्द्रम, किंचिदनुद्भूतरूपस्पर्शं यथा नायनम, ग्रीष्मर्तुभवं तेज उद्भूतस्पर्शमपि परमनुद्भूतरूपमतो न तत्प्रत्यक्षं किन्तूष्णस्पर्शवत्त्वेन तत्र तेजस्त्वमनुमीयते ॥ ५४ ॥

पृथक्त्वादिकमित्यादिना संख्यादिपरिग्रहः । योग्यव्यक्तीति । प्रत्यक्षयोग्यव्यक्तीत्यर्थः । योग्यव्यक्तिवृत्तिरिति । योग्यत्वं–प्रत्यक्षविषयत्वम् । आलोकसंयोग उद्भूतरूपामिति । चक्षुर्जन्यप्रत्यक्षं प्रत्यालोकसंयोगत्वेनोद्भूतरूपत्वेन च हेतुत्वमस्तीत्यर्थः । पूर्वस्य हेतुत्वमन्धकारे घटादीनां चाक्षुषापत्तेरुत्तरस्य तु पिशाचादीनां प्रत्यक्षस्य व्युदासार्थमावश्यकम् । चाक्षुषेऽपि विशेषमाह–तत्रेति । द्रव्यचाक्षुषं प्रतीति । घटादिद्रव्यचक्षुषं–प्रतीत्यर्थः । तयोः–उद्भूतरूपालोकसंयोगयोः, समवायसम्बन्धेन–विषयनिष्ठसमवायसम्बन्धेन, गुणगुणिनोश्च समवायात् । द्रव्यसमवेतरूपादीति । घटादिद्रव्ये समवायेन वर्तमानरूपादीत्यर्थः । स्वाश्रयसमवायसम्बन्धेनेति । स्वं रूपादिकं तदाश्रयोऽधिकरणं तन्निष्ठसमवायेनेत्यर्थः । एवं स्वाश्रय-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥

द्रव्याध्यक्षे —

उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः । सोऽपि उद्भूतस्पर्शोऽपि स्पर्शत्वादिसहितः । रूपान्यदिति । रूपभिन्नं रूपत्वादिभिन्नं यच्चक्षुषो योग्यं तत्त्वगिन्द्रियस्यापि ग्राह्यम् , तथाच पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ता एवं क्रिया जातयो योग्यवृत्तयश्च ते त्वचो ग्राह्या इत्यर्थः । अत्रापि त्वगिन्द्रियजन्येऽपि द्रव्यप्रत्यक्षे रूपं कारणम् । तथाच बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम् । नवीनास्तु बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे न रूपं कारणं प्रमाणाभावात् । किंतु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणमन्वयव्यतिरेकात् । बहिरिन्द्रियज-

विवृतिः ।

समवेतसमवायसम्बन्धेनेत्यत्र स्वपदेनालोकसंयोगोद्भूतरूपयोर्ग्रहस्तदाश्रयो घटादिकं तत्र समवेतं रूपादि तत्र समवेतं रूपत्वादि तत्प्रत्यक्षे एतादृशपरम्परयाऽलोकसंयोगोद्भूतरूपयोर्हेतुत्वं बोध्यम् ॥ ५५ ॥

त्वचो गोचर इति । उद्भूतस्पर्शशालिद्रव्यं त्वगिन्द्रियं गृह्णातीत्यर्थः । स्पर्शत्वादिसहित इति । स्पर्शनिष्ठस्पर्शत्वादिजात्या सहोद्भूतस्पर्शोऽपि त्वगिन्द्रियेण गृह्यते इत्यर्थः । रूपादिभिन्नमित्यंशपूरणं न तु विवरणं तथात्वे रूपादिभिन्नमित्येव ब्रूयादित्याहुः । चक्षुषो योग्यं—चक्षुरिन्द्रियविषयः, क्रियाजातयः प्रत्यक्षयोग्यद्रव्याणां क्रिया जातयश्चेत्यर्थः । रूपं कारणमिति । रूपमन्तरा द्रव्यस्य त्वाचसाक्षात्कारानुपपत्तेः । लाघवादाह—तथाचेति । नवीनास्तु—गङ्गेशोपाध्यायप्रभृतयस्तु, इत्याहुरिति दूरेणान्वयः । ननु यदि साधकाभावात्प्रत्यक्षसामान्ये रूपस्य न हेतुत्वं तर्हि कथं व्यवस्थेत्यत आह—किन्त्विति । रूपं-कारणमित्यनुषङ्गः । स्पार्शनप्रत्यक्षे—त्वाचसाक्षात्कारे । अन्वयव्यतिरेकादिति । रूपसत्त्वे चाक्षुषप्रत्यक्षसत्त्वमन्वयः । रूपाभावे चाक्षुषप्रत्यक्षाभावो व्यतिरेकः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेन्न किंचित् । आत्मावृत्तिशब्दभिन्नाविशेषगुणवत्त्वं वा प्रयोजकमस्तु । रूपस्य कारणत्वे लाघवमिति चेन्न । वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात् । इष्टापत्तिरिति चेदुद्भूतस्पर्श एव लाघवात्कारणमस्तु । प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरेव किं नेष्यते । तस्मात् प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्यक्षसंभवाद्वायोरपि प्रत्यक्षं संभवत्येव । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपस्य न वा स्पर्शस्य हेतुत्वम् । वायुप्रभयोरेकत्वं गृह्यत एव, क्वचिद्द्वित्वादिकमपि, क्वचित्संख्यापरिमाणाद्यग्रहो दोषादित्याहुः ॥ ५६ ॥

विवृतिः ।

एवं स्पर्शसत्त्वे त्वाचप्रत्यक्षं तदभावे तदभावः । कारणमिति । अनुगतमेकं कारणमित्यर्थः । नेति । न किञ्चिदपि । यद्वा विशेषगुणवत्त्वं पृथिव्यादिचतुष्टये वर्तत इति तस्यैव तत्र हेतुताङ्गीकारे न काचित्क्षतिरस्माकमिति नव्यस्याशयः । रूपस्येति । प्राच इयं शंका । नेति । इदं प्राचीनमते नवीनकर्तृकदोषोद्भावनम् । इष्टापत्तिरिति चेदिति । अस्मन्मते वायुर्न प्रत्यक्षः किन्तु स्पर्शरूपलिङ्गादनुमेय इति सिद्धं नः समीहितमिति चेत्तादृशप्रत्यक्षे हेतुत्वमुद्भूतस्पर्शस्यैव तर्हि मन्तव्यं प्रभाया अप्रत्यक्षत्वदोषस्य पूर्ववदिष्टापत्त्यैव वारयितुं शक्यत्वादिति नव्यनादः । अथोपसंहारः–तस्मादिति । ननु प्रभां पश्यामीत्यादि सर्वं भ्रममूलकमेवेति चेन्न । घटं पश्यामि घटं स्पृशामीत्यादिप्रत्ययस्यापि तथात्वापत्तेः । एकत्वमिति । अयमेको दक्षिणो वायुरियमेका प्रभेति लोकात् । प्रभागतैकत्वं चक्षुषा वायुगतैकत्वं च त्वचेति बोध्यम् । क्वचित्–सजातीयप्रत्ययविरहे । द्वित्वादिकमिति । गृह्यत इति पूर्वेणानुषङ्गः । द्वितीयोऽयं वायुरिति प्रतीतेः । दोषात्–सजातीयप्रत्ययादिरूपदोषात् दोषाभावेऽप्यग्रहे तु नैष स्थाणोरपराधो यदेनमन्धो न पश्यतीति न्याय एव शरणीकरणीयः । मतान्तरसूचनाय आहुरित्युक्तं तच्चास्वरसोद्भावनम् किं तद्बीजमिति चेद्वायुप्रत्यक्षत्वसंदेहादिकमेव परिकलय । बहिरिन्द्रियजन्यमूर्तद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपस्य हेतुत्वात्पल्लवः प्रकाशे ॥ ५६ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वचो योगो मनसा ज्ञानकारणम् ।

त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः । किं तत्र प्रमाणम् ? सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननमिति ।

ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं स्मरणरूपं वा ? नाद्यः । अनुभवसामग्र्यभावात् । तथाहि–प्रत्यक्षे चक्षुरादिना मनःसंयोगस्य हेतुत्वात्तदभावादेव न चाक्षुषादिप्रत्यक्षम् । ज्ञानादेरभावादेव न मानसं प्रत्यक्षम् । ज्ञानाद्यभावे चात्मनोऽपि न प्रत्यक्षमिति । एवं व्याप्तिज्ञानाभावादेव नानुमितिः । सादृश्यज्ञानाभावान्नोपमितिः । पदज्ञानाभावान्न शाब्दबोधः । इत्यनुभवसामग्र्यभावान्नानुभवः । उद्बोधकाभावाच्च न स्मरणम् । मैवम् । सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्संबन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात् । तदतीन्द्रियत्वे मानाभावात् । सुषुप्तिप्राक्काले निर्विकल्पकमेव नियमेन जायत

विवृतिः ।

ज्ञानसामान्य इति । अत्र पूर्वं जन्यपदमपि योज्यमन्यथा त्वङ्मनोयोगस्य नित्यज्ञानं प्रत्यहेतुत्वान्मूलासंगतिः स्पष्टैव । पुरीतति–नाडीविशेषे । ननु तस्मिन्काले त्वङ्मनोयोगाङ्गीकारेऽपि कीदृग् ज्ञानमुत्पत्स्यत इत्याशङ्कते–नन्विति । नाद्यः नानुभवात्मकमित्यर्थः । तत्र हेतुमाह–अनुभवेति । अनुभवजनक एवानुभवसामग्री तदभावात्तत्साचिव्येनैव तज्ज्ञानस्यावश्यमन्तव्यत्वाच्च । प्रत्यक्षे–चाक्षुषादिप्रत्यक्षे, तदभावादेव–चक्षुरादिना मनःसंयोगाभावादेव, चाक्षुषादीत्यादिना त्वाचादिपरिग्रहः । ननु तत्र मानससाक्षात्कारो भविष्यतीत्याशङ्क्य निराकरोति–ज्ञानादेरभावादेव नेति । ज्ञानाद्यभावे चेति । सुषुप्तिकाल इति न विस्मर्तव्यम् । इत्यनुभवसामग्रीति । तादृक्संयोग–व्याप्ति–सादृश्य–पद–ज्ञानरूपानुभवजनकसामग्रीत्यर्थः । उद्बोधकाभावादिति । संस्काराणामुद्बोधकस्य फलबलेनैव कल्पयितुं शक्यत्वादिति भावः । तत्सम्बन्धेन–तादृशेच्छादिसंबंधेन । अत्रेच्छादिपदं ज्ञानपरमभिप्रेतव्यमन्यथा प्रत्यासत्त्या ज्ञानं विहायेच्छादिव्यक्तेरिति मूलाभिधानस्यासङ्गतेः । तदतीन्द्रियत्वे–ज्ञानातीन्द्रिय-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इत्यत्रापि प्रमाणाभावात्। अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात्। विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात्। परस्परप्रतिबन्धादेकमपि वा न स्यादिति। अत्र केचित्पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात्कल्प्यत इति।

अन्ये तु सुषुप्त्यनुरोधाच्चर्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यते। चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति।

मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥ ५७ ॥

मनोग्राह्यमिति। मनोजन्यप्रत्यक्षविषयमित्यर्थः। मतिर्ज्ञानम्।

विवृतिः।

त्वे। निर्विकल्पकमिति। 'विकल्पः संशये भेदे' इति वररुचिकोषात् निर्गतो विकल्पः प्रकारतादिकृतो भेदो यतस्तत् निष्प्रकारकमित्यर्थः। परस्परप्रतिबन्धादिति। परस्परप्रतिबन्धकत्वं च चाक्षुषस्पार्शनसामग्र्योर्यथाक्रमं स्पार्शनचाक्षुषज्ञानं प्रति प्रतिबन्धकत्वादवधेयम्। तत्र प्रतिबध्यप्रतिबन्धकभावकल्पने तु तादृक्संयोगस्येन्द्रियमनःसंयोगरूपज्ञानसामग्र्याश्च सर्वत्र सत्त्वं निराकुलमेव तस्याश्च प्रतिबन्धकत्वाङ्गीकारे सुतरां सर्वज्ञानाभावप्रसङ्गवारणं दुःशकम् यद्वैकमपीत्यस्य स्पार्शनं चाक्षुषं वेत्यर्थो बोध्यः, कारणमुक्तमेव। पूर्वोक्तयुक्त्या—सुषुप्तिकाले त्वचं त्यक्त्वेत्यादि प्रतिपादितादिशा। अन्ये तु—पक्षधरमिश्रास्तु। सुषुप्त्यनुरोधेनेति। अस्य सुषुप्तौ ज्ञानानुत्पत्त्यनुरोधेनेत्यर्थः करणीयः। इतरथा पुरीतति नाड्यां मनःप्रवशादतिरिक्तायाः सुषुप्तेरनवगमात्त्वङ्मनोयोगस्य ज्ञानं प्रति हेतुत्वेऽपि दोषानुदयादसंगतिः स्पष्टैव। चर्म—त्वगिन्द्रियगोलकम्। न त्वाचप्रत्यक्षमिति। पूर्वोक्तत्वाचप्रत्यक्षापत्तिरूपदोषोऽपि मिश्रमते नोदेतीत्यर्थः॥

मनोजन्यप्रत्यक्षविषयम्—मानसप्रत्यक्षमात्रविषयमित्यर्थः। तेन लौकिकचाक्षुषादेर्मानसत्वेऽपि घटादौ नातिप्रसङ्गः॥ मतिर्ज्ञानमि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कृतिः प्रयत्नः। एवं सुखत्वादिकमपि मनोग्राह्यम्। एवमात्मापि मनोग्राह्यः, किन्तु मनोमात्रस्य गोचर इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः॥ ५७॥

ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते।
महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम्॥ ५८॥

चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न संभवति पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। तथाच प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते। तदेव निर्विकल्पकम्। तच्च न प्रत्यक्षम्। तथाहि—वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति घटमहं जानामीति प्रत्ययात्। तत्रात्मनि ज्ञानं प्रकारीभूय भासते। ज्ञाने घटस्तत्र घट-

विवृतिः।

ति। यत्किञ्चिच्छ्रवणानन्तरं यज्ज्ञानमुत्पद्यते तदेव मतिरित्यभिधीयतेऽतश्च तयोरनर्थान्तरत्वम्, श्रुतिस्मृती चात्र भवतः—"आत्मा वारे श्रोतव्यो मन्तव्य" इति॥ 'श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यता' मित्यादीनि॥ एवं सुखत्वदुःखत्वादिकमपीति। व्यक्तिग्राहकेन्द्रियस्य व्यक्तिवृत्तिजातिग्राहकत्वनियमात् अत एव सुखसुखत्वादिज्ञानमिन्द्रियकरणकं ज्ञानत्वात् रूपादिज्ञानवदितीन्द्रियत्वेन मनःसिद्धिर्द्रष्टव्या। अनेन-कारिकाग्रन्थेन॥ ५७॥

ननु निर्विकल्पकज्ञाने किं मानमिति चेदत्राह चक्षुःसंयोगादीति। घटत्वादिविशिष्टमिति। घटत्वादिप्रकारकं घटादिविशेष्यकं विशिष्टं-प्रकारताविशेष्यतानिरूपकमित्यर्थः। तत्र हेतुमाह-पूर्वमित्यादि। विशिष्टबुद्धाविति। अयं घट इति विशिष्टबुद्धेर्घटत्वादिविशेषणज्ञानजन्यत्वनियमादित्यर्थः। वैशिष्ट्यानवगाहि-वैशिष्ट्यसांसर्गिकविषयत्वराहित'मिमे घटघटत्वे' इत्याकारकमिति यावत्। तदेव-प्रकारतासंसर्गताविशेष्यताराहितमेव, तच्च-निर्विकल्पकं च, वैशिष्ट्यानवगाहिज्ञानस्य-विशेष्यत्वप्रकारत्वसंसर्गत्वानवगाहिज्ञानस्य, ज्ञानस्य प्रत्यक्षं वैशिष्ट्यानवगाहि न भवतीति वान्वयः। तत्र

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वम् । यः प्रकारः स एव विशेषणमित्युच्यते । विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते । विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम् । निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न संभवति । घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं न संभवति, जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात् ।

महत्त्वमिति । द्रव्यप्रत्यक्षे महत्त्वं समवायसंबन्धेन कारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसंबन्धेन कारणम् । द्रव्यसमवतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेन कारणमिति । इन्द्रियमिति । अत्रापि षड्विध इ-

विवृतिः ।

हेतुमाह–घटमहं जानामीति प्रत्ययादिति । घटाद्यवगाहित्वेनैव ज्ञानप्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थ इत्याहुः । तत्र–घटमहं जानामीति प्रत्यये, प्रकारीभूय–विशेषणीभूय । घट इति । प्रकारीभूय भासत इति पूर्वेणानुषङ्गः एवमुत्तरत्रापि । तत्र–घटे । प्रकारविशेषणयोः पर्यायत्वबोधनायाह–यः प्रकार इति । एवमुक्तप्रत्यये घटविषयकज्ञानमात्मनिष्ठविशेष्यतानिरूपितविशेषणतया जायते एवमन्यदप्यूह्यम् । विशेषणे घटादौ यद् विशेषणं घटत्वादि तदेव विशेषणतावच्छेदकमप्यभिधीयते तेषां घटत्वादीनां यद् विशेषणतावच्छेदकप्रकारकं ज्ञानं तदेव घटमहं जानामीति विशिष्टवैशिष्ट्यावगाहिज्ञाने हेतुतामाप्नोति । घटत्वादीनां प्रकारतारूपेण भानं निर्विकल्पकज्ञाने नास्तीत्यत एव घटत्वादिविशिष्टघटादीनां विशेषणत्वेन भानं तत्र न सम्भवति । घटादिरेव यत्र केवलं प्रकारत्वेन भासते न घटत्वादि तज्ज्ञानं विशिष्टमेव न । जातिर्घटत्वादिकमखण्डोपाधिः प्रतियोगित्वादिकं तद्वर्जमन्यपदार्थज्ञानमवश्यं किञ्चिद्धर्मप्रकारकमेव भवतीति नियमादिति प्रघट्टकार्थः ॥

द्रव्यप्रत्यक्ष इति । यत्र द्रव्ये महत्परिमाणमस्ति तदेव द्रव्यं प्रत्यक्षयोग्यमित्यर्थः । स्वाश्रयसमवायसम्बन्धेनेति । स्वं महत्परिमाणं तदाश्रयो द्रव्यं तत्र समवायेन जात्यादिकमेवं द्रव्यसमवेता गुणा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्यनुषज्यते । इन्द्रियत्वं तु न जातिः पृथिवीत्वादिना सांकर्यप्रसङ्गात् । शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम् । आत्मादिवारणाय सत्यन्तम् । उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वाच्छब्देतरेति । विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति । उद्भूतत्वं न जातिः शुक्लत्वादिना सांकर्यात् । न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम् । उद्भूतरूपवत्त्वादिना चाक्षुषादौ जनकतानुपपत्तेः । किन्तु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं तदभावकूटश्चोद्भूतत्वम् । तच्च संयोगादावप्यस्ति तथा च शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादेरप्यस्त्यतो विशेषेति । कालादिवारणाय विशेष्यदलम् । इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्र-

विवृतिः ।

द्रयस्तत्र समवायेन वर्तमानानां गुणत्वादीनां साक्षात्कारो स्वाश्रयद्रव्ये समवेतगुणादिषु गुणत्वादीनां समवायस्तेन सम्बन्धेन महत्त्वस्य हेतुत्वम् । पृथिवीत्वादिना सांकर्यादिति । पृथिवीत्वं विहायेन्द्रियत्वं चक्षुरादाविन्द्रियत्वं विहाय पृथिवीत्वं घटादावुभयं घ्राण इति साङ्कर्यमध्यवसेयम् । शब्देतरेति । शब्देतरं—रूपसुखादिकं । ज्ञानकारणमनःसंयोगेति । ज्ञानकारणभूतमनःसंयोगेत्यर्थः । आत्मादिवारणायेति । ज्ञानकारणमनःसंयोगाश्रयत्वेनात्मादौ याऽतिव्याप्तिस्तद्वारणायेति बोध्यम् । उद्भूतत्वजातिनिषेधे विनिगमकमाह—पृथिवीत्वादिना सांकर्यादिति । संकरप्रकारश्चेत्थम् । उद्भूतत्वं विहाय शुक्लत्वमनुद्भूतशुक्ले शुक्लत्वं विहायोद्भूतत्वमुद्भूतनीले द्वयमुद्भूतशुक्ले । अत्रोद्भूतत्वं जातिस्तदभावोऽनुद्भूतत्वमिति वदन्तो जरन्नैयायिकाश्चिन्त्याः । प्रत्यक्षयोग्यरूपरसगन्धस्पर्शसंयोगाद्यन्यतमत्वं उद्भूतत्वमवधेयम् । ननु शुक्लत्वादिजातिव्याप्यधर्मस्योद्भूतत्वस्य बहुत्वे क्षतिविरह इत्याशंक्याह—नचेति । नानोद्भूतत्वस्यैकत्र व्यक्तौ वृत्त्यसम्भवेन कारणतानवच्छेदकत्वादिति हेतुत्वमुपेयम् । तदभावकूटः—अनुद्भूतत्वाभावकूटः । अतो विशेषेतीति । संयोगादीनां विशेषगुणत्वाभावान्नाव्याप्तिः । विशेष्यदलं—ज्ञानकारण-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्यक्षजनकत्वादिन्द्रियावयववारणाय-नवीनमते कालादौ रूपाभावप्रत्यक्षे संनिकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेश्च वारणाय मनःपदम् । ज्ञानकारणमित्यपि तद्वारणाय । करणमिति । असाधारणं कारणं करणम् । असाधारणत्वं व्यापारवत्त्वम् ॥ ५८ ॥

विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः ।
द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥ ५९ ॥
द्रव्येषु समवेतानां तथा तत्समवायतः ।
तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥
विशेषणतया तद्वदभावानां ग्रहो भवेत् ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥

व्यापारः-संन्निकर्षः ।

विवृतिः ।

मनःसंयोगाश्रयत्वमित्युपात्तमित्यर्थः । इन्द्रियावयववारणाय-मनःपदमित्युत्तरेणान्वयः । रूपाभावप्रत्यक्षे-काले रूपं नास्तीत्यात्मके । संनिकर्षेति । चक्षुसंयुक्तकालविशेषणतारूपसन्निकर्षघटकत्वेनेत्यर्थः । कारणीभूतेति । रूपाभावरूपज्ञानकारणीभूतेत्यर्थः । तद्वारणाय-कालादिवारणाय । ननु कारणस्य साधारणासाधारणभेदेन द्वैविध्यात्कीदृक्कारणं करणं भवतीत्याह-असाधारणमिति । फलायोग्यव्यवच्छिन्नकार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताशालि, यद्विलंबात्प्रकृतकार्यं नोत्पद्यते तद्वा ॥ ५८ ॥

द्रव्यान्यत्वे सति तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारलक्षणमङ्गीक्रियते परैः प्रकृते तत्र दोषमाशङ्क्य स्वयं तं परिचष्टे व्यापारः संन्निकर्ष इति । द्रव्यप्रत्यक्षमिति । द्रव्यस्य घटादेः लौकिकसाक्षात्कार इत्यर्थः । मूले चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतं षड्विधसंनिकर्षमाह-द्रव्यग्रहस्तु संयोगादिति । द्रव्यग्राहकाणि इन्द्रियाणि चक्षु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



षड्विधं संनिकर्षमुदाहरणद्वारा दर्शयति । द्रव्यग्रह इति । द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम् । द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम् । एवमग्रेऽपि । वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणं । द्रव्यसमवेतसमवेतचाक्षुषम् प्रति चक्षुःसंयुक्तसमवेतसमवायः । एवमन्यत्रापि विशिष्यैव कार्यकारणभावः ।

परन्तु पृथिवीपरमाणुनीले नीलत्वं पृथिवीत्वं च चक्षुषा कथं न गृह्यते—तत्र परंपरयोद्भूतरूपसंबन्धस्य महत्त्वसंबन्धस्य च सत्त्वात् । तथाहि—नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्तते । तथाच महत्त्वसंबन्धो घटनीलमादाय वर्तते । उद्भूतरूपसंबन्धस्तूभयमादायैव वर्तते । एवं पृथिवीपरमाणौ पृथिवीत्वेऽपि घटादिकमादाय महत्त्व-

विवृतिः ।

त्वङ्मनांसि त्रीण्यन्यानि गुणग्राहकाणि । इन्द्रियसंयोगजन्यमिति । चाक्षुषं चक्षुःसंयोगजन्यं त्वाचप्रत्यक्षं तु त्वक्संयोगजन्यमित्येवंरीत्या बोध्यम् । द्रव्यसमवेतप्रत्यक्षं—घटादिद्रव्यसमवेतरूपादिप्रत्यक्षम् । द्रव्यचाक्षुषं प्रतीत्यादि । द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगत्वेन हेतुत्वमुचितमेवमग्रेऽपि बोध्यम् । अन्यत्रापि—त्वाचादिलौकिकप्रत्यक्षेऽपि यथा पूर्वमुक्तसंबंधेन तं प्रति तत्त्वेन हेतुत्वं तथात्रापि तेन संबंधेन त्वाचत्वावच्छिन्नं प्रति त्वक्संयोगत्वेन हेतुत्वमूहनीयम् ।

पृथिवीपरमाणुनील इति । पृथिवीनीलपरमाणुषु नीलत्वं पृथिवीपरमाणुषु पृथिवीत्वमित्यर्थः । परम्परया—स्वाश्रयसमवेतसमवेतत्वादिसम्बन्धेन, स्वेनोद्भूतरूपमहत्त्वे तदाश्रयं त्रसरेण्वादिकं त्रसरेणोर्द्व्यणुके द्व्यणुकस्य परमाणौ समवेतत्वम् । पूर्वोक्तमेव स्पष्टयितुमाह—तथाहीति । वर्तते—परमाणुनील इति शेषः । उभयं—घटनीलं परमाणुनीलं च ॥ तदीयस्पर्शादाविति । तस्य वायोरयं तदीयः "वृद्धाच्छः" त्यदादीनि चेति वृद्धसंज्ञा । उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुष इति ॥

रूपादिचाक्षुषप्रत्यक्षं प्रत्युद्भूतरूपविशिष्टमहत्त्वावच्छिन्नेन सह

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संबन्धो बोध्यः । एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात् । तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे कारणत्वं वाच्यम् । इत्थं च परमाणुनीलादौ न नीलत्वादिग्रहः, परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् । एवं वाय्वादौ न सत्तादिचाक्षुषं तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात । एवं यत्र घटस्य मध्यावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्तु बाह्यावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगविशेषणं देयम् ।

एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणं, द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः, द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम् । अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च पूर्ववदेव बोध्यम् । एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः । गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम् । एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः । रससमवेतरासनप्रत्यक्षे रसना-

### विवृतिः ।

चक्षुःसंयुक्तसमवायस्य कारणत्वं वाच्यमित्यर्थः । तादृशचक्षुसंयुक्तसमवेतसमवायस्य उदभूतरूपविशिष्टमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्य । द्रव्यसमवेतसमवेतेति । घटादिद्रव्यसमवेतरूपादिसमवेतरूपत्वादीत्यर्थः । न नीलत्वादिग्रहः—नीलत्वादिप्रत्यक्षापत्तिर्न, परमाणुषु महत्त्वपरिमाणविरहात्परमाणुनिष्ठस्य चक्षुःसंयोगस्य महत्त्वावच्छिन्नाभावादेवं वाय्वादिनिष्ठचक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावाद्वाय्वादौ सत्तादिचाक्षुषप्रत्यक्षापत्तिर्दुर्लभैव । यत्र—अन्धकारे, बाह्यावच्छेदेन—घटस्य बाह्यदेशे इत्यर्थः । घटप्रत्यक्षाभावादिति । चक्षुःसंयोगस्य प्रतिपादितदिशोद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नत्वेऽपि घटस्याप्रत्यक्षत्वदर्शनादिति निष्कर्षः । विशेषणं देयमिति । यत्रोद्भूतरूपावच्छिन्नमहत्त्वावच्छि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संयुक्तसमवेतसमवायः कारणम् । शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः कारणम् । शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम् । अत्र सर्वं प्रत्यक्षं लौकिकं बोध्यम् । वक्ष्यमाणमलौकिकं प्रत्यक्षमिन्द्रियसंयोगादिकं विनापि भवति । एवमात्मनः प्रत्यक्षे मनः-संयोगः, आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः, आत्मसमवे-तसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम् । अभाव-प्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसंबद्धविशेषणता हेतुः । वैशेषिकमते तु समवायो न प्रत्यक्षः । अत्र यद्यपि विशेषणता नानाविधा । तथाहि— भूतलादौ घटाद्यभावः संयुक्तविशेषणतया गृह्यते, संख्यादौ रूपाद्य-भावः संयुक्तसमवेतसमवेतविशेषणतया, शब्दाभावः केवलश्रोत्राव-

विवृतिः ।

च्छालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगस्यास्ति तत्रैव द्रव्यप्रत्यक्ष-त्वं नान्यत्रेत्यर्थः ।

पूर्ववत्—चाक्षुषप्रत्यक्षवत्, गन्धसमवेतस्य—गन्धत्वादेरेवमग्रे-ऽप्यूहनीयम्, लौकिकमिन्द्रियजन्यम्, इन्द्रियसंयोगादिकं—चक्षुरा-दिसंनिकर्षम । आत्मसमवेतसमवेतमानसप्रत्यक्ष इति । आत्मसमवे-तं सुखादि तत्र समवेतं सुखत्वादि तेषां मानसप्रत्यक्ष इत्यर्थः । इन्द्रि-यसम्बद्धविशेषणताहेतुरिति । चक्षुरादीन्द्रियसम्बद्धभूतलादौ वि-शेषणीभूतघटाद्यभावादीनामिन्द्रियसम्बद्धविशेषणतयोपग्रह इति न्यायमतानुरोधेन, वैशेषिकमते तु सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्य-क्षस्य कारणत्वेन समवायप्रत्यक्षत्वानङ्गीकारः । विशेषणता—अभा-वनिरूपितेन्द्रियविशेषणता । नानाविधेति । इन्द्रियसंयुक्तविशेषण-तादिभेदेनेत्यर्थः । घटाद्यभावः—घटाभावप्रत्यक्षम् । संयुक्तविशेषणतये-ति । द्रव्याधिकरणकाभावप्रत्यक्षस्य संयुक्तविशेषणतासम्बन्धेनोपादे-यत्वात् । चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वादित्यर्थः । संख्यादौ रूपाद्यभाव इति । चक्षुःसंयुक्ते भूतले संख्या समवेता त-त्र रूपाभावो विशेषणं रूपाद्यभावस्य च तादृशसम्बन्धेनोपग्रह एवं संख्यायां संख्यात्वं समवेतं तद्विशेषणता रूपाद्यभावे वर्तते एवं घटा-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



च्छिन्नविशेषणतया, कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया, एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया, एवं घटाभावादौ पटाभावः चक्षुःसंयुक्तसंयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यम्। तथापि विशेषणतात्वरूपेणैकैव सा गण्यते। अन्यथा षोढा संनिकर्ष इति प्राचां प्रवादो व्याहन्येतेति।

यदि स्यादुपलभ्येतेति। अत्राभावप्रत्यक्षे योग्यानुपलब्धिः कारणम्। तथाहि- भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते। तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम्। तत्र योग्यताप्यपेक्षिता। सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा। तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रति-

विवृतिः।

भावादौ चक्षुःसंयुक्ते भूतले घटाभावो विशेषणं तद्विशेषणता पटाद्यभावे, वर्तते सुगममन्यत्। नन्वेवं समवायत्वेनैव संयुक्तसमवायादीनामप्यननुगमो दुष्परिहर इति चेन्न। 'षड्विधः संनिकर्ष' इति शास्त्रकारीयसंकेतस्य संयोगादिभेदेन त्रिविधः संनिकर्ष इत्येव कुतो नोक्तमित्याक्षेपानर्हत्वादित्याहुः। सा—विशेषणता, गण्यते—पञ्चविधसंनिकर्षोपर्येकैव सा योजनीयेत्यर्थस्तेन च न मणिकृदादीनामपि संनिकर्षषड्विधत्वप्रवादस्य व्याघातः॥

घटादिज्ञाने—घटादिभ्रमे, अभावोपलम्भे चक्षुरादीन्द्रियजन्यसंयोगसंबन्धाद्यवच्छिन्नघटाद्यभावसाक्षात्कार इत्यर्थः। प्रतियोगीति। तत्तत्प्रतियोग्युपलंभाभावस्य हेतुत्वमावश्यकम्। तत्र—प्रतियोग्युपलंभाभावे। का सा योग्यतेत्यपेक्षायां मणिकृन्मतानुसारेण तां निर्वक्ति—सा चेति। प्रतियोगिसत्त्वेत्यादि। प्रतियोगिसत्त्वस्य—प्रत्यक्षविषयाभावप्रतियोगिसत्त्वस्य, प्रसंजनेनाहार्यारोपेण प्रसंजितस्तर्कितः प्रतियोगी यस्य स उपलम्भाभावोऽभावप्रत्यक्षे हेतुरित्यर्थः। स्वयमुक्तस्य योग्यतालक्षणस्याल्पमातिकदुरधिगमत्वमालोच्यार्थमाचष्टे—तदर्थश्चेत्यादिना। यत्र—आरोपितविषयस्थले। उपलभ्येतेति। भूतलमिवावश्यमुपलब्धिविषयो भवेदुपलब्ध्यभावान्नास्तीत्येव वक्तुं प्र-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



योगी यस्य सोऽभावप्रत्यक्षे हेतुः । तथाहि-यत्रालोकसंयोगादिकं वर्तते तत्र यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते । तत्र घटाभावादिप्रत्यक्षं भवति । अन्धकारे तु नापादयितुं शक्यते । तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्, स्पार्शनप्रत्यक्षं तु भवत्येव, आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात् । गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षस्तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् । वायौ रूपाभावः-पाषाणे सौरभाभावः-गुडे तिक्ताभावः-श्रोत्रे शब्दाभावः-आत्मनि सुखाभावः-एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात् । संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता । अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षि-

विवृतिः ।

भूयत इति भावः । न चाक्षुषं प्रत्यक्षमिति । अनुपलब्धौ सत्यामपि प्रतियोगिसत्त्वप्रसंजनप्रसंजितप्रतियोगिकत्वरूपयोग्यताविशिष्टानुपलब्धेरन्धकारे विरहादिति निष्कर्षः । आपादयितुं शक्यत्वादिति । यद्यत्र घटः स्यात्तर्हि स्पार्शनप्रत्यक्षविषयोऽपि स्यादिति वक्तुं युक्तत्वादित्यर्थः । गुरुत्वादिकमित्यादिना पिशाचादिसङ्ग्रहः । अयोग्यस्य पिशाचत्वादिजातेरभावस्य प्रत्यक्षत्वाद्गुरुत्वादिकमित्यभ्यधायि । अयोग्यं-प्रत्यक्षायोग्यं, न योग्यो-न प्रत्यक्षविषयः । तत्र गुरुत्वादिप्रत्यक्षस्येति । अयं भावः-यद्यत्र घटे गुरुत्वं स्यात्तर्ह्यवश्यमुपलभ्येतेत्यादितर्कणं सर्वथापि व्याहतम् गुरुत्वादेरयोग्यत्वेन तुलाद्यनुमेयत्वादेवमयोग्ययोर्धर्माधर्मयोरपि सुखादिभोगेनानुमेयत्वमाकलनीयम् । वायौ रूपाभाव इति । यदि वायौ रूपं स्यात्तर्हि चक्षुषोपलभ्येतोपलम्भाभावान्नास्ति महत्त्वविशिष्टोद्भूतरूपसद्भावे प्रत्यक्षावश्यंभावनियमस्य प्रसिद्धत्वात्तत्र स्पार्शने न महत्त्वमस्ति न रूपमिति तदभावप्रत्यक्षत्वमनिवार्य्यमेवमग्रेऽपि बोध्यम् । तत्तदिन्द्रियैः-चक्षुरादीन्द्रियैः, तत्तत्प्रत्यक्षस्य-चाक्षुषघ्राणजरासनस्पार्शनश्रोत्रजमानसप्रत्यक्षस्येत्यर्थः । प्रतियोगिनो योग्यतेति । प्रतियोगिनो घटादेर्योग्यता प्रत्यक्षयोग्यता । अयोग्यप्रतियोगिसंसर्गाभाव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ता। अतः स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव ॥ ५९ ॥ ॥ ६० ॥ ६१ ॥ ६२ ॥

एवं प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम्। तत्र लौकिकप्रत्यक्षे षोढा संनिकर्षो वर्णितः। अलौकिकसंनिकर्षस्त्विदानीमुच्यते—

अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥

व्यापारः—संनिकर्षः। सामान्यलक्षण इति। सामान्यं लक्षणं यस्येत्यर्थः। तत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते। तच्चेन्द्रियसंबद्धविशेष्यकज्ञाने प्रकारीभूतं बोध्यम्—तथाहि। यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति

विवृतिः।

स्य तु न प्रत्यक्षमिति बोध्यम्। अधिकरणयोग्यता—योग्याधिकरणवृत्तिता, अपेक्षिता—आवश्यकी तेन पिशाचे स्तम्भभेदोऽपि न गृह्यते स्तम्भः पिशाचो नेत्यादिप्रत्ययेन स्तम्भादौ पिशाचादिभेदस्तु गृह्यत एव चक्षुषा स्तम्भस्य प्रत्यक्षयोग्यताशालित्वादिति निगूढाशयः ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

अलौकिकसंनिकर्षस्त्विदानीमुच्यत इति। अलौकिकसंनिकर्षज्ञानस्य लौकिकसंनिकर्षज्ञानाधीनत्वादादौ लौकिकसंनिकर्षं निरूप्याधुनाऽलौकिकसंनिकर्षो निरूप्यत इत्यर्थः। ननु व्यापारस्यैव दुष्परिकलनीयत्वात्तद्घटितं त्रैविध्यमपि मूले दुष्परिकलनीयमित्यतस्तं व्याचष्टे—व्यापारः संनिकर्ष इति। सामान्यलक्षणपदं बहुव्रीहिणा स्पष्टयति—सामान्यमिति। लक्षणपदस्य स्वरूपविषयभेदेनार्थद्वयमभिप्रेत्याह—तत्र लक्षणपदेनेति। तत्र—सामान्यं लक्षणं यस्येति व्युत्पत्तौ, सामान्यत्वं च लौकिकान्यमुख्याविशेष्यतानिरूपितप्रकारतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति प्रकारतासंबन्धेन चाक्षुषत्वेन रूपेण कारणत्वम् ॥

तच्च—सामान्यस्वरूपं च। तथाहीति। भवति च धूमत्वादिरि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ज्ञानं यत्र जातं तत्र ज्ञाने धूमत्वं प्रकारः। तत्र धूमत्वेन संनिकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते। अत्र यदीन्द्रियसंबद्धमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात् तत्र धूमत्वेन सहेन्द्रियसंवन्धाभावात्। मन्मते तु इन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानम्, तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः। इन्द्रियसंबन्धश्च लौकिको ग्राह्यः। इदं च बहिरिन्द्रियस्थले। मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यमात्रं प्रत्यासत्तिः॥६३॥

परंतु समानानां भावः सामान्यम्। तच्च क्वचिन्नित्यं धूमत्वादि, क्वचिच्चानित्यं घटादि। यत्रैको घटः संयोगेन भूतले समवायेन कपाले

विवृतिः।

न्द्रियसंबद्धविशेष्यकेऽयं धूम इति लौकिकप्रत्यक्षज्ञाने प्रकारो धूमादिनिष्ठविशेष्यतानिरूपितप्रकारता धूमत्वादिनिष्ठेत्यर्थस्तदनन्तरं धूमत्वेन संनिकर्षेण 'सर्वे धूमा' इत्यलौकिकप्रत्यक्षज्ञानमुत्पद्यते तच्च स्वजन्यज्ञानप्रकारीभूतधूमवत्त्वसंबन्धेन सकलधूमाविषयकमेव। अत्र यदीति। इन्द्रियसंबद्धं सामान्यं प्रत्यासत्तिरित्युच्यते तदेत्यर्थः। धूलीपटले-रेणुसमूहे। ज्ञानं न स्यादिति। प्रकारतासंबन्धेनात्र धूलीपटलत्वस्येन्द्रियसंबद्धत्वान्न धूमत्वस्येति भावः। तत्र-धूलीपटले धूमत्वभ्रमस्थले। स्वमते पूर्वोक्तदोषाभावमुपपादयति मन्मते त्विति। तुनोक्तपक्षेऽरुचिर्ध्वनिता तद्बीजं तूक्तम्। इन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतसामान्यं प्रत्यासत्तिरेतस्मिन्मत इत्यर्थः। इन्द्रियसंबद्धधूलीपटलविशेष्यकधूमत्वप्रकारके धूम इति ज्ञाने प्रकारत्वेन भासमानस्य धूमत्वस्य सामान्यलक्षणप्रत्यासत्तित्वमविवादसिद्धम्। इदं च-इन्द्रियसंम्बद्धविशेष्यकज्ञानप्रकारीभूतज्ञानसामान्यस्य प्रत्यासत्तित्वाभिधानं च। सामान्यं प्रत्यासत्तिरिति। इतरथा परमाणुत्वेन यत्किञ्चित्परमाणूपस्थितौ परमाणुत्वसामान्यलक्षणया सकलपरमाणूल्लेखिनी मानसप्रतीतिर्न स्यात्परमाणुमनसोः सम्बन्धाभावात्। अतः शब्दादिना यत्किंचित्पिशाचाद्युपस्थितौ मानसः सकलपिशाचादिबोधोऽप्युपपद्यते॥ ६३॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ज्ञातस्तदनन्तरं सर्वेषामेव तद्धटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति। तत्रेदं बोध्यम्। परन्तु सामान्यं येन संबन्धेन ज्ञायते तेन संबन्धेनाधिकरणानां प्रत्यासत्तिः। किन्तु यत्र तद्धटनाशानन्तरं तद्धटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्धटवतां भानं न स्यात्। सामान्यस्य तदानीमभावात्। किञ्चेन्द्रियसंबद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसंबन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात्तादृशज्ञानं कुतो न जायते, तस्मात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याह—

आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते।

आसत्तिः प्रत्यासत्तिरित्यर्थः। तथाच सामान्यलक्षण इत्यत्र लक्षणशब्दस्य विषयोऽर्थः। तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते।

विवृतिः।

ज्ञानं भवतीति। घटवत्तया इति शेषः। भूतलादीनां संयोगेन कपालदीनां समवायेनेति विशेषोऽवगन्तव्यः। ज्ञायते स्वाधिकरणे इति शेषः। तेन सम्बन्धेनेति। अन्यथा समवायसम्बन्धेन ज्ञानप्रकारीभूतघटत्वादिसामान्यप्रत्यासत्त्या कालादिज्ञानापत्तिरलौकिकप्रत्यासत्त्या स्यादित्याहुः। प्रत्यासत्तिरलौकिकप्रत्यासत्तिः। तद्घटनाशेति। विशेषणतया दृष्टघटनाशेत्यर्थः। स्मरणम्—तद्भूतलं घटवदासीदित्याकारकम्। तद्घटवतामधिकरणानां भानं बोधः। तत्र हेतुमाह—सामान्यस्येति। सामान्यत्वेन भासमानघटस्येत्यर्थः। तादृशज्ञानप्रकारीभूतसामान्यस्य-घट इत्यात्मकज्ञानप्रकारीभूतघटत्वसामान्यस्य, तादृशज्ञानं-'सर्वे घटा घटत्ववन्तः' इत्याकारकं ज्ञानम्। सामान्यज्ञानस्य प्रत्यासत्तित्वकथनाय भूमिकां रचयति—तथाचेति। सामान्यविषयकं ज्ञानमिति। इन्द्रियसंबद्धविशेष्यकं सामान्यप्रकारकं ज्ञानमित्यर्थः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह—

तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥

अस्यार्थः । यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किंचिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानस्य सामग्री अपेक्षिता । सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकम् । तेनान्धकारादौ चक्षुरादिना तादृशं ज्ञानं न जायते ॥ ६३ ॥ ६४ ॥

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह—

विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।

सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति । ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति । अत्रायमर्थः । प्रत्यक्षे संनिकर्षं विना भानं न संभवति । तथा च सामान्य-

विवृतिः ।

सामान्यज्ञानं–घटत्वादिसामान्यविषयकं ज्ञानम् । चाक्षुषप्रत्यक्षं स्यादिति । प्रत्यक्षकारणीभूतसामान्यज्ञानप्रत्यासत्तिरूपसामग्र्यास्तत्र विद्यमानत्वात् । बहिरिन्द्रियेण–चक्षुरादिना, यत्किंचिद्धर्मिणि–घटादौ, तत्सामान्यस्य–घटत्वादेः । तदिन्द्रियजन्यज्ञानेति । चक्षुरादीन्द्रियजन्यज्ञानेत्यर्थः ॥ तेन–ज्ञानं प्रतिचक्षुःसंयोगादिरूपसामग्र्या हेतुत्वकथनेन ॥ ६३ ॥ ६४ ॥

मूले विषयी यस्येत्यादि । यस्य सौरभादेर्विषयी ज्ञानं तस्यैव सौरभादेर्व्यापारो ज्ञानलक्षणा प्रत्यासत्तिरित्यर्थः । सामान्यलक्षणाज्ञानलक्षणाप्रत्यासत्त्योर्भेदमाह—सामान्यलक्षणाप्रत्यासत्तिर्हीत्यादिना । तदाश्रयस्य–सामान्याश्रयस्य, इन्द्रियाणामसन्निकृष्टानां प्रत्यक्षाजनकत्वात् । यद्विषयकं—सौरभादिविषयकं ज्ञानं, जनयतीत्यनुषङ्गः । तस्यैव–नतु देशान्तरकालान्तरवर्तिनोऽपि सौरभादेः, एवमुभयोः साम्येऽपि विभिन्नफलजनकतया भेदः । अयमर्थः–अयमभि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



लक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत्तदर्थं सामान्यलक्षणा स्वीक्रियते। न च सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यम्। प्रत्यक्षधूमे वह्निसंबन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद्धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः। मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयधूमे वह्निव्याप्यत्वसंदेहः संभवति। न च सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञ्यापत्तिरिति वाच्यम्। प्रमेयत्वेन सकलप्रमेयज्ञाने जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात्। एवं ज्ञानलक्षणाया अस्वीकारे सुरभि चन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात्। यद्यपि सामान्यलक्षणयापि सौरभभानं संभवति तथापि सौरभत्वस्य भानं ज्ञानलक्षणया। एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं

विवृतिः।

प्रायः, भानं–विषयता। न संभवतीति। प्रत्यक्षविषयतायाः संनिकर्षाश्रयत्वव्याप्यत्वादिति भावः। तदर्थं–धूमत्वेन सकलधूमानां वन्हित्वेन सकलवह्नीनां भानार्थम्। प्रत्यक्षधूमे–महानसादौ साक्षात्कृतधूमे, संबंधस्य गृहीतत्वात्सहवृत्तित्वरूपसंबंधस्य चक्षुरादिना गृहीतत्वादित्यर्थः। अन्यधूमस्य–देशान्तरीयादिधूमस्य। वन्हिव्याप्यो नवेति। वन्हिनिरूपितव्याप्त्याश्रयोऽस्ति धूमो नास्ति वेत्यर्थः॥

वन्हिव्याप्यत्व संदेह इति। वन्हिनिष्ठव्यापकतानिरूपितव्याप्यता धूमनिष्ठास्ति नवेति संदेह इत्यर्थः। सार्वज्ञ्यापत्तिरिति। पुरुषस्येति शेषः। न चेष्टापत्तिः 'यः सर्वज्ञः सर्वविदि'त्यादावीश्वरस्यैव सर्वज्ञत्वश्रुतेः। 'यदल्पं तन्मर्त्य'मित्यादौ पुरुषस्याल्पज्ञत्वश्रुतेश्चेति दिक्। विशिष्य–विशेषरूपेण,–सकलपदार्थानामज्ञातत्वेनेति। देशकालान्तरव्यवधानादिति भावः। सौरभस्य भानं कथं स्यादिति। सौरभांशे चक्षुरिन्द्रियव्यापाराभावादित्यर्थः। सौरभत्वस्य भानं–स्वरूपतः सौरभत्वस्य ज्ञानम्। ज्ञानलक्षणयेति। ज्ञानलक्षणयैवेत्यर्थो बोध्यः 'क्वचिदेव शब्दं विनापि तदर्थप्रतीतिर्भवतीति' वृद्धोक्तेः। तदानीं सौरभत्वांशे धर्मान्तरस्यागृहीततया सामान्यलक्षणया तद्भा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया ।

योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥

योगभ्याससजनितो धर्मविशेषः श्रुतिस्मृतिपुराणादिप्रतिपाद्य इत्यर्थः । युक्तयुञ्जानभेदत इति । युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापि द्वैविध्यमिति भावः ॥ ६५ ॥

युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ।

युक्तेति । युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति । द्वितीयस्य चिन्ताविशे-

विवृतिः ।

नानिर्वाहादित्याहुः । धूमत्वेन धूलीपटलं ज्ञातमिति । धूलीपटलस्यापि धूमत्वेन ज्ञानं जातमित्यर्थः । अनुव्यवसाय इति । ज्ञानविषयकं ज्ञानमनुव्यवसायो भवत्येवं च धूममहं जानामीत्याकारकानुव्यवसाय एवार्थः ।

ननु योगजस्यैव दुर्निरूप्यत्वात्तद्घटितं द्वैविध्यमपि दुर्निरूपमित्यतस्तमाह—योगभ्याससजनितो धर्मविशेष इति । यदाह भगवान् पतञ्जलिः—'योगश्चित्तवृत्तिनिरोध' इति । ननु तादृशधर्मविशेषस्य प्रमाणान्तरसंवादं विना प्रमाणव्यवहारगोचरत्वानङ्गीकार इत्यत आह—श्रुतिस्मृतीति । श्रुतिर्वेदः, स्मृतिर्धर्मशास्त्रं, तथाचाम्नातम्—'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृति'रिति । श्रुतिस्मृतिपुराणादिप्रमाणादवसीयते इत्यर्थः । तत्प्रामाण्येन सर्वजनसंवेदनीयत्वमविवादसिद्धम् । युक्तयुञ्जानेति । समाहितान्तःकरणो युक्तः । असमाहिन्तान्तःकरणो युञ्जानश्चरमो वियुक्त इत्यप्यभिधीयते । केचित्तु युंजानं युक्तं कथयन्ति युक्तं च वियुक्तमिति ध्येयम् ।

युक्तयुञ्जानयोर्विशिष्य व्याख्यानाय मूलमवतारयति—युक्तेतीति । अयं भावः । युक्तस्य योगिनो योगजधर्मानुगृहीतेन मनसा चिन्तासन्तानसहकारमन्तरेणापि जिज्ञासितवस्तुसाक्षात्कारो जायते । द्वितीयस्य—युञ्जानस्य योगिनः । चिन्ताविशेषोऽपि सहकारीति । चि-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



योऽपि सहकारीति ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यां प्रत्यक्षखण्डम् ।



विवृतिः ।

न्ताविशेषो-ध्यानविशेषः । तत्सहकारादेवायं योगजधर्मबलोपबृंहितशक्तिः स्थूलसूक्ष्माव्यवहितविप्रकृष्टानर्थान् ज्ञातुं प्रभवति । योगिसद्भावे तु परमाण्वादिर्जन्यप्रत्यक्षविषयोऽभिधेयत्वाद् घटवदित्यनुमानं मानमिति शिवम् ॥

इति कविरत्न पं० छज्जुरामशास्त्रिविद्यासागरप्रणीतायां
मुक्तावलीविवृतौ मूलचन्द्रिकायां
प्रत्यक्षखण्डम् ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अनुमितिं व्युत्पादयति—

व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥
अनुमायां ज्ञायमानं लिङ्गं तु करणं नहि ।

व्यापारस्त्विति । अनुमायामनुमितौ व्याप्तिज्ञानं करणम् । परामर्शो व्यापारः । तथाहि—येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात्स एव पुरुषः क्वचित्पर्वतादावविच्छिन्नमूलां धूमरेखां पश्यति, तदनन्तरं धूमो वह्निव्याप्य इत्येवं रूपं व्याप्तिस्मरणं तस्य भवति, पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते,

विवृतिः ।

सृष्टिस्थितिप्रलयकृत् रजःसत्त्वतमोगुणैः ।
सच्चिदानन्दमधुना ब्रह्म यत्तत ॐ नमः ॥

प्रत्यक्षं निरूप्य हेतुहेतुमद्भावसङ्गत्याऽनुमितिनिरूपणमारभते-अनुमितिमिति । कारिकार्थं स्फुटयितुमाह—अनुमायामनुमिताविति । अनुमित्यात्मकं ज्ञानं प्रति व्याप्तिज्ञानत्वेन करणत्वमित्यर्थः । एतेन मनोऽपि न करणमिति ज्ञापितं तस्य मानसप्रत्यक्षं प्रत्येव करणत्वात् । महानसादावित्यादिना चत्वरगोष्ठादेरुपसङ्ग्रहः । 'पाकस्थानं महानस'मित्यमरः । धूमे वह्निव्याप्तिरिति । यत्र धूमस्तत्र वह्निरिति साहचर्यनियमरूपा व्याप्तिरित्यर्थः । अविच्छिन्नमूलां—धूमेनाव्यभिचारितां, तदनन्तरं—धूमदर्शनानन्तरं, वह्निव्याप्यः—वह्निनिरूपितव्याप्त्याश्रयः । एवंरूपं व्याप्तिस्मरणमिति । उद्बुद्धसंस्कारस्य प्राग् विद्यमानत्वादिति भावः । पश्चाच्चेति । धूमो वह्निव्याप्य इति व्याप्तिस्मरणानन्तरं चेत्यर्थः । वह्निव्याप्यधूमवानयमिति ज्ञानमिति । वह्निव्याप्येत्येकपदं तस्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमत्वावच्छिन्नप्रकारत्वमर्थ इति शब्दस्तात्पर्यग्राहकस्तस्य च निरूपकतासम्बन्धेन ज्ञानेऽन्वयः । स एव परामर्श इति । परामर्शत्वं ह्यनुमितिकारणतावच्छेदकतया सिध्यति । तदनन्तरं-लिङ्गपरामर्शानन्तरम् । अनुमितिपरामर्शयोर्विशिष्यकार्यकारणभावस्तु

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तदनन्तरं पर्वतो वह्निमानितिज्ञानम् तदेवानुमितिः । अत्र प्राचीनास्तु-व्याप्यत्वेन ज्ञायमानं लिङ्गमनुमितिकरणमिति—वदन्ति । तद्दूषयति ज्ञायमानमिति ।

लिङ्गस्यानुमित्यकरणत्वे युक्तिमाह—

अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥

अनागतादीति । यद्यनुमितौ लिङ्गं करणं स्यात्तदाऽनागतेन विनष्टेन वा लिङ्गेन चानुमितिर्न स्यादनुमितिकरणस्य लिङ्गस्य तदानीमभावात् ॥ ६६ ॥ ६७ ॥

व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।

व्याप्यस्येति । व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञान-

विवृतिः ।

बोधिन्यां बोध्यः । पर्वतो वह्निमानिति प्रयोगे पर्वत उद्देश्यं वह्निमत्त्वं विधेयमत एव पर्वतो वह्निमानित्येवाभिधीयते न तु विपर्यासेन 'न च क्वापि विधेयोक्तिरुद्देश्यात्पूर्वमिष्यते' इति व्यक्तिविवेककारोक्तेः । तदेवानुमितिरिति । चक्षुःसंनिकृष्टयोर्धूमपर्वतयोः प्रत्यक्षेण ज्ञातत्वात् वह्नेश्च व्याप्तिज्ञानेन ज्ञातत्वात्पक्षधर्मताज्ञानेन, 'वह्निव्याप्यधूमवानयमिति ज्ञायते ततस्तत्कार्यभूतं 'पर्वतो वह्निमानि'त्याकारकं ज्ञानं जायते तदनुमितिरेवेति भावः । ज्ञायमानं लिङ्गमनुमितिकरणमिति । अयमर्थः—व्याप्तिबलेन लीनमप्रत्यक्षमर्थं गमयतीति लिङ्गं तच्च दृष्टमनुमितं श्रुतं वा तदेवानुमितिकरणमपि न परामर्शस्तस्य निर्व्यापारत्वेन करणत्वासम्भवात् । तदुक्तमाकरे—

अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते ।
तदभावे तु नास्त्येव तल्लिङ्गमनुमापकम् ॥ इति ॥

तद्दूषयतीति । तत्प्राचीनोक्तं दूषयति निराकरोतीत्यर्थः । लिङ्गाभावेऽप्यनुमितिदर्शनं दुष्टिबीजम् । अनागतेन—भाविना । तत्र हेतुमाह—अनुमितिकरणस्येत्यादिना । अनुमितिकारणीभूतहेतोर्लिङ्गस्यानागतादिलिङ्गदशायामभावादित्यर्थः ॥ ६६ ॥ ६७ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मनुमितिजनकम् । तच्च व्याप्यः पक्षे इति ज्ञानं–पक्षो व्याप्यवानिति ज्ञानं वा । अनुमितिस्तु पक्षे व्याप्य इति ज्ञानात्पक्षे साध्यमित्याकारिका, पक्षो व्याप्यवानिति ज्ञानात्पक्षः साध्यवानित्याकारिका । द्विविधादपि परामर्शात्पक्षः साध्यवानित्येवानुमितिरित्यन्ये ।

ननु वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं विनापि यत्र पर्वतो धूमवानिति प्रत्यक्षं ततो धूमो वह्निव्याप्य इति स्मरणम्, तत्र ज्ञानद्वयादेवानुमितिदर्शनाद्व्याप्तिविशिष्टवैशिष्ट्यावगाहि ज्ञानं न सर्वत्र कारणं किन्तु

विवृतिः ।

व्याप्तिविशिष्टस्य–साध्यनिरूपितव्याप्तिविशिष्टस्य हेतोः । अनुमितिजनकमिति । स एव परामर्शः कथ्यते । तच्च–व्याप्यस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानं च,व्याप्त्यवच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालीति यावत्, भवति हि वह्निव्याप्यधूमः पर्वते वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं व्याप्त्यवच्छिन्नधूमादिनिष्ठविषयतानिरूपितपर्वतत्वाद्यवच्छिन्नविषयताशालीति लक्षणसमन्वयः ।पक्षे व्याप्य इति पक्षप्रकारकं हेतुविशेष्यकं ज्ञानं पक्षो व्याप्यवानिति हेतुप्रकारकं पक्षविशेष्यकं ज्ञानमित्थं च विशेषणविशेष्यभावव्यत्यासेन तस्यैव द्विरूपतेति बोध्यम् । ननु यत्र पक्षे व्याप्य इति ज्ञानादनुमितिर्जायते तत्र परज्ञानासत्त्वं यत्र पक्षो व्याप्यवानिति ज्ञानादनुमितिस्तत्र प्रथमज्ञानासत्त्वमिति ज्ञानद्वयमन्योन्यं व्यभिचरतीत्याशङ्क्याह–अनुमितिस्त्विति । पक्षे साध्यं पक्षप्रकारकं साध्यविशेष्यकमेवं पक्षे साध्यवानित्यत्र साध्यप्रकारकं पक्षविशेष्यकं ज्ञानं भवतीति ॥ उक्त एवार्थे केषांचिद् विप्रतिपत्तिं दर्शयति–द्विविधादपीति । पक्षविशेष्यकव्याप्यविशेष्यकोभयपरामर्शादपीत्यर्थः ॥

नन्विति । मीमांसकोट्टङ्कनम् । ज्ञानां विनापीत्यनुमितेर्दर्शनादित्यत्रान्वेति । ततः–प्रत्यक्षानन्तरं । वह्निव्याप्य इति । वह्निनिरूपितव्याप्त्याश्रय इत्यर्थः । ज्ञानद्वयादेवेति । ज्ञानद्वयादेवेत्यस्य ज्ञानद्वयादपीति व्याख्यानं कर्तव्यमन्यथा क्वचिद् ज्ञानद्वयमन्तरेणापि मीमांसकैरनुमितेरङ्गीकारादेवकारासङ्गतेर्दुष्परिहरत्वात् । तच्च व्याप्तिस्मृतिपक्षधर्मतात्मकम् । न सर्वत्र कारणमिति । अनुमितित्वा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेनैव कारणत्वस्यावश्यकत्वात्, तत्र विशिष्टवैशिष्ट्यज्ञानकल्पने गौरवाच्चेति चेन्न। व्याप्यतावच्छेदकाज्ञानेऽपि वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्तेर्लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम्। किञ्च धूमवान्पर्वत इति ज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्मताज्ञानस्य सत्त्वात्। न च तदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यम्। चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः स्यात्। यदि तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदक-

विवृतिः।

वच्छिन्नं प्रति कारणतावच्छेदकमित्यर्थः। व्याप्यतावच्छेदकेति। व्याप्यतावच्छेदकधूमत्वप्रकारकं यत्पर्वतो धूमवानिति पक्षधर्मताज्ञानं तादृशज्ञानत्वेन हेतुतावश्यं वक्तव्येत्यर्थः। विशिष्टज्ञानकल्पन इति। विशिष्टज्ञानं तु–वह्निव्याप्यधूमवानयं पर्वत इति। गौरवादिति। गौरवं चात्रोपस्थितिकृतमवधेयम्। व्याप्यतावच्छेदकाज्ञानेऽपि–अयमालोको धूमो वा–इत्याकारकसन्देहस्थले व्याप्यतावच्छेदकप्रकारकनिर्णयाभावेऽपीत्यर्थः। लाघवाच्चेति। व्याप्यतावच्छेदकप्रकारकत्वमपेक्ष्य व्याप्तिप्रकारकज्ञानत्वेन कारणत्वेऽवच्छेदकलाघवादित्यर्थः। नैय्यायिको मीमांसकमते पूर्वोक्तज्ञानद्वयाद्यस्वीकाररूपपरमलाघवं दृष्ट्वा स्वीये कारणतावच्छेदकलाघवेऽरुचिं प्रकटयन्नूते–किञ्चेति। अथ चेत्यर्थः। 'किमथ व्यपदेशो स्या'दित्यजयः। धूमवान्पर्वत इतिज्ञानात्–व्याप्त्यनवगाहि "धूमवान्पर्वतः" इत्याकारकज्ञानात्, अनुमित्यापत्तिरिति। तव मते दुर्वारैव स्यादनुमितेरेवापत्तिरित्यर्थः।

न चेत्यनेन वाच्यमित्यन्तमुट्टंकितं समाधेयम्। गृह्यमाणव्याप्यतावच्छेदकपक्षधर्मताज्ञानस्येति। गृह्यमाणं–चक्षुरादिना ग्रहविषयं, यद् व्याप्यतावच्छेदकं तत्प्रकारकपक्षधर्मताज्ञानस्येत्यर्थः। व्याप्तिग्रहे–महानसादाविति शेषः। पक्षधर्मताज्ञानात्–पर्वतो धूमवानित्येवंरूपात्। अनुमितिः–पर्वतो वह्निमानित्यनुमितिः। यदि तत्पुरुषीयेति। यस्य व्याप्तिज्ञानं व्याप्यतावच्छेदकप्रकारकपक्षधर्मता-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रकारकं तत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्युच्यते, तदाऽनन्तकार्यकारणभावः। मन्मते तु समवायसंबन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसंबन्धेनानुमितिं जनयतीति नानन्तकार्यकारणभावः। यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानं च स्वतन्त्रं कारणमित्युच्यते, तदा कार्यकारणभावद्वयम्, वह्निव्याप्यो धूम आलोकवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तिः स्यात्। इत्थं च यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयं फलमुखगौरवस्यादोषत्वात्।

व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ॥६८॥

व्याप्यो नाम व्याप्त्याश्रयः, तत्र का व्याप्तिरित्यत आह व्याप्ति-

विवृतिः।

ज्ञानं चासीत्तदुभयस्य तस्यानुमितिज्ञानं प्रत्येव कारणत्वमभिधीयत इत्यर्थः। तदाऽनन्तकार्यकारणभाव इति। कार्यकारणभावानन्त्यं हि चैत्रादिपुरुषाणामानन्त्यादधिकमन्यत्र। नैयायिकः स्वमते उक्तदोषाभावमुपपादयति–मन्मते त्विति। नानन्तकार्यकारणभाव इति। तत्तत्पुरुषीयत्वप्रवेशस्यानङ्गीकारादिति हृदयम्। व्याप्तिप्रकारकं-'धूमो वह्निव्याप्य' इत्यात्मकं, पक्षधर्मताज्ञानं–'धूमवान्पर्वत' इत्यात्मकं चेत्यर्थः। स्वतन्त्रमिति। समवायसम्बन्धेनानुमितिजनन इति शेषः। अनुमित्यापत्तिः स्यादिति। पूर्वोक्तज्ञानद्वयहेतुत्वस्य विद्यमानत्वात्। ननु ज्ञानद्वयस्थले विशिष्टज्ञानकल्पे कल्पनागौरवं न्यायमते दोषायेत्यतो ब्रूते—इत्थं चेति। यत्र–स्थले, विशिष्टज्ञानं–परामर्शात्मकविशिष्टज्ञानम्, फलमुखगौरवस्येति। फलं–कार्यकारणभावग्रहः, तन्मुखं–तदधीनं, 'मुखमुपाये प्रारम्भे ज्येष्ठेऽधीने तथैव चे'त्यभिधानात्। गौरवं–गौरवज्ञानमित्यर्थः।

नासंगतं प्रयुंजीतेत्यभियुक्तवचनादुपोद्घातसंगत्या व्याप्तिस्वरूपनिरूपणायाह व्याप्यो नामेति। प्रकृतसिद्ध्यनुकूलाचिन्ताविषयत्वमुपोद्घातः, प्रकृतं चात्र व्याप्तिलक्षणम्। तत्र व्याप्तिः केति। वाक्यार्थबुद्धौ पदार्थज्ञानस्य हेतुत्वाद् व्याप्यघटकीभूता व्याप्तिरेव प्रथमं कः पदार्थ इति प्रश्नकर्तुराकूतम्। तत्त्वमिति–उत्कृष्टाधद्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रिति । साध्यवदन्येति । वह्निमान् धूमादित्यादौ साध्यो वह्निः साध्यवान्महानसादिः तदन्यो जलह्रदादिः तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिंस्तप्तायःपिण्डादौ वह्नेः सत्त्वान्नातिव्याप्तिः । अत्र येन संबन्धेन साध्यं तेनैव संबन्धेन साध्यवान्बोध्यः । अन्यथा समवायसंबन्धेन वह्निमान्वह्नेरवयवस्तदन्यो महानसादिस्तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् । साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान्बोध्यः । तेन यत्किंचिद्वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः । येन संबन्धेन

विवृतिः ।

त्तित्वम् । लक्षणसमन्वयः व्याप्तिलक्षणसंगतिरित्यर्थः । धूमवानिति । महानसादिरिति शेषः । साध्यवदन्यस्मिन्निति । अत्र साध्यो धूमस्तद्वान्महानसादिस्तद्भिन्न इत्यर्थः । नातिव्याप्तिरुक्तलक्षणस्येति शेषः । अत्र–प्रकृतलक्षणे । तेन सम्बन्धेन साध्यवान्बोध्य इति । एवं च साध्यतावच्छेदकसम्बन्धेन साध्यवद्भिन्नावृत्तित्वमर्थः । विपक्षे दोषमुपन्यस्यति अन्यथेति । साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वस्य प्रवेशानङ्गीकारे इत्यर्थः । वह्निमान्धूमादित्यत्र दोष एवमग्रेऽपि । वह्नेरवयव इति । अवयवावयविनोः समवायादवयवेष्ववयविनो वृत्तेर्निष्प्रत्यूहत्वादिति भावः । अव्याप्तिप्रसङ्गादिति । साध्यसाध्यवतोरेकसंयोगविवक्षणे तु नोक्तदोषावसर इति ध्येयम् । साध्यवदन्य इति । यावत्साध्यवदतिरिक्तो जलह्रदादिः । साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवानिति । यावत्साध्यवद्वृत्तिसाध्यवत्त्वरूपधर्मावच्छिन्नप्रतियोगिताकभेदवानित्यर्थः । तद्विवक्षणे तु तदन्यजलह्रदादौ धूमस्यावृत्तितया नास्ति दोषः । यत्किंचिद्वह्निमतो–महानसीयवन्हिमतः । साध्यवदन्यावृत्तित्वमिति । तच्च हेतुतावच्छेदकसम्बन्धावच्छिन्नमेवाङ्गीकार्यम् । हेतुतावच्छेदकसम्बन्धश्चात्र संयोगस्तेन सम्बन्धेन धूमस्य स्वावयवे जलह्रदादौ चावृत्तिरित्यदोषः । तेन-भेदाधिकरणत्वावच्छिन्नानधिकरणग्रहणेन, एवं च साध्यवद्भेदाधिकरणजलह्रदवत्तप्तलोहपिण्डे तद्वृत्तेरपि न दोषः । साध्यवदन्यजलेति । साध्यो धूमस्तद्वान्पर्वतादिस्तदन्यजलह्रदादावृत्तावपि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



हेतुता तेनैव संबन्धेन साध्यवदन्यावृत्तित्वं बोध्यम् । तेन साध्यवदन्यस्मिन्धूमावयवे धूमस्य समवायसंबन्धेन सत्त्वेऽपि न क्षतिः । साध्यवदन्यावृत्तित्वं च साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः, तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः । अत्र यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात्साध्यवदन्यस्मिन्गुणादाववृत्तित्वं नास्ति, तथापि हेतुतावच्छेदकरूपेणावृत्तित्वं वाच्यम् । हेतुतावच्छेदकं तादृशवृत्तितानवच्छेदकमिति फलितोऽर्थः ॥ ६८ ॥

ननु केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याप्रसिद्धत्वादव्याप्तिः । किंच सत्तावान् जातेरित्यादौ साध्यवदन्यस्मिन्सामान्या-

विवृतिः ।

वह्नेरित्यनुषङ्गः । अत्र-साध्यवद्भेदाधिकरणस्थले । द्रव्यमिति । द्रव्यत्ववदिति शेषः । ऐक्यादिति । विशिष्टं शुद्धान्नातिरिच्यत इत्युक्तयुक्तेः गुणकर्मभेदविशिष्टद्रव्यवृत्तिसत्ताया द्रव्यगुणकर्मवृत्तिशुद्धसत्तायाश्च परस्परमभेदप्रतीतेः सर्वसिद्धत्वादिति भावः । साध्यवदन्यस्मिन्निति । साध्यं द्रव्यत्ववत्त्वं साध्यवद्द्रव्यं तद्भिन्न इत्यर्थः । अवृत्तित्वं नास्तीति । विशिष्टाधेयताया अनतिरिक्तत्वादित्याहुः । एवं चाव्याप्तिः । हेतुतावच्छेदकरूपेण-गुणकर्मान्यत्वविशिष्टसत्तात्वेन । अवृत्तित्वमिति । विशिष्टसत्ताया द्रव्यमात्रेऽवस्थानात् । वृत्तितानवच्छेदकमिति । वृत्तिता गुणकर्मादिवृत्तिता तदवच्छेदकत्वं गुणत्वत्वादेरनवच्छेदकत्वं च विशिष्टसत्तायाः । एवं च साध्यवदन्यवृत्तितानवच्छेदकहेतुतावच्छेदकं व्याप्तिलक्षणं पर्यवस्यतीति तत्त्वम् ॥ ६८ ॥

मूले प्रथमलक्षणेऽथवेत्यनेन सूचितामरुचिं प्रकटयति नन्विति । साध्यवदन्यस्य-भेदाधिकरणस्य । अप्रसिद्धत्वादिति । ईश्वरेच्छाज्ञानविषयीभूतस्य पदार्थमात्रस्य वाच्यत्वेन ज्ञेयत्वेन वा साध्यत्वे साध्यवद्भिन्नस्याप्रसिद्धेरुक्तव्याप्तिलक्षणस्याव्याप्तिरिति निष्कृष्टोऽर्थः । किंचेत्यरुचौ तद्बीजमन्यत्रोक्तमित्यलमनेन । सत्तावानिति । सत्ता



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection:

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दौ हेतुतावच्छेदकसंबन्धेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्तिरत आह—

अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥

अथवेति । हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहोऽभावः, तथा च हेत्वधिकरणवृत्तिर्योऽभावः तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते । अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वं तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः । न

विवृतिः ।

चात्मधारणानुकूलव्यापारस्तद्वान् । साध्यवदन्यस्मिन्निति । साध्यवद्द्रव्यं गुणः कर्म वा । सामान्यादौ-सामान्यविशेषादौ, वृत्तेः—स्थितेः । आहेति । व्याप्तेर्लक्षणान्तरमिति शेषः । मूलोक्तं द्वितीयलक्षणं विशदयति—हेतुमतीति । पक्ष इत्यर्थः । उक्तमेवार्थं प्रकारान्तरेणाह तथा चेति । तदप्रतियोगिनेति । तदभावस्तत्प्रतियोगिनो घटादयस्तदप्रतियोगिनी च सत्ता । हेतोर्जातिरूपस्य । सामानाधिकरण्यमिति । तच्च साध्यतावच्छेदकसंबंधेन साध्याधिकरणे हेतुतावच्छेदकसंबन्धेन वृत्तित्वम् । पर्वतादीति । आदिना महानसचत्वरादिपरिग्रहः । तत्तद्वन्ह्यादेरिति । पर्वते महानसीयस्य तत्र चत्वरीयस्य तत्र गोष्ठीयस्य वह्नेरेवमन्यदप्यूह्यम् । अव्याप्तिरिति । चालनीन्यायेनेति शेषः । ननु पर्वतीयादिधूमेन सह पर्वतीयादिवह्नेरेव व्याप्तिर्भवतु नामेत्याशंक्य परिहरति न चेति । तत्तद्वन्ह्यादेरिति । पर्वतीयमहानसीयचत्वरीयगोष्ठीयवह्न्यादेरित्यर्थः । उभयाभावसत्त्वात्–वह्निघटोभयाभावस्य विद्यमानत्वात् । एकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेरिति । प्रमाणाभावादतिरिक्तोभयाभावो नास्त्येवेति न शंक्यमेकसत्त्वेऽपि द्वयं नास्तीतिप्रतीतेरेव मानत्वात्पर्वते पर्वतीयवह्निसत्त्वेऽपि वह्निघटद्वयं नास्त्येवेत्यर्थः । तथा चैतदभावस्य पर्वतीयवह्नेरपि प्रतियोगित्वमप्रतियोगिसाध्याभावादव्याप्तिस्तदवस्थैवेति चेत् । हेत्वधिकरणवृत्तिव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्ति-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



च समाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यम् । तत्तद्व्यादेरप्युभयाभावसत्त्वादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेः । गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्च । तथापि प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति वाच्यम् ।

ननु रूपत्वव्याप्यजातिमत्त्वान् पृथिवीत्वादित्यादौ साध्यतावच्छेदिका रूपत्वव्याप्यजातयस्तासां च शुक्लत्वादिजातीनां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न । तत्र परंपरया रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वात् । न हि तादृशधर्मावच्छिन्नाभावः क्वापि पृथिव्यामस्ति—रूपत्व-

विवृतिः ।

रिति गृहाण । अत्र वह्निघटोभयाभावमादाय लक्षणं न दूष्यं शुद्धघटाभावमादाय लक्षणसंगतेः । हेत्वधिकरणे रक्तघटे पीतगुणस्याभावः पीतघटे श्वेतगुणस्याभावः तदभावप्रतियोगिगुणस्य साध्यत्वादप्रतियोगिसाध्येन सामानाधिकरण्यात्मकव्याप्त्यव्याप्तेराह—तथापीति । अयं भावः-हेत्वधिकरणे घटे द्रव्यत्वेन गुणावश्यंभावनियमाद्धेत्वधिकरणवृत्त्यभावो नीलाभावादिर्यदि स्यादभावीयप्रतियोगित्वं नीलादौ तदवच्छेदकत्वं नीलत्वादेरनवच्छेदकत्वं शुद्धगुणत्वस्येति नासंगतिः । प्रतियोगितानवच्छेदकं-हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकम् ॥

रूपत्वव्याप्यजातिमद्वान् घट इति शेषः । साध्यतावच्छेदिका इति । साध्यतात्र शुक्लादिगुणनिष्ठा बोध्या । तदवच्छेदिकाः शुक्लत्वादिजातयः । अव्याप्तिरिति चेदिति । नीलत्वादेरभावीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकाभावादिति भावः । परम्परया—स्वाश्रयाश्रयत्वसमवायेन, स्वं रूपत्वव्याप्यजातित्वं तदाश्रया नीलत्वादिजातयस्तासां नीलादौ समवायस्तादृशसम्बंधेन नीलादौ रूपत्वव्याप्यजातित्वस्य साध्यतावच्छेदकत्वं हेत्वधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकत्वं चोपपद्यत एवेति । तादृशधर्मावच्छिन्नाभावः—स्वाश्रयाश्रयत्वसम्बन्धेन रूपत्वव्याप्यजाति-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्याप्यजातिमान्नास्तीति बुद्ध्यापत्तेः । एवं दण्ड्यादिसाध्ये परंपरासंबद्धं दण्डत्वादिकमेव साध्यतावच्छेदकम् , तच्च प्रतियोगितानवच्छेदकमिति । साध्यादिभेदेन व्याप्तेर्भेदात्तादृशस्थले साध्यतावच्छेदकतावच्छेदकं प्रतियोगितावच्छेदकतानवच्छेदकमित्येव लक्षणघटकमित्यपि वदन्ति । हेत्वधिकरणं च हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यम् , तेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः । एवं हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणं बोध्यम् , तेन समवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः । अभा-

विवृतिः ।

त्वावच्छिन्नस्य समवायसम्बन्धेनाभाव इत्यर्थः । अस्तीति । पृथिव्यां यस्य कस्यचिद्रूपस्यावश्यं सत्त्वात् । दण्ड्यादीति । मठो दण्डिमान्दण्डिसंयोगादित्यत्र, परंपरा—स्वसमवायिसंयोगः । साध्यादिभेदेन-साध्यसाधनादिभेदेन । व्याप्तेर्भेदादिति । भेदश्चात्र कारणताभेदो ग्राह्यः । तादृशस्थले—रूपत्वव्याप्यजातिमद्वानित्यादिपूर्वोक्तस्थले । साध्यतावच्छेदकतावच्छेदकमिति । रूपत्वव्याप्यजातित्वं साध्यतावच्छेदकतावच्छेदकं तदेव हेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकतानवच्छेदकमपीति । हेतुतावच्छेदकविशिष्टाधिकरणं—हेतुतावच्छेदको यो धर्मस्तद्विशिष्टस्य हेतोरधिकरणं, वाच्यं-ग्राह्यमित्यर्थः । द्रव्यमिति । द्रव्यत्ववदिति शेषः । गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र हेतोरुपन्यासः । शुद्धसत्ताधिकरणेति । शुद्धसत्ताधिकरणं द्रव्यं 'विशिष्टं शुद्धान्नातिरिच्यत' इति न्यायेन गुणादि च तत्र गुणत्वादिकमस्ति न द्रव्यत्वमिति सिद्धं गुणादिवृत्त्यभावप्रतियोगित्वं द्रव्यत्वस्येति । हेत्वधिकरणस्य विशिष्टार्थकरणेन पूर्वोक्तन्यायतोऽभिन्नत्वेऽपि गुणकर्मान्यत्वविशिष्टसत्तात्वेन विशिष्टसत्ताया भिन्नत्वात्तदधिकरणं द्रव्यमेव केवलं तत्र द्रव्यत्वाभावो नास्त्येवेति हृदयम् । वन्हेर्नाव्याप्तिरिति । अयमर्थः समवायेन धूमाधिकरणं धूमावयवास्तद्वृत्त्यभावप्रतियोगित्वसत्त्वेऽपि वह्नेर्नाऽस्त्यव्याप्तिं-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वश्च प्रतियोगिव्यधिकरणो बोध्यः, तेन कपिसंयोगी एतद्वृक्षत्वादित्यत्र मूलावच्छेदेनैव एतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाव्याप्तिः। न च प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यनधिकरणवृत्तित्वं तदा तथैवाव्याप्तिः—प्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणादौ वर्तमानो योऽभावस्तस्यैव वृक्षेऽपि मूलावच्छेदेन सत्त्वात्। यदि तु प्रतियोग्यधिकरणावृत्तित्वं तदा संयोगी सत्त्वादित्यादावतिव्याप्तिः—सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वादिति वाच्यम्। हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य विवक्षितत्वात्। स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः। प्रतियोग्यनधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वाच्यम्, तेन विशिष्टसत्तावान् जा-

विवृतिः।

योऽपि हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं बोध्यमिति नियमनात् हेतुतावच्छेदकसम्बन्धः प्रकृते संयोगस्तेन हेत्वधिकरणे पर्वते वन्हिवृत्तेर्निष्प्रत्यूहत्वादिति॥

प्रतियोगिव्यधिकरणः—स्वप्रतियोग्यधिकरणभिन्नाधिकरणवानित्यर्थः। तेन—प्रतियोगिभिन्नाधिकरणत्वनिवेशेन, तथैव—तद्वदस्यैव। कपिसंयोगस्येति। कपिसंयोगस्याधिकरणत्वं वृक्षेऽनधिकरणं च गुणादिकं बोध्यम्। योऽभावः—कपिसंयोगाभावः, यदि तु प्रतियोग्यधिकरणावृत्तित्वं—प्रतियोगिव्यधिकरणत्वमिति तदेत्यर्थः। सत्ताधिकरणे—सत्तारूपहेत्वधिकरणे। विवक्षितत्वात्—प्रतियोगिव्यधिकरणपदेन विवक्षितत्वादित्यर्थः। स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इतीति। स्वपदं लक्षणघटकाभावपरमेवं च स्वप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छिन्नत्वमर्थः पर्यवस्यति॥ कपिसंयोगाभावो मूलावच्छेदेन वृक्षे सन्नपि स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणे नास्तीति निष्कर्षपदार्थः। अन्यत्रापि अतिव्याप्तिं वारयितुमाह—प्रतियोग्यनधीति। प्रतियोगिता-अभावीयप्रतियोगिता, स्पष्टमन्यत्। तेन—आधेयत्वे प्रतियोगिताव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्ताभावप्रतियोगिसत्ताधिकरणत्वेऽपि न क्षतिः। एवं साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वं बोध्यम्, तेन ज्ञानवान् द्रव्यत्वादित्यादौ द्रव्यत्वाधिकरणघटादेर्विषयतासंबन्धेन ज्ञानाधिकरणत्वेऽपि न क्षतिः। इत्थं च वह्निमान् धूमादित्यादौ धूमाधिकरणे समवायेन वह्निविरहसत्त्वेऽपि न क्षतिः।

ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्प्रतियोगिनोऽनधिकरणत्वं तत्सामान्यस्य वा यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वा विवक्षितम्। आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यादौ तथैवाव्याप्तिः—कपिसंयोगाभावस्य प्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिकपिसंयोगोऽपि भवति तदनधिकरणं वृक्ष इति। द्वितीये तु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः—सर्वस्यैवाभावस्य पूर्वक्षणवृत्ति-

विवृतिः।

च्छेदकावच्छिन्नत्वविवक्षणेन। व्यभिचारस्थलमाह जात्यधिकरणेति। जातिरूपहेत्वधिकरणेत्यर्थः। विशिष्टसत्तावानिति। गुणकर्मान्यत्वविशिष्टसत्तावानित्यर्थः घट इति शेषः। न क्षतिर्नातिव्याप्तिः। अनवच्छेदकसाध्यतावच्छेदकधर्मराहित्यादेवमग्रेऽपि। अत्र—हेत्वधिकरणे। साध्यतावच्छेदकसम्बन्धेनेति। साध्यतावच्छेदकसम्बन्धश्चात्र समवायस्तेन ज्ञानाधिकरणमात्मैव न घटादिकम्। विषयतासम्बन्धेन घटादेर्ज्ञानाधिकरणत्वेऽपि साध्यतावच्छेदकसम्बन्धेन ज्ञानाधिकरणत्वाभावादिति भावः। विषयो घटादिकम् विषयी ज्ञानमिति न तिरोहितम्। इत्थं च—साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणविवक्षायां च, धूमाधिकरणे—पर्वते। समवायेनेति। संयोगेन तु तत्र वह्निसत्त्वमव्याकुलमेव। न क्षतिर्नाव्याप्तिः॥ तद्व्युदासाय हेतुमन्निष्ठाभावः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वेन न विशेषणीय इति भावः।

तत्सामान्यस्येति। तत्पदं प्रतियोगितावच्छेदकावच्छिन्नपरम्। सामान्यं च यावत्प्रतियोगिपरमिति विवेकः। सङ्गतिः स्पष्टैव। आ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् । न च वह्निमान् धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियो- ग्यधिकरणत्वं यद्यपि पर्वतादेस्तथापि साध्यतावच्छेदकसंबन्धेन तत्प्र- तियोग्यनधिकरणत्वमस्त्येवेति कथं प्रतियोगिव्यधिकरणाभावाप्रसिद्धि- रिति वाच्यम् । घटाभावे यो वह्न्यभावस्तस्य घटाभावात्मकतया घटा- भावस्य वह्निरपि प्रतियोगी तदधिकरणं च पर्वतादिरित्येवं क्रमेण प्रति- योगिव्यधिकरणस्याप्रसिद्धत्वात् । यदि च घटाभावादौ वह्न्यभावादि-

विवृतिः ।

द्ये-प्रथमकल्पे, तथैव तदवस्थैव । प्रतियोगितावच्छेदकावच्छिन्न इति । प्रतियोगितावच्छेदकं यत् कपिसंयोगत्वं तदवच्छिन्नो यत्किंचि- द्भूतलवृत्तिकपिसंयोगोऽपि भवितुमर्हति इत्यर्थः । तदनधिकरणं- भूतलवृत्तिकपिसंयोगानधिकरणम् । वृक्ष-एतद्वृक्षः । द्वितीयकल्पे तु नात्र दोषः । द्वितीये—प्रतियोगितावच्छेदकावाच्छिन्नसामान्यपक्षे । स्वाभावेति । स्वं घटाभावादिस्तस्य योऽभावस्तदात्मकेत्यर्थः । हे- त्वधिकरणपर्वते घटाभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाव- स्य चैक्यादभावप्रतियोगिनोर्द्वयोरेकाधिकरणवृत्तित्वं स्वाभावा- त्मकप्रतियोगिना सहास्त्येवेति । प्रतियोग्यनधिकरणेति । प्रति- पादितदिशा पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिना स- ह पर्वतादावस्ति यद्यपि सामानाधिकरण्यं घटाभावादेरित्यर्थः । ज्ञानवान्द्रव्यत्वादित्यादौ अतिप्रसङ्गव्युदासायाह—तथापीति । साध्यतावच्छेदकसम्बन्धः प्रकृते संयोगस्तेन हेत्वधिकरणस्य घ- टस्वाभावात्मकप्रतियोगिनोरनधिकरणत्वादिति । प्रकारान्तरेण वादी तं दोषमाह—घटाभाव इति । हेत्वधिकरणपर्वते यो घटाभा- वस्तद्घटाभावात्मकाधिकरण इत्यर्थः । घटाभावात्मकतयेति । अ- भावाधिकरणकाभावस्याधिकरणरूपत्वादिति भावः । तदधिकरणं- वन्ह्यधिकरणम्, भिन्नः-न घटाभावात्मकः, अन्यथा वन्हिमति घ- टशून्यदेशे वन्हिर्नास्तीति घटवति वन्हिशून्ये घटो नास्तीति प्र- त्ययस्य चापत्तेः । एवं च वन्हिमान्धूमादित्यत्र दोषाभावेऽपि ह्र- दो धूमाभाववान् वन्ह्यभावादित्यत्राव्याप्तिर्दुर्वारैवेत्याह—तथा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भिन्न इत्युच्यते, तथापि धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः—तत्र साध्यतावच्छेदकसंबन्धः स्वरूपसंबन्धः तेन संबन्धेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति। तृतीये तु कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः—तत्रात्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य च गुणत्वात्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मन इति।

विवृतिः।

पीति। स्वरूपसम्बन्धः—अभावीयविशेषणतेत्यर्थः। पूर्वक्षणवृत्तित्वेति। पूर्वक्षणवृत्तित्वविशिष्टं यत्स्वं घटाभावादि तदात्मकप्रतियोगिना सह हेत्वधिकरणह्रदादावेकाधिकरणे स्वरूपसम्बन्धेन वस्तुमात्रस्याभावो वर्तत एवेति स्थूलार्थः॥

प्राचामाचार्याणां सिद्धान्ते द्रव्ये संयोगसामान्याभावानङ्गीकारादाह—कपीति। आत्मेति शेषः। आत्मवृत्तिः—हेत्वधिकरणात्मवृत्तिर्यः कपिसंयोगाभावाभाव इत्यर्थः। तस्य—संयोगस्य, गुणत्वात्—संख्यादिसामान्यगुणेषु गणितत्वात्। एवं साध्याभावरूपकपिसंयोगो गुणसामान्यस्वरूपः तत्प्रतियोगिता यथा कपिसंयोगाभावेऽस्ति तथा गुणसामान्याभावेऽपि एवमभावीयप्रतियोगितावच्छेदकं कपिसंयोगाभावत्वव्यापकीभूतं गुणसामान्याभावत्वमपि भवितुमर्हति यतो हेत्वधिकरणे आत्मनि सामान्यगुणो नास्तीत्यभावो न किन्तु गुणसामान्याभावाभाव एव तत्प्रतियोगिता गुणसामान्याभावे प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमेव तस्य यत्किञ्चित्प्रतियोगितावच्छेदकत्वेन ग्रहो भवेत्तदवच्छिन्नगुणसामान्याभावः स्यात् तस्यानधिकरणं हेत्वधिकरणमात्मेति दोषः। अत्रायमभिसन्धिः—कपिसंयोगाभावे कपिसंयोगाभावत्वगुणसामान्याभावत्वधर्मौ स्तः यत्किञ्चित्प्रतियोगितावच्छेदकत्वेन गुणसामान्याभावत्वस्य ग्रहो भवेत् तदवच्छिन्नगुणसामान्याभावानधिकरणं हेत्वधिकरणमात्मा यद्यपि कपिसंयोगाभावत्वेन कपिसंयोगाभावाभावो न हेत्वधिकरणे आत्मनि तथापि गुणसामान्याभावत्वेन कपिसंयोगा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मैवम् । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितावच्छेदकत्वस्य विवक्षितत्वात् ।

ननु कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः–हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामभावानां साध्यतावच्छेदकसंबन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणवृत्तित्वात्। अत्र केचित् । महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगाभावाभावोऽस्तीति गुणसामान्याभावत्वेन कपिसंयोगाभावानधिकरणं हेत्वधिकरणमात्मेति ।

विवृतिः ।

यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमतेनाह—यादृशेति । गुणसामान्याभावत्वावच्छिन्नगुणसामान्याभावनिष्ठप्रतियोगितेत्यर्थः । एवं गुणसामान्याभावनिष्ठप्रतियोगितानवच्छेदकं साध्यतावच्छेदकं कपिसंयोगाभावत्वमेवेत्यदोषः ।

पूर्वोक्तलक्षणस्याव्याप्तिमाशंक्याह नन्विति । तत्र हेतुमाह हेत्वधिकरणस्येत्यादिना । कालिकविशेषणतया–कालिकविशेषणतासम्बन्धेन । प्रतियोग्यधिकरणवृत्तित्वादिति । स्वप्रतियोग्यधिकरणे महाकाले वृत्तित्वादित्यर्थः । महाकालभेदविशिष्टेति । महाकालभेदविशिष्टो यो घटस्तदभाव इत्यर्थः । वैशिष्ट्यमिह सामानाधिकरण्येन बोध्यम् । तत्र–हेत्वधिकरणमहाकाले । प्रतियोगीति । स एवाभावः प्रतियोगिव्यधिकरणः स्यादित्यर्थः । महाकाले महाकालभेदाभावादिति । अभावीयविशेषणतासम्बन्धेन महाकालभेदाभावादित्यर्थः । अयं भावः–यद्यपि कालो घटवानित्यादावव्याप्तिः सर्वस्य साध्यतावच्छेकसम्बन्धेन महाकालनिष्ठविशेषणतया महाकालवृत्तित्वात्प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरर्थात् यथा महाकालो घटाधिकरणमुक्तसम्बन्धेन तथा तद्घटाभावाधिकरणमपि इति न प्रतियोगिव्यधिकरणाभावं पश्यामो यो लक्षणं घटयेत् तथापि महाकालभेदविशिष्टघटाभाव एव तत्र प्रतियोगिव्यधिकरणो भवेत् महाकालस्य घटाधिकरणत्वेऽपि महाकालविशिष्टघटानधिकरणत्वान्महाकाले महाकालभेदाभावादिति । महाकालस्य दैशिकविशेषणतया महाका-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गिव्यधिकरणो महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात् , महाकाले महाकालभेदाभावात् । वस्तुतस्तु प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम् । व्यापकसामानाधिकरण्यं च व्याप्तिः । इत्थं च कालो घटवान् कालपरिमाणादित्यादौ संयोगसंबन्धेन यो घटाभावस्तत्प्रतियोगिनो घटस्यानधिकरणे हेत्वधिकरणे महाकाले वर्तमानः स एव संयोगेन घटाभावस्तस्य प्रतियोगितायां कालिकसंबन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्तिः ।

विवृतिः ।

लानधिकरणत्वेऽपि कालिकविशेषणतयाऽधिकरणत्वमस्त्येवेत्यरुचौ सिद्धान्तमाह वस्तुतस्त्विति । प्रतियोग्यनधीति । प्रतियोगितावच्छेदकावच्छिन्नानधिकरणं यद्धेत्वधिकरणं तन्निष्ठाभावप्रतियोगितासामान्ये इत्यर्थः । तद्धेतुव्यापकत्वं–तद्धेतुतावच्छेदकावच्छिन्नव्यापकत्वं, भवति हि समवायादिना घटत्वाद्यवच्छिन्नानधिकरणमहाकालपरिमाणाधिकरणमहाकालनिष्ठघटाभावप्रतियोगितासामान्ये घटत्वावच्छिन्नत्वकालिकसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वात्कालिकसम्बन्धेन घटत्वावच्छिन्नं कालपरिमाणव्यापकं तत्समानाधिकरण्यं च कालपरिमाण इति लक्षणसमन्वयः । यत्सम्बन्धेति । साध्यतावच्छेदकसम्बन्धः । यद्धर्मः—साध्यतावच्छेदकधर्मः । तत्र यदि यद्धर्मावच्छिन्नत्वाभावमात्रमुच्यते तदा समवायेन यो वह्न्यभावस्तस्य प्रतियोगितावच्छेदकसम्बन्धः समवायस्तेन प्रतियोग्यनाधिकरणपर्वतादिवृत्तिः स एव तत्प्रतियोगितावच्छेदकं च वह्नित्वमित्यव्याप्तिः स्यात् । यदि च यत्सम्बन्धावच्छिन्नत्वाभावमात्रमुच्यते, तदा तादृशस्य संयोगेन घटाभावस्य प्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वसत्त्वादव्याप्तिः स्यादत उभयमुपात्तम् । प्रतियोगितायां—घटाभावीयघटनिष्ठप्रतियोगितायाम् । उभयाभावसत्त्वादिति । एकसत्त्वेऽपि द्वयं नास्तीति प्रत्ययबलादुभयाभावस्य संयो-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धूमवान् वह्नेः इत्यादावतिव्याप्तिवारणाय सामान्यपदमुपात्तम् ।

ननु प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्नत्वमप्रसिद्धं गुरुधर्मस्यानवच्छेदकत्वादिति चेन्न । कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादिति संक्षेपः ॥ ६९ ॥

पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह—

सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥

विवृतिः ।

गेन घटाभावीयघटनिष्ठप्रतियोगितायामव्याहतत्वादिति भावः । धूमवान् वह्नेरिति । पर्वत इति शेषः । सामान्यपदं–प्रतियोगितासामान्यमित्यत्रत्यसामान्यपदम्, तच्च यावदर्थकमित्यवोचाम, तदप्रवेशे पूर्वोक्तलक्षणस्यालक्ष्ये संगमनादतिव्याप्तिरायातैव ।

प्रमेयवह्निमानिति । पर्वत इति शेषः । अप्रसिद्धमिति । तथा चाव्याप्तिरिति भावः । तत्र हेतुमाह गुरुधर्मस्येति । संभवति लघुधर्मे गुरौ तदभावादिति । प्राचामनुरोधेन लघुधर्मस्यावच्छेदकत्वसंभवे गुरुधर्मस्यावच्छेदकत्वानङ्गीकारादिति भावः । प्रकृते वह्नित्वं लघु प्रमेयवह्नित्वं गुरु लघोरवच्छेदकत्वसम्भवेऽपि साध्यतावच्छेदकत्वं न, प्रमेयवह्नित्वस्यैवात्र साध्यतावच्छेदकत्वात् तस्य च गुरुत्वादवच्छेदकत्वाभावः साध्यतावच्छेदकत्वस्य सर्वत्र लक्षणेषु निविष्टत्वादवच्छेदकाप्रसिद्धिनिबन्धनाव्याप्तिर्दुर्वारा स्यादिति निष्कर्षः । परिहरति नेति । इति संक्षेप इति । संक्षिप्येदं व्याप्तिलक्षणमुक्तमित्यर्थः ॥ ६९ ॥

पक्षवृत्तित्वमित्यत्रेति । 'व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते' इत्यत्र परामर्शलक्षणे पक्षवृत्तित्वमित्युक्तं तत्र वाक्यार्थबुद्धौ पदार्थज्ञानस्य कारणतावत्पक्षवृत्तित्वज्ञानस्य पक्षज्ञानाधीनत्वेन पक्षत्वमेव प्राङ्निर्णेतव्यमित्याशंकां सिषाधयिषयेत्यादिग्रन्थेन मूलकृच्छमयतीत्यखण्डार्थः । मूले पक्षतालक्षणस्य विस्पष्टमनायातत्वात्तत्कर्तुकामो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सिषाधयिषयेति । सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता तद्वान्पक्ष इत्यर्थः । सिषाधयिषामात्रं न पक्षता विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात् । अत एव साध्यसंदेहोऽपि न पक्षता विनापि संदेहं तदनुमानात् । सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव, अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम् । तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता । यत्र च सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता । यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न

## विवृतिः ।

भङ्ग्यन्तरेण मूलार्थमभिधत्ते सिषाधयिषाविरहेति । सिषाधयिषाविरहविशिष्टा या सिद्धिस्तदभावः सिषाधयिषाभावेन विशिष्टस्य साध्यनिश्चयस्याभाव इति यावत् । पक्षता-पक्षतावांश्च पक्ष इत्यर्थः । मूले तत्र-पक्षे, वृत्तित्वज्ञानात्-पक्षवृत्तित्वावगाहिज्ञानात्, तेन न केवलव्याप्तिज्ञानादनुमितिप्रसङ्गः । मेघानुमानादिति । गगनं मेघवद्गर्जनादित्यादौ गृहमध्यस्थस्य सिषाधयिषाविरहकालेऽपि अनुमितेरानुभविकत्वादिति भावः । अत एव—वक्ष्यमाणदूषणादेव, अनुमितेः पूर्वं साध्यसन्देहो नियमेन जायत इत्यभिप्रेत्य 'साध्यसन्देहः पक्षते'ति प्राचामुक्तिरपि निर्युक्तिकत्वादुपेक्ष्यैवेति । तत्र हेतुमाह विनापीति । तदनुमानात्—मेघानुमानात् । सिद्धौ सत्यामपीति । इन्द्रियसन्निकर्षजन्यं ज्ञानं सिद्धिः तस्याः पर्वतादिपक्षे पर्वतो वह्निमानितिप्रत्यक्षज्ञानस्य सत्त्वेऽपीत्यर्थः । पर्वते वह्निविषयकानुमितिर्मे भवेदितीच्छासत्त्वेऽप्यनुमितिर्वारयितुमशक्यैव । यद्यप्यनुमितिं प्रति प्रत्यक्षस्य प्रतिबन्धकत्वेनानुमित्यसम्भवस्तथापि सिषाधयिषारूपोत्तेजकसद्भावेऽनुमितिर्भवत्येवेति हृदयम् । प्रतिबन्धकसद्भावेऽपि सामग्रीसहकारेण कार्यजनकत्वमुत्तेजकत्वम् । एवं ह्यनुमितौ सिषाधयिषोत्तेजिका तद्विरहविशिष्टसिद्धिरेव विरोधिनी तदभाव एव हेतुः । अतः चतुर्थ्यन्तार्थसिः तादृक्पक्षतासिद्ध्यर्थमित्यर्थः । सिद्धौ विशेष्ये सिषाधयिषाविरहविशिष्टत्वं वि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षता—सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात् । ननु यत्र परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः, यत्र सिद्धिपरामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात्प्रतिबन्धकाभावादेवानुमितिः, यत्र सिषाधयिषासिद्धिपरामर्शाः सन्ति तत्र परामर्शकाले सिषाधयिषैव नास्ति, एवमन्यत्रापि सिद्धिकाले परामर्शकाले च न सिषाधयिषा—योग्यविभुविशेषगुणानां यौगपद्यनिषेधात् , तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न। यत्र वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षं स्मरणं वा, ततः सिषाधयिषा तत्र पक्षतासंपत्तये तद्विशेषणस्यावश्यकत्वात् ।

अत्रेदं बोध्यम् । यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्ताल्लि-

विवृतिः ।

शेषणमावश्यकम् । यत्र—स्थले, सिद्धिः—साध्यनिश्चयः । सिद्धेः सत्त्वादिति । सिद्धेः सत्त्वेन तदभावरूपपक्षताया अभावादिति भावः । परामर्शानन्तरं—परामर्शद्वितीयक्षणे, ततः—सिद्ध्युत्पत्तिद्वितीयक्षणे । परामर्शनाशादिति । अनुमितिकारणीभूतपरामर्शात्मकज्ञानस्य क्षणिकत्वेन नाशादित्यर्थः । यत्र सिद्धिपरामर्शेति । प्रथमे सिद्धिः द्वितीये परामर्शः तृतीये सिषाधयिषा इत्येवमव्यवधानेन भवन्तीत्यर्थः । प्रतिबन्धकाभावादिति । अनुमितिं प्रति यः सिद्धिरूपः प्रतिबन्धकस्तदभावादित्यर्थः । योग्यविभुगुणानां—प्रत्यक्षयोग्यविभुगुणानाम् । यौगपद्यनिषेधात्—एककालावच्छेदेनोत्पत्तेरनभ्युपगमात् । कथंकिमर्थम् । ततो—द्वितीयक्षणे, सिषाधयिषा—पर्वते वन्ह्यनुमितिर्मे जायतामितीच्छा, तद्विशेषणस्य—सिषाधयिषाविरहविशिष्टत्वविशेषणस्य, तथा चात्र केवलसिद्ध्यभावाभावेपि सिषाधयिषाविरहविशिष्टसिद्धेरभावात्पक्षता निराबाधैवेति भावः ।

यल्लिङ्गकेति । यद्धेतुकेत्यर्थः । तेन—तत्तदिच्छाया उत्तेजकत्वाल्लि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ङ्गकानुमितौ पक्षता। तेन सिद्धिपरामर्शसत्त्वेऽपि यत्किंचिज्ज्ञानं मे जायतामितिच्छायामपि नानुमितिः। वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षातिरिक्तं वह्निज्ञानं जायतामितीच्छायां तु भवत्येव। एवं धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनुयामितीच्छायामपि नानुमितिः। सिषाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्यैव तत्तदनुमितौ प्रतिबन्धिका वक्तव्या। तेन पर्वतस्तेजस्वी पाषाणमयो वह्निमानिति ज्ञानसत्त्वेऽप्यनुमितेर्न विरोधः। परन्तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यासिद्धावपि तदवच्छेदेनानुमितिदर्शनात्पक्षतावच्छेकावच्छेदेनानुमितिं प्रति

विवृतिः।

कारेण, सिद्धिपरामर्शसत्त्वे—वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति सिद्ध्यात्मकपरामर्शसद्भावकाले। नानुमितिरिति। नानुमित्यापत्तिरित्यर्थः। तदिच्छाया यत्किञ्चिज्ज्ञानविषयकत्वेन प्रकृतानुमितिसामग्र्यामुत्तेजकत्वाभावादिति भावः। भवत्येवेत्यनुमितिरित्यनेन सम्बन्धनीयम्। तदिच्छायाः प्रत्यक्षातिरिक्तवह्न्यनुमितिज्ञाने उत्तेजकत्वेन विद्यमानत्वादिति भावः। तल्लिङ्गकत्वनिवेशस्य प्रयोजनं दर्शयति एवमित्यादिना। धूमपरामर्शसत्त्वे वह्निव्याप्यधूमवान्पर्वतो वह्निमानित्यत्र आलोकेन हेतुनेति शेषः। वह्निमनुमिनुयामितीच्छायामपि नानुमितिरिति। वह्न्यनुमितिर्मे जायतामितीच्छासत्त्वेऽपि नानुमित्यापत्तिरित्यर्थः। तदिच्छाया यल्लिङ्गकपरामर्शत्वं तल्लिङ्गकत्वं नेति प्रकृतपरामर्शे उत्तेजकत्वमपि नेति भावः। विशिष्येति। पर्वतो वह्निमानित्यनुमितौ पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन सिद्ध्यात्मकज्ञानस्य प्रतिबंधकत्वं वक्तव्यमित्यर्थः। तेन तादृशसिद्धेर्विशिष्यैव तत्तदनुमितिप्रातिबन्धकत्ववक्तव्यत्वेन। ज्ञानसत्त्वेऽपीति। सिद्ध्यात्मकज्ञानसत्त्वेऽपीत्यर्थः। अनुमितेः—पर्वतो वह्निमानित्यनुमितेः। न विरोध इति। अयं भावः—तद्विशेष्यकतत्प्रकारकानुमितौ तद्विशेष्यकतत्प्रकारकज्ञानस्य विरोधित्वं भवति। प्रकृतेऽनुमितिज्ञानं तु पर्वतत्वावच्छिन्नविशेष्यता-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका, पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि।

इदं तु बोध्यम्। यत्रायं पुरुषो न वेति संशयानन्तरं पुरुषत्वव्याप्यकरादिमान् अयमिति ज्ञानं तत्रासत्यामनुमित्सायां पुरुषस्य प्रत्यक्षं भवति न त्वनुमितिरतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्य-

विवृतिः।

निरूपितवह्नित्वावच्छिन्नप्रकारताशालयेवास्ति परन्तु सिद्धिज्ञानं विपरीनमर्थात् तेजस्त्वावच्छिन्नप्रकारकं पाषाणमयत्वावच्छिन्नविशेष्यकमिति न विरोधित्वमिति। साध्यसिद्धावपीति। साध्यस्य वह्न्यादेः सिद्धिसत्त्वेऽपीत्यर्थः। तदवच्छेदेन-पक्षतावच्छेदकावच्छेदकेन। पक्षतावच्छेदकेति। पर्वतीययावत्शिखरवृत्त्यनुमितिं प्रतीत्यर्थः। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेवेति। पर्वतीययावत्शिखरेषु वह्निविषयकं प्रत्यक्षज्ञानमित्यर्थः। पर्वतशिखरवृत्त्यनुमितिं प्रति तु सिद्धिज्ञानमात्रं विरोधीति। अर्थात्–एकशिखरवृत्त्यनुमितावेकशिखरवृत्ति यावच्छिखरवृत्ति वा ज्ञानं विरोधि ज्ञानानां प्रतिवध्यप्रतिबन्धकभावः समानविषयकत्वेनाथ चाधिकविषयकत्वेनैव भवति न प्रतिबध्यज्ञानान्न्यूनविषयावगाहिज्ञानं कदापि विरोधीति यावत् शिखरवृत्त्यनुमितावेकशिखरवृत्तिज्ञानं न विरोधीति स्थूलार्थः।

स्वसिद्धान्तमुपदर्शयति इदन्तु बोध्यमित्यादिना। करादीत्यादिना चरणादेरुपग्रहः। न त्वनुमितिरिति। तत्रानुमितिप्रत्यक्षसामग्र्योर्विद्यमानत्वेऽपि अनुमितिसामग्रीसहकारिणी अनुमित्सा यदि न भवेत्तदा प्रत्यक्षमेव नानुमितिरिति भावः। अतोऽनुमित्साविरहेति। अर्थादुक्तसिद्धान्तादनुमित्साविरहविशिष्टानुमितिसामग्रीं प्रति समानविषयकप्रत्यक्षसामग्री प्रतिबन्धिकेत्युत्तरेणानुषङ्गः। तत्र दृष्टान्तः कामिनीति। यथा वियुक्तस्यासक्तपुरुषस्य कामिनीसंयोगेच्छान्यकार्यप्रतिबन्धिका स्वभावतस्तथेयमपि अयमर्थो—

रमणीभवं समपनीय तमः कमनीयतामधित न क्षणतः।
प्रतिभावलेन विकलः सकलं जनमेष नैव बुबुधेऽपि नृपः॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



क्षसामग्री कामिनीजिज्ञासादिवत्स्वातन्त्र्येण प्रतिबन्धिका । एवं परामर्शानन्तरं विनापि प्रत्यक्षेच्छां पक्षादेः प्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका ॥ ७० ॥

हेतुप्रसङ्गाद्धेत्वाभासान्विभजते—

अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥ ७१ ॥
आद्यः साधारणस्तु स्यादसाधारणकोऽपरः ।
तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥ ७२ ॥

विवृतिः ।

इत्यादिपद्यैः मदीये सुलतानचरित्रकाव्ये सविशेषमभिहितः । परामर्शानन्तरं–वह्निव्याप्यधूमवान्पर्वत इत्यादि परामर्शानन्तरं । विना प्रत्यक्षेच्छामिति । पक्षादिविषयकं प्रत्यक्षं मे भवतु इत्याकारिकेच्छामन्तरेण । भिन्नविषयकेति । अनुमितिविषयभिन्नविषयकेत्यर्थः ॥ ७० ॥

व्याप्तिं समाप्य प्रसङ्गसङ्गत्या हेत्वाभासनिरूपणमारभमाण आह हेतुप्रसङ्गादिति। हेतुनिरूपितप्रसंगसंगतेः प्रयोज्यत्वं पञ्चम्यर्थः विभागान्वयि कर्मत्वं द्वितीयार्थः । एवं च हेतुनिरूपितप्रसंगसंगतिप्रयोज्यहेत्वाभासकर्मकविभागानुकूलकृतिमान् ग्रन्थकार इति वाक्यार्थः ॥ हेत्वाभासान्विभजत इति । स्वसमभिव्याहृतपदार्थतावच्छेदकेत्यादिविभजेरर्थ इत्थं लापनीयः–स्वेन विपूर्वकभजधातोर्ग्रहणं तत्समभिव्याहृतपदं हेत्वाभासपदं तदर्थतावच्छेदकधर्मो हेत्वाभासत्वं तद्व्याप्या मिथो विरुद्धा यावन्तो धर्मा अनैकान्तिकत्वादयस्तत्प्रकारकज्ञानमनैकान्तो विरुद्ध इत्यादि तदनुकूलव्यापारः पद्यात्मकवाक्यप्रयोगरूपः स एव विभाग एवमन्यत्रापि । अत्र यद्यपि 'प्रसङ्गः कारणं हेतुरिति' वैजयन्त्या हेतुप्रसङ्गयोरनर्थान्तरत्वं तथापि प्रसङ्गशब्दोऽत्र प्रकरणवाची बोध्यः । ननु हेत्वाभासपदार्थ एव तावन्नास्तीति कुतस्तद्विभागो लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिर्भवतीत्यभियुक्तोक्तेरित्यतो हेत्वाभासं लक्षयति तल्लक्षणं त्विति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तल्लक्षणं तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वम् । तथाहि-व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते दोषाः । यद्विषयकत्वं च यादृशविशिष्टविषयकत्वं बोध्यम् । तेन बाधभ्रमस्यानुमितिविरोधित्वेऽपि न क्षतिः । तत्र पर्वतो वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषः । न च वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति परामर्शकाले वह्निव्याप्यधूमस्याभासत्वं न स्यात्-तत्र वह्न्यभावव्याप्यवान्पक्ष इति विशिष्टस्याप्रसिद्धत्वादिति वाच्यम् । इष्टापत्तेः, अन्यथा बाधस्यानित्यदोषत्वापत्तेः, तस्मात्तत्र वह्न्यभावव्याप्यपाषाणमयत्ववानिति परामर्शकाले वह्निव्याप्यधूमस्य नाभास-

## विवृतिः ।

तच्छब्दोऽत्र हेत्वाभासपरामर्शकः । यद्विषयकत्वेन-व्यभिचारादिविषयकत्वेन, ज्ञानस्य-वह्निमान् प्रमेयत्वादित्यादावयं हेतुर्व्यभिचारीत्यादिज्ञानस्य, अनुमितिविरोधित्वं-वह्निमानित्याद्यनुमितिविरोधित्वं, तत्त्वं हेत्वाभासत्वमित्यर्थः । यत्र प्रमेयत्वादिहेतौ व्यभिचारादिनिश्चयो न ततोऽनुमितिरिति भावः । ते-व्यभिचारादयः, बाधभ्रमस्य-पर्वतो वह्न्यभाववानित्यादिबाधभ्रमस्य, अनुमितिविरोधित्वेऽपि-अनुमितिविरोधितावच्छेदकत्वेऽपि, न क्षतिः-न वह्न्यभावादावतिव्याप्तिः । तत्र-पर्वतो वह्निमान् धूमादित्यत्र, विशिष्टस्य-वह्न्यभावविशिष्टस्य, पक्षे वास्तविकसाध्याभावसत्त्वे बाधो न साध्याभावभ्रमे प्रकृतहेतोर्दुष्टत्वमिति भावः । सत्प्रतिपक्षस्यानित्यदोषत्ववादिन उट्टङ्कनम् नचेति । वह्न्यभावव्याप्यपाषाणेति । यत्र सिद्धान्तिनो धूमहेतोर्वह्निव्याप्यधूमवानिति परामर्शो जातस्तत्र वादिनोऽपि पाषाणमयत्वहेतोर्वह्न्यभावव्याप्येत्यादिपरामर्शो जायते तत्रेत्यर्थः । आभासत्वं-हेत्वाभासत्वम् । न स्यादिति । पाषाणमयत्वहेतुना धूमरूपहेतोराभासत्वं न युक्तमित्यर्थः । विशिष्टस्याप्रसिद्धत्वादिति । पाषाणमयत्वहेतौ वह्न्यभावनिरूपितव्याप्यत्वाभावादिति भावः । समाधानमिष्टापत्तेरिति । तथाच धूमादिसद्धेतूनां विरोधिहेतुसत्त्वेऽपि न दुष्टत्वमिति भावः । विपक्षे दोषमाह अन्यथेति । वह्निव्या-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वम्, भ्रमादनुमितिप्रतिबन्धमात्रं, हेतुस्तु न दुष्टः। इत्थं च साध्याभाववद्वृत्तिहेत्वादिकं दोषः। तद्वत्त्वं च हेतौ येन केनापि संबन्धेनेति नव्याः।

परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वाभासत्वम्। सत्प्रतिपक्षे विरोधिव्याप्त्यादिकमेव तथा। तद्वत्त्वं च हेतोर्ज्ञानरूपसंबन्धेन। न चैवं वह्निमान् धूमादित्यादौ पक्षे बाधभ्रमस्य साध्याभावविषयकत्वेनानुमितिविरोधित्वाज्ज्ञानरूपसंबन्धेन तद्वत्त्वस्यापि

विवृतिः।

प्यधूमस्याभासत्वस्वीकारे इत्यर्थः। अनित्यदोषत्वापत्तेरिति। पक्षे साध्याभावभ्रमदशायां सद्धेतावपि दोषवत्त्वापत्तेरित्यर्थः। तद्वत्त्वं च-एतादृशदोषत्वं च। येन केनापीति। इयांस्तु विशेषः यद् व्यभिचारादौ तादात्म्येन बाधादावेकज्ञानविषयत्वेनैवमन्यत्रापि बोध्यम्। एतत्समये हेतुवदाभासन्त इति हेत्वाभासा इति व्युत्पत्त्या हेत्वाभासशब्दो दुष्टहेतुपरः॥

परे तु-सत्प्रतिपक्षादेरनित्यदोषत्ववादिनस्तु इत्याहुरित्यग्रिमेणान्वयः। एतत्समये हेतोराभासा हेत्वाभासा इति व्युत्पत्त्या हेतुशब्दो दोषपरः। यद्विषयकत्वेनेत्यादि। ज्ञानं यद्विषयकतयाऽनुमितिं प्रतिबध्नातीत्यर्थः। तथा-दोषाधायकम्, तद्वत्त्वं-च विरोधिव्याप्त्यादिमत्त्वं च,ज्ञानरूपसम्बन्धेन-एकज्ञानविषयत्वसम्बन्धेन। शंकते नचेति। एवमिति। सत्प्रतिपक्षस्यानित्यदोषत्वस्वीकारे इत्यर्थः। अनुमितिविरोधित्वादिति। वह्निमान्धूमादित्यादिसद्धेतुस्थले पक्षे साध्याभावसत्त्वेन बाधाभावेऽपि वह्न्यभाववान्पर्वत इति बाधभ्रमस्यैव साध्याभावविषयकत्वेन वह्निमानित्यनुमितेर्विरोधित्वादिति भावः। अत्र मते यद्विषयकत्वेनेत्यस्य यत्प्रकारकत्वेनार्थ एवं च यत्पदेन वह्न्यभावस्य ग्रहात्तद्वत्त्वं वह्न्यभावे धूमे च, सद्धेतोर्धूमादेः। न चेत्यादिना शंकितमनित्यवादी परिहरति तत्रेति। पर्वते वह्निमान् धूमादित्यत्र बाधकालीनधूमादिसद्धेतावित्यर्थः। अत्र-ह्रदो वह्निमान् धूमादित्यत्र, तत्कल्पनात्—ज्ञानस्य सम्बन्धत्वकल्प·

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सत्त्वात्सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यम् । तत्र ज्ञानस्य संबन्धत्वाकल्पनात् । अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात् । तत्र बाधित इति व्यवहाराभावादित्याहुः । अनुमितिविरोधित्वं च अनुमितितत्करणान्यतरविरोधित्वम् । तेनैकत्र हेतौ व्यभिचारग्रहे हेत्वन्तरेणानुमित्युत्पत्तेस्तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपि न क्षतिरिति संक्षेपः ।

यादृशपक्षसाध्यहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम् । पञ्चत्वकथनं तु तत्संभवस्थलाभिप्रायेण ।

एवं च साधारणाद्यन्यतमत्वमनैकान्तिकत्वम् । साधारणः साध्यवदन्यवृत्तिर्हेतुः । तेन च व्याप्तिग्रहप्रतिबन्धः क्रियते । असाधारणः साध्यासमानाधिकरणो हेतुः । तेन साध्यसामानाधिकरण्यग्रहः

विवृतिः ।

नात्, तत्र—बाधभ्रमकालीने सद्धेतौ, तेन—अनुमितिपदस्यानुमितितत्करणान्यतरपरत्वेन, व्यभिचारिणि—हेतौ, व्यभिचारिण्यव्याप्तिधारणाय तत्करणान्यतरेति निवेशितमित्यर्थः । यथाश्रुतविरोधित्वानङ्गीकारे कारणमाह तेनेति । एकहेताविति । यथा वह्निमान्प्रमेयत्वादिति प्रमेयत्वहेतौ, हेत्वन्तरेण—धूमरूपहेतुना, तदभावादिति । साक्षात्साध्याभावादीत्यर्थः । न क्षतिः—धूमवान्वह्नेरित्यादौ नाव्याप्तिः । अधिकमन्यत्रोक्तमित्याह संक्षेप इति । संक्षेपेण हेत्वाभाससामान्यलक्षणमिदमुक्तमित्यर्थः ।

यादृशसाध्यपक्षहेताविति । यत्यत्धर्मावच्छिन्ने दोषव्यवहारः संप्रदायसिद्धस्तावदन्यान्यत्वं तत्रत्यदोषसामान्यलक्षणमित्यर्थः । पञ्चत्वकथनमिति । इदमभिधानं 'सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाः पञ्च हेत्वाभासाः' इति गौतमीयमतानुरोधेन मणिकृतामत्रैवं संमतिः । केचित्तु 'विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवी'दित्युक्तेर्हेत्वाभासत्रित्वमेवाहुरिति संक्षेपः । तत्संभवेति । गन्धाभाववति जले स्नेहस्य सत्त्वादु

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रतिबध्यते । तथा शब्दो नित्यः शब्दत्वादित्यादावसाधारण्यं शब्दोऽनित्यः शब्दत्वादित्यादौ त्वसाधारण्यभ्रमः । अन्ये तु सपक्षावृत्तिरसाधारणः । सपक्षश्च निश्चितसाध्यवान् । इत्थं च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नासाधारण्यं तत्र हेतुनिश्चयादिति वदन्ति । अनुपसंहारी चात्यन्ताभावाप्रतियोगिसाध्यकादिः । अनेन च व्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते ।

विवृतिः ।

व्यभिचारित्वं गन्धवत्पृथिव्यामसत्त्वाद् विरुद्धत्वं गन्धरूपसाध्याभावसाधकस्य पृथ्वीत्वहेतोः सत्त्वात्सत्प्रतिपक्षत्वं वायुरूपपक्षेऽसत्त्वात् स्वरूपासिद्धत्वं गन्धस्य पक्षेऽभावाद्बाधितत्वमेवं रीत्या वायुर्गन्धवान् स्नेहादित्यादौ पञ्चानामपि हेत्वाभासानां संभव इति तात्पर्यम् । तत्तत्स्थलीयदोषसामान्यलक्षणमभिप्रेत्यैव पञ्चधा विभागोच्चारणमिति भावः ।

साधारणादीति । साधारणासाधारणानुपसंहार्यन्यतमत्वमनैकान्तिकत्वमित्यर्थः । साध्यवदन्यवृत्तिरिति । साध्यवतः सपक्षादन्यस्मिन् विपक्षे वृत्तिर्वर्तनं यस्य सः पर्वतो वह्निमान् प्रमेयत्वादित्यत्र प्रमेयत्वस्य सपक्षे–महानसादौ, विपक्षे–ह्रदादौ, च वर्तमानत्वात्साधारणत्वमेवमन्यदप्यूहनीयम् । अन्ये तु–प्राञ्चस्तु । इति वदन्तीत्यग्रिमेणान्वयः । सपक्षावृत्तिः सपक्षे न वृत्तिः स्थितिर्यस्य । निश्चितसाध्यवानिति । साध्यप्रकारकनिर्णयविशेष्यक इत्यर्थः । पक्षे—शब्दे, साध्यनिश्चयः—अनित्यत्वरूपसाध्यनिश्चयः, नासाधारण्यं शब्दत्वस्येति शेषः । तत्र–निश्चितसाध्यवति पक्षे । अत्यन्ताभावेति । अत्यन्ताभावस्याप्रतियोगी केवलान्वयीत्यर्थः । साध्यकादिरित्यादिना हेत्वादेः परिग्रहः। अनेन–अनुपसंहारिणा, अयमेव चान्वयव्याप्त्या केवलान्वयिसाध्यकेऽनुमितिमप्युत्पादयतीति ध्येयम् । उदाहरणमस्य सर्वमनित्यं प्रमेयत्वादिति । प्रतिबन्धकः अनुमितेरिति शेषः । अनुमितिप्रतिबन्ध एव चास्य दूषकताबीजम् । सत्प्रतिपक्षे त्विति । विरुद्धात्सत्प्रतिपक्षस्य भेदबोधकस्तुशब्दः । एवमग्रेऽपि 'तुः स्याद्भेदेऽवधारणे' इति कोशः । प्रतिहेतुः–प्रतिकूलो द्वितीयो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी। अयं साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः। सत्प्रतिपक्षे तु प्रतिहेतुः ( द्वितीयहेतुः ) साध्याभावसाधकः अत्र तु हेतुरेवेति विशेषः। साध्याभावसाधक एव हेतुः साध्यसाधकत्वेनोपन्यस्त इति अशक्तिविशेषोपस्थापकत्वाच्च विशेषः।

सत्प्रतिपक्षः साध्याभावव्याप्यवान्पक्षः। अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वोपस्थितिकालीनागृहीताप्रामाण्यकसाध्याभावव्याप्यवत्त्वोपस्थितिविषयस्तथेत्यन्ये। अत्र च परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम्। अत्र केचित्। यथा घटाभावव्याप्यवत्ताज्ञाने

विवृतिः।

हेतुः, अत्र–विरुद्धे। साध्यसाधकत्वेनेति। द्वन्द्वान्त इति न्यायेन साध्यत्वेन साधकत्वेन चेत्यर्थो द्रष्टव्यः। अशक्तिविशेषोपस्थापकत्वात्-शक्तिविशेषोपस्थापकत्वाभावात्। प्रयोक्तृपुरुषस्येति शेषः।

दीधिकृन्मतेन सत्प्रतिपक्षलक्षणमाह सत्प्रतिपक्ष इति। साध्याभावेति। साध्याभावस्य व्याप्यः साध्याभावव्याप्यः तद्वान्, साध्याभावव्याप्तिविशिष्टहेतुमति पक्षे तद्व्यपदेश इत्यर्थः। अस्योदाहरणं ह्रदो वह्न्यभाववान् जलादित्यादि। अयं च न्याये प्रकरणसम इत्युच्यते तथा चोक्तं न्यायभाष्ये 'यस्मात्प्रकरणचिन्ता स निर्णयार्थमुपदिष्टः प्रकरणसमः'। सत्प्रतिपक्षव्यवहारोपयिकमन्येषां सत्प्रतिपक्षलक्षणमाह अगृहीतेति। अगृहीतमनिश्चितमप्रामाण्यं यस्य तादृक् यत्साध्यव्याप्यवत्त्वेत्याद्यर्थः। अत्र च–सत्प्रतिपक्षे च। परस्पराभावेति। परस्परसाध्याभावेत्यर्थः। अनुमित्यनुत्पत्तिरेव च दूषणम्। केचित्–रत्नकोशकारादय इत्याहुरित्युत्तरेणान्वयः। घटाभावेति। पूर्वमंधकारादिदोषविशेषेण घटवति स्थल इत्यपि बोध्यम्। अत्र चक्षुःसंयोगात्मकगुणो दोषात्प्रबलः। शङ्खे सत्यपीति। अदूषितनेत्रस्य पूर्वं शंखे शुक्लत्वज्ञानेऽपि पुनः पित्तादिदोषेण तत्र पीतिमबुद्धिरुत्पद्यते एवमत्र गुणाद्दोषस्य प्राबल्यम्। अर्थात् श्वैत्यज्ञानं दुर्बलं पीतत्वज्ञानं प्रबलम्। कोटिद्वयेति। अन्धकारे स्थाणुपुरुषयोः 'स्थाणुर्वा पुरुषो वे'ति प्रत्यये

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विद्यमानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते। यथा च शङ्खे सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शङ्ख इति धीर्जायते एवं कोटिद्वयव्याप्यदर्शनेऽपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव। यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः। फलबलेन चाधिकसमबलभावः कल्प्यत इति वदन्ति। तन्न। तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयाल्लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता लाघवात्, न तूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता गौरवात्। तथा च प्रतिबन्धकसत्त्वात्कथमनुमितिः। नहि लौकिकसंनिकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिः प्रामा-

विवृतिः।

तत्त्वरूपकोटिद्वयदर्शनेऽपीत्यर्थः। एवमत्र गुणदोषयोः समबलत्ववत्प्रतिपक्षेऽपि द्वयोर्हेत्वोः समबलवत्त्वात्पर्वतो वन्हिमान्न वेति संशयरूपानुमितिर्निराबाधैवेति भावः। एककोटीति। एककोटिव्याप्यवत्त्वज्ञानस्य चासंदिग्धत्वम्। न संशय इति। पर्वतो वह्निमान्नवेति संशयो न भवतीत्यर्थः। फलबलेन—फलानुरोधेन॥ परिहरति तन्नेति। तदभावव्याप्येति। साध्याभावव्याप्येत्यर्थः। शाब्दबोधादेरित्यादिनाऽनुमित्युपमित्योः परिग्रहः। ज्ञानमात्रे—तादृशज्ञानत्वावच्छिन्ने, तस्य—साध्याभावव्याप्यवत्ताज्ञानस्य। लाघवादिति। शाब्दबोधादिज्ञानस्य पदज्ञानजन्यत्वेन पीतः शंख इत्यस्य पित्तादिदोषविशेषजन्यत्वेन साध्याभावव्याप्यवत्ताज्ञानस्य पूर्वं प्रति प्रतिबन्धकत्वं न द्वितीयं प्रतीत्यतिलाघवमिति भावः। पृथक्प्रतिबंधकतेति। तदुपनीतभानं प्रति तच्छाब्दबोधं प्रति च पृथक्प्रतिबंधकत्वं न साध्याभावव्याप्यवत्ताज्ञानस्य स्वीकर्तव्यं प्रतिबंधकताद्वये गौरवादिति निर्गलितोऽर्थः।

प्रतिबन्धकसत्त्वात्—सत्प्रतिपक्षस्थलेऽपि पूर्वोक्तज्ञानरूपविरोधिनः सद्भावात्। कथमनुमितिरिति दुर्घटा वाऽयुक्तैव वानुमितिरित्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



णिकी, येनानुमितिभिन्नत्वेनापि विशेषणीयम् । यत्र च कोटिद्वय-व्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात्संशयो नान्यथाऽगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति ।

असिद्धिस्त्वाश्रयासिद्ध्याद्यन्यतमत्वम् । आश्रयासिद्धिः—पक्षे पक्षतावच्छेदकस्याभावः । यत्र च काञ्चनमयः पर्वतो वह्निमानिति साध्यते तत्र पर्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमये

विवृतिः ।

र्थः । अनुमितेरपि पूर्वोक्तज्ञाननिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकाक्रान्तत्वादिति भावः । प्रत्यक्षमिवः—प्रत्यक्षं प्रमाणमिव, संशयाकारा–संदेहरूपा । अनुमितिभिन्नत्वेनेति । प्रतिबध्यप्रतिबंधकभावनियमशरीर इति शेषः । यत्र च–स्थाणुर्वा पुरुषो वेत्यत्र च । प्रतिबंधकत्वादिति । ततो न सत्प्रतिपक्षस्थले संशयारूपानुमितिर्भवतीति ॥

आश्रयासिद्ध्यादीत्यादिपदं स्वरूपासिद्धिव्याप्यत्वासिद्धी संगृह्णाति ॥ एवञ्चाश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्ध्यन्यतमत्वमसिद्धित्वं तद्भिन्नत्वे सति विषयतया परामर्शप्रतिबन्धकावच्छेदकत्वं वा तत्त्वम । आश्रयासिद्धेर्लक्षणमाह–पक्षे पक्षतावच्छेदकस्याभाव इति । परामर्शप्रतिबंध इति । वह्निव्याप्यधूमवान् कांचनमयः पर्वत इति परामर्शस्य प्रतिबंध इत्यर्थः । स्वरूपासिद्धेर्लक्षणमाह–पक्षे व्याप्यत्वाभिमतस्याभाव इति । व्याप्यत्वेन हेतुत्वेनाभिमतस्य हेतोरभावः । पक्षे–ह्रदे, हेतोः–धूमस्य, साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य–द्रव्यव्याप्यधूमवान् ह्रद इत्याकारकस्य । साध्याप्रसिद्ध्यादय इति । अत्र साधनाप्रसिद्धिरादिपदात । व्याप्यत्वासिद्धिमध्येऽन्तर्भूता इति । तेन न तदाधिक्यशंकापंककलंकावसरोऽपि । साध्यतावच्छेदकाभावविशिष्टं साध्यं साध्याप्रसिद्धेर्लक्षणम । यत्र साध्ये साध्यतावच्छेदकधर्मस्य संभावना नास्ति तत्र साध्याप्रसिद्धिरित्यक्षरार्थः। एतज्ज्ञाने जाते–साध्ये साध्यतावच्छेदकाभावरूपज्ञाने जाते, वह्नौ कांचनमयत्वरूपं साध्यतावच्छेदकं नास्तीति ज्ञाते इत्यर्थः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पर्वते परामर्शप्रतिबन्धः फलम् । स्वरूपासिद्धिस्तु—पक्षे व्याप्यत्वाभिमतस्य हेतोरभावः। अत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम् । साध्याप्रसिद्ध्यादयस्तु व्याप्यत्वासिद्धिमध्येऽन्तर्भूताः । साध्ये साध्यतावच्छेदकस्याभावः, साध्याप्रसिद्धिः एतज्ज्ञाने जाते काञ्चनमयवह्निमानित्यादौ साध्ये साध्यतावच्छेदकाभावे ज्ञाते साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम् । एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः । यथा काञ्चनमयधूमादित्यादौ । अत्र हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात्तद्धेतुकव्याप्तिज्ञानादेरभावः फलम् । एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वं हेतुतानवच्छेदकमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति ।

बाधस्तु पक्षे साध्याभावादिः । एतस्यानुमितिप्रतिबन्धः फलम् । तद्धर्मिकतदभावनिश्चयो लौकिकसंनिकर्षाजन्यदोषाविशेषाजन्यतद्धर्मिक-

विवृतिः ।

साध्यतावच्छेदकविशिष्टसाध्यपरामर्शप्रतिबन्धः—कांचनमयवह्नित्वरूपसाध्यतावच्छेदकविशिष्टकांचनमयवन्हिव्याप्यधूमवान् पर्वत इति परामर्शस्य प्रतिबन्धः, हेतुतावच्छेदकाभावविशिष्टहेतुत्वं साधनाप्रसिद्धित्वम् । यत्र हेतौ हेतुतावच्छेदकधर्मस्य संभावना नास्ति तत्र साधनाप्रसिद्धिरित्यक्षरार्थः । कांचनमयधूमादिति । पर्वतो वह्निमानिति शेषः। तद्धेतुकेति । हेतुतावच्छेदकाविशिष्टहेतुकेत्यर्थः । हेतुतावच्छेदकमत्र कांचनमयधूमत्वं तद्विशिष्टहेतुः कांचनमयधूमः । गुरुतयेति । संभवति लघुनि धर्मे गुरुधर्मस्यानवच्छेदकत्वमिति नियमाद्धूमत्वं लाघवाद्धेतुतावच्छेदकं न तु नीलधूमत्वं गौरवात् यत्तु तस्यापि तत्त्वं तदपि व्याप्यत्वासिद्धिरिति केषांचिन्मतम् ॥

बाधलक्षणमाह—पक्षे साध्याभावादिरिति । यत्र पक्षे साध्यं न तिष्ठति तत्र बाधाख्यो दोषः। साध्याभावपक्षकत्वं बाधस्य लक्षणमि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तज्ज्ञानमात्रे विरोधीति । न तु संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणं तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तम्—अप्रसिद्धसाध्यकानुमित्यनापत्तेः, साध्यसंशयादिकं विनाऽप्यनुमित्युत्पत्तेश्च । एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं—प्रमाणाभावाद्गौरवाच्च, अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वाविषयकत्वेन प्रतिबन्धकतापत्तेः । किंतु भ्रमत्वज्ञानानास्कन्दितबाधादिबुद्धेः प्रतिबन्धकता, तत्र भ्रमत्वशङ्कावि-

## विवृतिः ।

त्यर्थः। उदाहरणमस्य वन्हिरनुष्णो द्रव्यत्वादिति। तद्धर्मिकतदभावनिश्चयः—अनाहार्या प्रामाण्यज्ञानानास्कंदिततद्धर्मिकतदभावनिश्चयः, बाधकालीनेच्छाजन्यज्ञानमाहार्यं तदन्यदनाहार्यमन्यत्स्पष्टम् । बाधबुद्धेरनन्तरं लौकिकसंनिकर्षजन्यविशिष्टबुद्धेरानुभविकत्वादाह—लौकिकसंनिकर्षजन्येति । अयमर्थः प्रत्यक्षातिरिक्तं ज्ञानमात्रं लौकिकसंनिकर्षाजन्यं पीतः शङ्ख इति ज्ञानं दोषविशेषजन्यं तद्भिन्नं च ज्ञानमात्रं प्रति तद्धर्मिकतदभावनिश्चयो विरोधी । प्रकृते वन्हौ पक्षेऽनुष्णत्वधर्मिकानुष्णाभाववत्त्वनिश्चयस्य वह्निरुष्ण इति प्रत्यक्षस्य अनाहार्याप्रामाण्यज्ञानानास्कन्दिततद्धर्मिकतदभावनिश्चयरूपत्वेन वन्हिरनुष्ण इत्यनुमितौ विरोधित्वं भवितुमर्हति । लौकिकसंनिकर्षजन्यादितज्ज्ञानात्मकप्रतिबध्यकोटावनुमितेरन्तर्भूतत्वादिति । न तु—इति युक्तमित्यग्रिमेण सहान्वेति । तद्विरोधितया—अनुमितिकारणीभूतस्य साध्यसंसृष्टत्वज्ञानस्य विरोधितया । अयुक्तत्वे हेतुमाह अप्रसिद्धसाध्यकानुमित्यनापत्तेरिति । पृथिव्यामितरभेद इत्यप्रसिद्धसाध्यकानुमित्यभावापत्तेरित्यर्थः। ननु तादृशानुमितेरसंभव एवेत्याशंक्य हेत्वन्तरमुपन्यस्यति—साध्यसंशयेति । घनगर्जनादाविति शेषः । ततो न पूर्वोक्तज्ञानमनुमितौ कारणमित्याशयः। साध्याभावज्ञान इति । ह्रदस्य वन्हिमत्त्वानुमितौ ह्रदो वह्न्यभाववानित्यत्रेत्यर्थः । प्रमात्वज्ञानमपि—प्रमात्वनिश्चयोऽपि साध्याभाववत्ताज्ञानविशेष्यकप्रमात्वप्रकारकं ह्रदो वह्न्यभाववानित्याकारकमित्यर्थः । अन्यथा—प्रमात्वज्ञानत्वेन प्रतिबंधकत्वे, सत्प्रतिपक्षादावित्यादिनाऽसिद्ध्यादिपरिग्रहः ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



घटनेन प्रामाण्यज्ञानं क्वचिदुपयुज्यते। न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः, पक्षे हेत्वभावे तु स्वरूपासिद्धिरेव दोष इति वाच्यम्। बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात्। किञ्च यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिंचित्करत्वाद्बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम्। एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यम्। न च पक्षे घटे गन्धसत्त्वात् कथं बाध इति वाच्यम्। पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति। बाधसत्प्रतिपक्षभिन्ना ये हेत्वाभासास्तद्‌द्‌व्याप्या

विवृतिः।

तदभावव्याप्येति। साध्याभावव्याप्येत्यर्थः। प्रतिबंधकतापत्तेरित्यस्यानुमित्यादावित्यादिः। भ्रमत्वज्ञानानास्कंदितबाधबुद्धेः—भ्रमत्वज्ञानशून्यबाधज्ञानस्य, तत्र—बाधस्थले, भ्रमत्वशंकाविघटनेन—भ्रमत्वशंकादूरीकरणेन, प्रामाण्यज्ञानं—प्रमात्वज्ञानम्, व्यभिचारज्ञानादेरित्यादिशब्देन स्वरूपासिद्धिज्ञानस्यापि ग्रहणम्। भेदादिति। बाधज्ञानस्य व्यभिचारस्वरूपासिद्ध्योर्न विषयकत्वमिति तस्यासिद्धिव्यभिचारान्यहेत्वाभासत्वमावश्यकमिति सिद्धम्॥

परामर्शानन्तरं—व्याप्तिज्ञानपक्षधर्मितापरामर्शोत्तरम्, अकिंचित्करत्वादिति। परामर्शद्वारैव तयोरनुमितिप्रतिबन्धकत्वोपगमेन स्वतंत्रतया प्रतिबंधकत्वाभावादिति भावः। कस्य तर्हि अनुमितिप्रतिबंधकत्वमभ्युपेयमित्यत्राह—बाधस्येति। शुद्धबाधस्थलमुपदर्शयितुमाह—एवमिति। यत्र—उत्पत्तिकालीनघटो गंधवान् पृथ्वीत्वादित्यत्र, बाधस्यैव—उत्पत्तिक्षणावच्छिन्नो घटो गंधाभाववानितिबाधबुद्धेरेव। ननूत्पत्तिक्षणावच्छिन्ने घटे गंधस्यासत्त्वेऽपि सामान्यघटे सत्त्वात्कथं बाधबुद्धेर्विषयतेति शंकां मनसि निधायोत्तरयति—नचेति। पक्षतावच्छेदकेति। अस्ति देशकालयोरपि पक्षतावच्छेदकत्वमिति घटोत्पत्तिक्षणीयकालस्याप्यवच्छेदकत्वेन घटे गंधसत्त्वेऽपि तदनुरोधेनोत्पत्तिक्षणे तदभावोऽपि वर्तत एवेति न दोषः। ये हेत्वाभासा—व्यभिचारादयः। तन्मध्ये—व्यभिचारादिमध्ये। अन्तर्भवन्ती-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अपि तन्मध्ये एवान्तर्भवन्ति अन्यथा हेत्वाभासाधिक्यप्रसङ्गात् । बाधव्याप्यसत्प्रतिपक्षस्तु भिन्न एव-स्वतन्त्रेच्छेन मुनिना पृथगुपदेशात् । सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रघट्टकार्थः ॥ ७१ ॥ ७२ ॥

यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।

य सपक्ष इति । सपक्षविपक्षवृत्तिः साधारण इत्यर्थः । सपक्षो निश्चितसाध्यवान् । विपक्षः साध्यावद्भिन्नः । विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम् । वस्तुतो विपक्षवृत्तित्वमेव वाच्यम्-विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्य भिन्नतया तस्य पार्थक्यात् ।

यस्तूभयस्माद्व्यावृत्तः स चासाधारणो मतः ॥७३॥

यस्तूभयस्मादिति । सपक्षविपक्षव्यावृत्त इत्यर्थः । सपक्षः साध्यवत्तया निश्चितः । विपक्षः साध्यशून्यतया निश्चितः । शब्दोऽनित्यः

विवृतिः ।

ति । ततो नाधिक्यमित्यर्थः । विपक्षे दोषोऽन्यथेति । तद्व्याप्यानां तन्मध्येऽनन्तर्भावस्वीकार इत्यर्थः । हेत्वाभासाधिक्यप्रसङ्गात्-व्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासा इति पञ्चधा विभज्योक्तिर्व्याकुप्येत, स्वतंत्रेच्छेन-नियोगपर्यनुयोगानर्हेण, मुनिना-गोतमेन । पृथगुपदेशादिति । उपदेशनमुपदेशो न तूपदिश्यतेऽनेनेत्युपदेशः । करणो घञो दुर्लभत्वाल्ल्युटा बाधाच्च । स चोपदेशोऽतीतानागतवर्तमानविदो भगवतो गोतमस्येति न तत्र कश्चिदिदं कर्तव्यमकर्तव्यं वेति वक्तुमीष्टे । 'नासूया तत्र कर्तव्या यत्रानुगम आचार्येण क्रियत' इति भाष्योक्तेः ॥ ७१ ॥ ७२ ॥

सपक्षविपक्षवृत्तिरिति । सपक्षवृत्तित्वे सति विपक्षवृत्तित्ववानित्यर्थः । साध्यवद्वृत्तित्वे सति साध्यवदन्यवृत्तिरिति यावत् । निश्चितसाध्यवानिति । निश्चितः साध्यो यत्र स यथा महानसम् । पक्षेऽतिव्याप्तिवारणाय निश्चितेति । साध्यवद्भिन्न इति । निश्चितसाध्याभाववानित्यर्थः । पर्वतो धूमवान्वह्नेरित्युदाहरणम् । पदकृत्यं दर्शयति विरुद्धवारणायेति । लक्षणे सपक्षवृत्त्यनिवेशे विरुद्धस्य विपक्षवृत्तितया साधारणत्वं प्रसज्येतेत्यर्थः । इदं च शिष्यबुद्धिवैशद्या-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वसन्देहस्तदा सपक्षत्वं घटादीनामेव, तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम्। यदा तु शब्देऽनित्यत्वनिश्चयस्तदा नासाधारणः, इदं तु प्राचां मतम्। नवीनमतं तु पूर्वमुक्तम् ॥७३॥

तथैवानुपसंहारी केवलान्वयिपक्षकः।

तथैवेति। केवलान्वयिपक्षक इति। केवलान्वयिधर्मावच्छिन्न-

विवृतिः।

र्थम्। वस्तुतःस्थितिस्तु विपक्षवृत्तिः साधारण इत्येव। साधारणत्वेऽपि-विपक्षमात्रवृत्तित्वेनेत्यर्थः। नन्वेवं विरुद्धस्य साधारणत्वं दुर्वारमित्याशंकां मनसि निधायोत्तरयति दूषकताबीजस्येति। साधारणेऽव्यभिचारज्ञानस्य विरुद्धे सामानाधिकरण्यज्ञानस्य च प्रतिबंधकत्वमिह दूषकताबीजम्। तस्य-विरुद्धस्य।

सपक्षविपक्षव्यावृत्त इति। सपक्षव्यावृत्तत्वे सति विपक्षव्यावृत्तत्ववानित्यर्थः। केवलपक्षमात्रवृत्तिर्यो हेतुः सोऽसाधारण इति यावत्। लक्ष्ये लक्षणं ग्राहयति—शब्दोऽनित्य इति। संदेहः—शब्दोऽनित्यो न वेति संदेहः। यथाकाशस्यास्पर्शवत्त्वान्नित्यत्वं तथा शब्दत्वस्यापि यथा च कर्मणोऽस्पर्शवत्त्वादप्यनित्यत्वं तथास्यापीत्येव संशयप्रकारः। तद्व्यावृत्तं च-विपक्षव्यावृत्तं च। तदा तदसाधारणमिति। परमाण्वाकाशादिभ्यो नित्येभ्यो घटादिभ्यश्चानित्येभ्यो व्यावृत्तत्वे सति शब्दमात्रवृत्तित्वादसाधारणत्वं शब्दत्वस्य सुलभमिति भावः। अनित्यत्वनिश्चयः कृतकत्वादिहेतुनेत्यर्थः। तदा नासाधारणः शब्दत्वरूपो-हेतुरसाधारणो न भवतीत्यर्थः। इदन्तु यस्तूभयस्माद्व्यावृत्त इति। पूर्वमिति। साध्यासमानाधिकरणो हेतुरसाधारण इत्यत्रेत्यर्थः ॥ ७३ ॥

मूले केवलान्वयिपक्षक इति। केवलमन्वयी अन्वयव्याप्तिमान् पक्षो यस्य स हेतुरनुपसंहारी तथा च केवलान्वयिधर्मावच्छिन्नपक्षकत्वं तत्त्वम्। अस्योदाहरणमाह सर्वमभिधेयं प्रमेयत्वादिति। पक्षस्य सर्वपदार्थस्य केवलान्वयित्वेन दृष्टान्ताभावादित्यक्षरार्थः। हेतुसाध्ययोर्यत्र निश्चयस्तस्य दृष्टान्तत्वात् यत्र साध्यसंशयस्तस्य

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षक इत्यर्थः । सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात्सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः । इदं तु न सम्यक्–पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात् । अस्तु वा सहचाराग्रहस्तावताप्यज्ञानरूपासिद्धिरेव न तु हेत्वाभासत्वं तस्य, तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम् ।

यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥७४॥

यः साध्यवतीति । एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावो बोधितः । तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ॥७४॥

आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ ।
व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥७५॥
पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।
ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥७६॥
व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।

विवृतिः ।

पक्षत्वात्साध्यसंदेहवत्त्वस्य साध्यनिश्चयवत्त्वस्य च विरोधात् पक्षभिन्नस्यैव दृष्टान्तत्वाच्चेति भावः । नानुमितिरिति । तेन चानुपसंहारिणो हेत्वाभासत्वमायातमिति भावः । सहचारग्रहेऽपि–सामानाधिकरण्यग्रहेऽपि । क्षतेरभावादिति । केवलान्वयिपक्षताकत्वस्यानुपसंहारित्वस्य क्षतेरभावादित्यर्थः । सहचाराग्रह इति । साध्येन सह हेतोरिति शेषः । तस्य–सहचाराग्रहस्य, तत्त्वम्–अनुपसंहारित्वम् ॥

मूले यः साध्यवतीति । साध्यवति–साध्याधिकरणे, नैवास्ति न वर्तत इत्यर्थः । 'अस्तिभवतिवर्ततिविद्यतयः समानार्थाः' इति नागेशोक्तेः । एवकारेणेति । नैवास्तीति पदान्तर्गतेनेत्यर्थः । साध्यव्यापकीभूताभावप्रतियोगित्वमिति । साध्यस्य व्यापकीभूतो योऽभावस्तत्प्रतियोगित्वं विरुद्धत्वमित्यक्षरार्थः । लक्ष्ये लक्षणसमन्वयो यथा घटो नित्यः कृतकत्वादित्यत्र साध्यस्य नित्यत्वस्य व्यापकीभूतो योऽभावः कृतकत्वाभावः तत्प्रतियोगि कृतकत्वमिति कृतकत्वस्य विरुद्धत्वम् ॥ ७४ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



असिद्धिं विभजते आश्रयासिद्धिरित्यादि । पक्षासिद्धिरिति । आश्रयासिद्धिरित्यर्थः । अपरेति । स्वरूपासिद्धिरित्यर्थः । नील-धूमादिक इति । नीलधूमत्वं गुरुतया न हेतुतावच्छेदकं स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात् । धूमप्रागभावत्वसंग्रहाय स्वसमानाधिकरणेति ।

विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥

विरुद्धयोरिति । कपिसंयोगतदभावव्याप्यवत्तापरामर्शेऽपि न सत्प्रतिपक्षत्वमत उक्तं—विरुद्धयोरिति । तथा च स्वसाध्यविरुद्ध-साध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्य-र्थः ॥ ७५ ॥ ७६ ॥ ७७ ॥

विवृतिः ।

पक्षासिद्धेराश्रयासिद्धेश्चानर्थान्तरत्वं दर्शयितुकामः पक्षासि-द्धेरर्थमाह आश्रयासिद्धिरित्यर्थ इति । नीलधूमत्वादिकमिति । आदिना पर्वतः काञ्चनमयवह्निमान् कांचनमयधूमादित्यत्र साध्ये साध्यता-वच्छेदकस्य साधने साधनतावच्छेदकस्याभावेन साध्यसाधनयोर-प्रसिद्धिरपि व्याप्यत्वासिद्धिरिति ज्ञापितम् । स्वसमानाधिकरणे-त्यादि । 'पर्वतो वह्निमान्नीलधूमात्' अत्र स्वं—व्याप्यतावच्छेदकं नी-लधूमत्वं तत्समानाधिकरणव्याप्यतावच्छेदकधर्मान्तरं शुद्धधूमत्वं तदघटितस्य व्याप्यतावच्छेदकत्वं स्वीक्रियते नीलधूमत्वं तु तद्-घटितमेव नाघटितमिति न तद्व्याप्यतावच्छेदकमपि भवितुमर्हतीति भावः । यत्र नीलधूमस्तत्र वह्निरिति व्याप्तेरभाव एव । धूमप्रा-गभावत्वसंग्रहायेति । यज्ञशाला वह्निमती भविष्यति धूमप्रागभावादि-त्यादौ यदि व्याप्यतावच्छेदकधर्मान्तराघटितत्वमात्रमुच्यते तदा धूमप्रागभावत्वस्य व्याप्यतावच्छेदकीभूतधूमत्वघटितत्वेन धूमप्रा-गभावत्वस्य संग्रहो दुर्घटः स्वसमानाधिकरणपदनिवेशे तु धूमप्राग-भावत्वं धूमप्रागभावे धूमत्वं धूमे इति सामानाधिकरण्याभावान्न दोष इति भावः ।

स्वसाध्यविरुद्धसाध्याभावेति । स्वपदेन सत्प्रतिपक्षत्वेना-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥

साध्यशून्य इति। पक्षः पक्षतावच्छेदकविशिष्ट इत्यर्थः। तेन घटे गन्धसत्त्वेऽपि न क्षतिः। एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम् ॥ ७८ ॥

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यामनुमानखण्डम्।

विवृतिः।

भिमतस्य हेतोर्ग्रहणं तत्साध्यविरुद्धो यः साध्याभाव इत्यर्थः। ह्रदो वह्निमान् धूमात् वन्ह्यभाववान् जलादित्यादौ स्वं जलं तत्साध्यं वन्ह्यभावत्वं तद्विरुद्धं वह्निमत्त्वसाध्यं तदभावव्याप्यवत्तादिपरामर्शविषयो जलमिति संगतिः ॥ ७५ ॥ ७६ ॥ ७७ ॥

ननूत्पत्तिकालीनघट इत्यादि मूलाभिधानमसंगतं तत्र पक्षे घटे गन्धशून्यत्वाभावादिति मा स्म दृप्यः—पक्ष इत्यस्य पक्षतावच्छेदकविशिष्ट इत्यर्थसंभवात्। पक्षतावच्छेदकः कालो देशो वा। गन्धसत्त्वेऽपि कालान्तरे इति शेषः। न क्षतिः—बाधलक्षणाव्याप्तिर्नेत्यर्थः। उत्पत्तिकालावच्छिन्नो घटो गन्धवान्पृथिवीत्वात्संमतवदित्यनुमाने उत्पत्तिकालावच्छिन्नो घटः पक्षः स च गन्धवान्न भवत्येव द्वितीयक्षण एव गंधादसंभवादतो बाधितार्थकमिदमनुमानम्। ननु कालस्येव देशस्यापि पक्षतावच्छेदकत्वे बाधसंभवात्तदप्रदर्शनेन मूलस्य न्यूनत्वमिति मा वह गर्वं—मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यस्य स्त्रयं बोद्धुं शक्यत्वात्, तत्र वृक्षे शाखावच्छेदेन कपिसंयोगसत्त्वेऽपि मूलावच्छेदेन कपिसंयोगाभावादत्र साध्याभावात्मकबाधदोषः संभवतीति शम् ॥ ७८ ॥

॥ इतिश्रीमूलचन्द्रिकायामनुमानखण्डं समाप्तम् ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



उपमितिं व्युत्पादयति—

ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥ ७९ ॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानां तु शक्तिधीरुपमा फलम् ॥ ८० ॥

ग्रामीणस्येति । यत्रारण्यकेन केनचिद्ग्रामीणायोक्तं 'गोसदृशो गवयपदवाच्य' इति । पश्चाद्ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यदर्शनं यज्जातं तदुपमितिकरणम् । तदनन्तरं गोसदृशो गवय-

विवृतिः ।

सारस्वतं नमस्कुर्वे धाम तामरसेक्षणम् ।
करामलकवद् विश्वं पश्यन्ति कवयो यतः ॥

नासंगतं प्रयुंजीतेत्यभियुक्तवचनादवसरसंगत्यानुमितिनिरूपणानन्तरमुपमितिनिरूपणायाह—उपमितिमिति । तत्र करणव्यापारफलानि दर्शयितुं ग्रामीणस्येत्यादिमूलं सङ्गतमितुं पूर्ववक्तव्यमाह—यत्रेत्यादिना । ग्रामीणायोक्तमिति । ग्रामीणाय—गवयशब्दार्थमजानते गवयः कीदृगिति पृच्छते ग्रामवासिन इत्यर्थः । ग्रामीणपदं नागरिकादीनुपलक्षयति । किमुक्तमित्यपेक्षायामाह—गोसदृश इति । 'गवयः स्याद्वनगवो गो सदृक्षोऽश्वचारण' इत्यभिधानचिन्तामणिः । यः कश्चित्पदार्थो गोसदृशः स गवयपदवाच्यो भवतीति शेषः। यत्तदोरार्थत्वम् । पश्चाद् ग्रामीणेनेति । कालान्तरे प्रसङ्गवशात्कदाचिद्वनंगतेन ग्राम्यपुरुषेणेत्यर्थः । गोसादृश्यविशिष्टे गवयपदवाच्यत्वप्रकारकशाब्दबोधानन्तरं वा पश्चाच्छब्दार्थः । अरण्यादावित्यादिपदं पर्वतादीनामुपग्राहकम् । क्वचित्पर्वतादावपि गवयोपलंभसंभवात् । तत्र—दृष्टगवये, गोसादृश्यदर्शनम्—गोरङ्गप्रत्यङ्गादिसामान्यधर्माध्यक्षम् । अतिदेशवाक्यार्थस्मरणमिति । एकत्र दृष्टस्य श्रुतस्य वा परत्र योगोऽतिदेशः । स चासौ वाक्यार्थश्चेति तथाभूतस्य तस्य स्मरणं स्मृतिः । सादृश्यविशिष्टपिंडसाक्षात्कारस्योद्बोधकत्वेनातिदेश-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पदवाच्य इत्यतिदेशवाक्यार्थस्मरणं यज्जायतं तदेव व्यापारः। तदनन्तरं तत्र गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुपमितिः, न त्वयं गवयपदवाच्य इत्युपमितिः—गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् ॥ ७९ ॥ ॥ ८० ॥

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यामुपमानखण्डम् ।

विवृतिः ।

वाक्यार्थस्मरणे प्रभुत्वादिति भावः। तदेवेति। अत्रैवकारस्तादृशातिदेशवाक्यार्थस्मरणं व्यापारत्वं व्यवस्थाप्य तद्भिन्ने व्यापारत्वं वारयति। तदुपमितिरिति। तथाच सादृश्यज्ञानजन्यज्ञानमुपमितिः। उपमित्यनुभवसिद्धो जातिविशेषस्तत्त्वम्। नन्वयं गवयपदवाच्य इत्येवोपमितिरस्तु दोषाभावादित्याशंकयाह—नत्विति । अयं गवयोऽभिप्रेतगवयः। न तु शब्दस्येत्युपमितिरित्यत्रान्वयः तेनायं गवयपदवाच्य इत्येतावदुपमितिस्वरूपं न भवितुमर्हति। अर्थादुपमितेर्विषयस्येदन्ताविशिष्टकरणत्वमनुचितमिति भावः । गवयान्तरे—अन्यगवयव्यक्तिषु। शक्तिग्रहाभावेति। गवयपदशक्तिग्रहाभावेत्यर्थः। ननु या भवता स्मृतिरित्युच्यते सानुमितिर्वा शाब्दं वा स्मृतिरेव वास्त्विति चेन्न। व्याप्त्यादिज्ञानपदज्ञानानुभवनैरपेक्ष्येणैवास्याः संभवान्नानुमिनोमि—न शृणोमि—न स्मरामि—किन्तूपमिनोमीत्यनुव्यवसायस्यापन्होतुमशक्यत्वाच्चेति सर्वमवदातम् ॥ ७९ ॥ ८० ॥

इति श्रीमूलचन्द्रिकायामुपमानखण्डम् ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शाब्दबोधप्रकारं दर्शयति—

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥

पदज्ञानं त्विति । न तु ज्ञायमानं पदं करणं पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात् । पदार्थधीरिति । पदजन्यपदार्थस्मरणं व्यापारः, अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः । तत्रापि वृत्त्या पदजन्यत्वं बोध्यम्, अन्यथा घटादिपदात्समवायसंबंधे-

विवृतिः ।

प्रत्यक्षदैवतं गेहे मामकीं नाम मातरम् ।
पितरं मोक्षरामाह्वं प्रणमामि पुनः पुनः ॥

शाब्दबोधप्रकारमिति । शाब्दत्वं च शक्तिलक्षणान्यतरसम्बन्धेन पदजन्यपदार्थस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वम् । तत्प्रकारस्तु—पुस्तकमानयेति शृण्वतो गृहीतपदपदार्थसंबन्धस्य विद्यार्थिनः तत्पदश्रवणात्तत्तदर्थोपस्थितौ पुस्तककर्मकानयनानुकूलकृतिमांस्त्वं भवेति शाब्दबोधो जायते तत्र द्वितीयायाः कर्मत्वमर्थः धातोरानयनम् । अनुकूलत्वं च संसर्गमर्यादया भासते लोटः प्रेरणत्वमाख्यातस्य कृतिः । एवमन्योऽपि । तत्र किं किमपेक्षितमित्याशंकाशमनाय करणादीन्याह मूलकृत् पदज्ञानमित्यादिना । करणव्यापारशक्तिधीनिष्ठं शाब्दबोधकार्योत्पादप्रयोजकतावच्छेदकत्वम् । न तु ज्ञायमानमिति । अनेकार्थत्वं निपातानां भाष्ये निर्णीतमिति तुरेवार्थे । श्रावणज्ञानविषयं पदं करणं नैव भवितुमर्हतीत्यर्थः । मौनिश्लोकादौ—मौनिपुरुषनिर्मितश्लोकादौ, छित्त्वादिबोधकहस्तचेष्टादिकमादिपदात् । शाब्दबोधात्—मौनिनाक्षरलेखनद्वारा हस्तादिचेष्टाद्वारा च परो बोधितस्तत्र पदोच्चारणाभावेऽपि केवलपदज्ञानमात्रेण शाब्दबोधप्रतीतेरनुभवसिद्धत्वादिति मर्म । पदार्थधीरितीति । पदार्थस्य पदवृत्तिविषयार्थस्य धीर्बुद्धिः । पदजन्यपदार्थो यथा 'शब्दः कारणमर्थस्य स हि तेनोपजन्यते' इत्यत्र तथात्रापि बोध्यम् । अन्यथेति । पदजन्यत्वानुक्तावित्यर्थः । प्रत्यक्षादिना—प्रत्यक्षादिप्रमाणेन, तत्रापि—पदजन्यपदार्थोपस्थितावपि, वृत्त्या—पदवृत्तिद्वारा, पद-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नाकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः। वृत्तिश्च शक्तिल-क्षणान्यतरः संबन्धः । अत्रैव शक्तिज्ञानस्योपयोगः पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्संबन्धेन स्मरणानुपपत्तेः। पदज्ञानस्य च एकसंबन्धिज्ञानवि-षयार्थस्मारकत्वम् । शक्तिश्च पदेन सह पदार्थस्य संबन्धः। स चास्मा-च्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपः-आधुनिके नाम्नि शक्तिरस्त्येव।

## विवृतिः ।

जन्यत्वं पदजन्यस्मरणमेवं च पदधर्मिकवृत्तिज्ञानजन्यपदार्थोपस्थान-मित्यर्थः। अन्यथा-वृत्त्या पदजन्यत्वानुक्तौ। आकाशस्मरणे जात इति। एकसंबंधिज्ञानमपरसंबंधिस्मारकमिति न्यायादिति भावः । शक्ति-लक्षणेति । शक्तिलक्षणाभेदेन वृत्तिर्द्विधेत्यर्थः। वृत्तिस्त्रिधा शक्ति-र्लक्षणा व्यञ्जना चेत्यन्यत्र पल्लवः । अत्रैव—पदजन्यपदार्थोपस्थिता-वेव, तत्संबंधेन-पदज्ञानसंबंधेन, स्मरणानुपपत्तेः-पदार्थस्मरणस्या-सिद्धेरित्यर्थः। एकसंबंधिज्ञानविषयाऽर्थस्मारकत्वमिति । एकसंबं-धिज्ञानस्यापरसंबंधिस्मृतेरुद्बोधकत्वेन यथा हस्तिसंबंधित्वेन ज्ञाने हस्तिपकस्मृतिरनुभवसिद्धा तथैवेदृशपदज्ञानस्यापि 'एकसं-बंधिज्ञानमपरसंबंधिस्मारकमिति' न्यायेनार्थोपस्थापकत्वमिति भावः। 'तदशक्तिश्चानुरूपत्वादि'त्यत्र पूर्वमीमांसायां सामर्थ्यवाचकः शक्ति-शब्दः। 'शक्तिविपर्ययादि'त्युत्तरमीमांसायाम् क्रियासंपादिका शक्तिः कर्तृकरणादीनि क्रिया निष्पादयन्ति अतश्च तान्येव शक्तिरित्यभिहि-तम्।'निर्ज्ञातशक्ते'रित्यादिनोक्तः वाक्यपदीये शक्तिशब्दः सामर्थ्यरू-पमर्थं ज्ञापयतीत्येवं शक्तिशब्दस्य तन्त्रेषु बह्वर्थसमर्पकतामालोच्य स्वतन्त्रे तामाह—शक्तिश्चेति। ननु केन सबंन्धेन शब्दो नियतमर्थं प्रति-पादयतीत्यत्राह—स चेति। अस्माच्छब्दादिति । जन्यत्वं पञ्चम्यर्थः। अयमर्थ इति। अर्थोऽभिधेयः—

> शब्देनोच्चार्यमाणेन यद्वस्तु प्रतिपद्यते ।
> तस्य शब्दस्य तद्वस्तु ज्ञायतामर्थसंज्ञया ॥

इतिवाक्यपदीयेऽर्थलक्षणम् । शब्दत्वजातिमत्त्वं शब्दस्य तदभिधेयत्वं चार्थस्य प्रसिद्धमेव लक्षणम् । बोद्धव्यः—बोध-विषयः, एवं च घटशब्दजन्यबोधविषयो घटो भवतु इती-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एकादशेऽहनि पिता नाम कुर्यादितीश्वरेच्छायाः सत्त्वात् । आधुनिके तु सङ्केते न शक्तिरिति संप्रदायः । नव्यास्तु ईश्वरेच्छा न शक्तिः, किंत्विच्छैव तेनाधुनिकसंकेतेऽपि शक्तिरस्त्येवेत्याहुः । शक्तिग्रहस्तु व्याकरणादितः, तथा हि—

विवृतिः ।

ईश्वरेच्छारूप एव सः यः शब्दो यस्मिन्नर्थे भगवतेश्वरेण संकेतितः स तमर्थं प्रतिपादयत्येवं च शब्दार्थयोरीश्वरेच्छैव सम्बन्ध इति भावः । इदं पदमिममर्थं बोधयत्वित्याकारा वेश्वरेच्छा शक्तिर्लाघवात् । अर्थस्मृत्यनुकूलपदपदार्थसंबंधत्वं शक्तित्वम् । अनुकूलत्वं च प्रयोजकत्वं, तच्च कारणतावच्छेदके पदपदार्थसंबंधेऽपि निराबाधम् । आधुनिके नाम्नि—पित्रादिभिः पुत्रादौ संकेतिते चैत्रादिनाम्नि, यथा वा शास्त्रकृद्भिः सिद्धभावादौ पक्षतादिनामनि, आधुनिके संकेत-आधुनिकमात्रसंकेतविषये चैत्रादिपदे । न शक्तिरिति । नित्यस्यैव तथात्वात् । तदुक्तं वाक्यपदीये—

> आजानिकश्चाधुनिकः संकेतो द्विविधो मतः ।
> नित्य आजानिकस्तत्र या शक्तिरिति गीयते ॥

संप्रदाय इति । शिष्टानुशिष्टगुरूपदिष्टमार्गः संप्रदायः । चैत्रादिपदानामिव पारसीकादिशब्दानां संकेतवत्त्वाविशेषेऽपि न तेषां धर्मकर्मण्युपयोगः 'साधुभिर्भाषितव्यं नापभ्रंशितवै न म्लेच्छितवै इति' श्रुत्या तन्निषेधात् ,म्लेच्छितवै—म्लेच्छमात्रसंकेतितैः । खरादिशब्दास्तु रासभादौ म्लेच्छैरिवार्यैरपि संकेतिताः । कस्तर्हि नव्यमते शक्तिपदार्थ इत्यत्राह—किन्त्विच्छैवेति । अत्र एवकार ईश्वरेच्छाया शक्तित्वं निषिध्य इच्छामात्रे शक्तित्वं व्यवस्थापयति । यदाहुः—

> अयोगमन्ययोगं च अत्यन्तायोगमेव च ।
> व्यवच्छिनत्ति धर्मस्य एवकारस्त्रिधा मतः ॥

सर्वत्रान्ययोगव्यवच्छेद एवैवार्थ इति मणिकृन्मतं युक्तायुक्तत्वं स्वयमूहनीयम् । ननु किमनेन भवत्प्रयासेनायातमित्यत्राह—तेनेति । आहुरित्यस्य पूर्वतनेन नव्या इत्यनेनानुषङ्गः । व्याकरणादितः । उपमानादिकमादिपदात् । अस्मदुक्तार्थे वृद्धोक्तमपि प्रमाणमित्याह

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति । क्वचित्सति बाधके त्यज्यतेऽपि । यथा वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते । चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयः । तच्च गौरवात्त्यज्यते,

विवृतिः ।

तथाहीति । तदेव प्रमाणमाह—शक्तिग्रहमिति । शक्तिग्रहमित्यनेन श्लोकेन सूचितमर्थं वृत्तिकारो वितत्य प्रतिपादयति—धातुप्रकृति-प्रत्ययादीनामिति । क्रियावाचकत्वं धातुत्वम् । प्रत्ययविधा-नोद्देश्यतावच्छेदकाक्रान्तत्वं प्रत्ययविधानावधित्वं वा प्रकृतित्वम् । भाष्येऽप्युक्तम्—तावेव सुप्तिङौ यौ ततः परौ सैव प्रकृतिराद्या—इति । ततो-विधानावधेः, या च तयोराद्या सैव प्रकृतिः स्पष्टमन्यत् । 'प्रती-यते विधीयते इति' प्रत्येति अर्थं बोधयतीति वा प्रत्ययस्तथा च प्रत्य-याधिकारपठितत्वे सत्यर्थबोधकत्वं तत्त्वम् । व्याकरणादिति । 'भूस-त्तायां वर्तमाने लडि'त्यादिव्याकरणादित्यर्थः । व्याक्रियन्ते प्रकृतिप्र-त्ययभेदेन व्युत्पाद्यन्ते शब्दा अनेनास्मिन्वेति करणेऽधिकरणे वा ल्युट् । क्वचित्—स्थले, बाधके—गौरवादिदोषे, त्यज्यते—शक्तिग्रह इत्य-नुषज्यते । वैयाकरणैराख्यातस्येति । तल्लक्षणन्तु 'भावप्रधानमा-ख्यातं' 'क्रियाप्रधानमाख्यात'मिति निरुक्तभाष्ययोर्यथासंख्यं वेदि-तव्यम् । कर्तरि शक्तिरिति । अत्रेदं बोध्यम्—लकारस्य त्रयोऽर्थाः कर्ता कालः संख्या चेति । तत्र कर्तेति पातञ्जलाः 'लः कर्मणि चेति' सूत्रे चकारेण कर्तुः परामर्शात् । कर्तृस्थाने व्यापार इति भाट्टाः । कृतिरिति नैयायिकाः । कर्त्रा—आख्यातवाच्यकर्त्रा । अभेदान्वय इति । 'सामान्यविशेषयोरभेदान्वयः' इति नियमादाख्यातवाच्यश्चैत्र एवेति तयोरभेदान्वयः । सामान्यविशेषत्वं कर्तृचैत्रयोर्यथासंख्यं वेदित-व्यम् । विक्लित्त्यनुकूलव्यापारानुकूलकृतिमांश्चैत्र इति बोधः । गौर-वादिति । यद्याख्यातस्य कर्तरि शक्तिः स्वीक्रियते तदा शक्यताव-च्छेदकः कर्तृनिष्ठो धर्मविशेषः कृतिरेव मन्तव्यः तस्याश्च प्रतिक-र्तृभिन्नत्वात् शक्यतावच्छेदकानामपि नानात्वं प्रसज्येतेति गौरवं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



किन्तु कृतौ शक्तिर्लाघवात् । कृतिश्चैत्रादौ प्रकारीभूय भासते । न च कर्तुरनभिधानाच्चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यम् । कर्तृसंख्यानभिधानस्य तत्र तन्त्रत्वात् । संख्याभिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः । कर्मत्वादीत्यस्येतराविशेषणत्वतात्पर्याविषयत्वमर्थः । तेन चैत्र इव मैत्रो गच्छतीत्यादौ न चैत्रे संख्यान्वयः । यत्र कर्मादौ

## विवृतिः ।

ततो न तत्र शक्तिग्रहः स्वीक्रियते । तर्हि कुत्र शक्तिग्रहो मन्तव्य इत्यत्राह—किन्त्विति । लाघवादिति । कृतित्वस्य शक्यतावच्छेदकत्वे तस्यैक्याल्लाघवमिति । तत्रैव शक्तिग्रहोऽप्युचितः । कृतिरिति । करणं कृतिः स्त्रियां क्तिन् । प्रकारीभूय-विशेषणतया, भासते-प्रतीयते । न च कर्तुरनभिधानादिति । 'अनभिहिते' इत्यधिकृत्य 'कर्तृकरणयोस्तृतीयेति' पाणिनिसूत्रेणानुक्ते कर्तरि तृतीयाविभक्तेरनुशासनादिति भावार्थः । तृतीया स्यात्–चैत्रेण पचतीत्यपि प्रयोगो दुर्वारः स्यान्न चेष्टापत्तिः चैत्रः पचतीत्यस्यैव साधुत्वात् चैत्रेण पचतीत्यस्यासाधुत्वाच्चेति शङ्कार्थः । न च पचतीति क्रियायोगे कर्तृवाचकचैत्रपदानन्तरं तृतीयाया असाधुत्वज्ञानमेव 'अनभिहिते' इत्यधिकारे कर्तृकरणयोरित्यनुशासनस्य प्रयोजनम्, तथा चासाधुत्वाच्चैत्रेण पचतीति प्रयोगो न भवति किन्तु चैत्रः पचतीति प्रयोगो भवतीति वाच्यम् । उक्तनियमपरतयापि तदलाभात् । तत्र–तृतीयाविभक्तौ, तन्त्रत्वात्–प्रयोजकत्वात्, एवं च चैत्रेण पचतीति प्रयोगस्य प्राप्तिर्नास्त्येव तृतीयाप्रयोजकस्य कर्तृसंख्यानभिधानस्यात्राभावात् । आख्यातस्य कृत्यादयोऽनेकेऽर्थाः तथा सति यत्राख्यातेन कर्तृनिष्ठसंख्यानभिहिता तत्रैव तृतीया नान्यत्रेति भावः । ननु तस्या उक्तानुक्तत्वं कथमुन्नेयमित्यत्राह–संख्याभिधानेति । इतरविशेषणत्वेति । इतरविशेषणत्वेन तात्पर्याविषयत्वविशिष्टः प्रथमान्तपदोपस्थाप्यः कर्ता संख्याभिधानयोग्य इति फलितोऽर्थः । संख्यान्वयः–गमधातूत्तरवर्त्त्येकत्वसंख्यान्वयः, किन्तु मैत्रे संख्यान्वयो भवति मैत्रस्याव्यवहितत्वात् चैत्रस्येवपदार्थसादृश्ये विशेषणत्वेन तात्पर्याविषयत्वाच्चेति भावः । कर्मादावित्यादिना तृतीयापरिग्रहः । तेन तण्डुलं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न विशेषणत्वे तात्पर्यं तद्वारणाय प्रथमान्तेति। यद्वा धात्वर्थातिरिक्ता-विशेषणत्वं प्रथमदलार्थः, तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रादेर्वारणम्। स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय च द्वितीयदलम्, तस्य द्वितीया-न्तोपस्थाप्यत्वाद्वारणामिति। एवं व्यापारेऽपि न शक्तिर्गौरवात्। रथो गच्छतीत्यादौ तु स्वव्यापारे आश्रयत्वे वा लक्षणा। जानातीत्यादौ तु

विवृतिः।

पचति चैत्रेण सुप्यत इत्यादौ यथाक्रमं तण्डुले धात्वर्थस्वापादौ च संख्यान्वयवारणाय प्रथमान्तपदोपस्थाप्य इत्युक्तमिति ध्येयम्। यद्वेति प्रकारान्तरं, प्रथमदलार्थः-कर्मत्वाद्यनवरुद्ध इत्येतस्य प्रथमदलस्यार्थः। तेन-प्रथमदलस्यान्यथार्थकरणेन चैत्रादेर्वारणमिति। अत्र चैत्रपदार्थस्य धात्वर्थातिरिक्ते इवपदार्थे विशेषणत्वादिति भावः। स्तोकं पचतीत्यादिना मृदु पचतीत्यादेः परिग्रहः। द्वितीयदलम्-प्रथमान्तपदोपस्थाप्यत्वम्। तस्य-स्तोकादेः। द्वितीयान्तेति। क्रियाविशेषणानां कर्मत्वमिति नियमात्। पतञ्जलिप्रभृतिभिरुक्तां लकारसामान्यस्य कर्तरि शक्तिं खण्डयित्वा भाट्टैरभिमतां लकारसामान्यस्य व्यापारे शक्तिमधुना खण्डयति-एवमिति। गौरवादिति। जन्यत्वादिघटितव्यापारस्यापि यत्नत्व(कृतित्व)जात्यपेक्षया गुरुभूतत्वादिति भावः। रथस्याचेतनत्वाद्यत्नशून्यत्वेनाह-व्यापारे-गमनानुकूलव्यापारे, गमनानुकूलव्यापारवान् रथ इति चात्र बोधः। ननूक्तप्रयोगे तादृग् व्यापारो न प्रतीयते किन्तु तदाश्रयत्वमेवेत्यरुचिं मनसि निधायाह—आश्रयत्वे वेति। गमनानुकूलव्यापाराश्रयत्वे वेत्यर्थः। लक्षणा-निरूढलक्षणा। जानातीति। चक्षुर्जानातीत्यर्थः। आश्रयत्वे-ज्ञानानुकूलव्यापाराश्रयत्वे। नश्यतीति। घटो नश्यतीत्यर्थः। प्रतियोगित्वे निरूढलक्षणेति। सा चासति प्रयोजने शक्यसम्बन्धः। केचित्त्वत्र वर्तमानोत्पत्तिकत्वं प्रतियोगित्वं च लडर्थमाहुराद्यम् नाशे प्रकारः द्वितीयं घटे प्रकारः। वर्तमानोत्पत्तिकत्वमेवार्थोऽस्तु धात्वर्थस्य नाशस्य घटे प्रातिपदिकार्थे साक्षादन्वयासम्भवात्। न च प्रतियोगित्वमेवार्थोऽस्तु इति वाच्यम्। चिरन-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



आश्रयत्वे, नश्यतीत्यादौ प्रतियोगित्वे निरूढलक्षणा। उपमानाद्यथा शक्तिग्रहस्तथोक्तम् । एवं कोशादपि शक्तिग्रहः सति बाधके क्वचित्त्यज्यते । यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोशेन व्युत्पादिता तथापि लाघवान्नीलादावेव शक्तिः, नीलादिरूपविशिष्टे तु लक्षणेति । एवमाप्तवाक्यादपि यथा कोकिलः पिकपदवाच्य इत्यादिशब्दात्पिकादिपदशक्तिग्रहः । एवं व्यवहारादपि । यथा प्रयोजकवृद्धेन घटमानयेत्युक्तम् । तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतः । तदवधार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं घटमानयेतिशब्दप्रयोज्यमित्यवधारयति । ततश्च घटं नय गामानयेत्यादावावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति ।

विवृतिः ।

ष्टेऽपि नश्यतीति प्रतीतिप्रसङ्गात् । यथा शक्तिग्रहस्तथेति । यत्तदोः प्रकारत्वमर्थः प्रकारवचने थाल्प्रत्ययश्च । उक्तमिति । उपमाननिरूपणावसरे इति शेषः । कोशादपीति । कोशश्च स्वसमानार्थबोधकः शब्दसमूहः शास्त्रम् । 'कोशोऽस्त्री कुड्मले शास्त्रे अर्थेऽनीके च मन्दिरे' इति भागुरिः । त्यागस्थलमुदाहरति यथेति । कोशेन—'गुणे शुक्लादयः पुंसि गुणि लिङ्गास्तु तद्वती'त्यमरकोशेन, व्युत्पादिता—बोधिता। लाघवादिति । नीलादिमत्त्वमपेक्ष्य नीलत्वादेः शक्यतावच्छेदकताङ्गीकारे परमलाघवादित्यर्थः । आप्तवाक्यादिति । प्रामाणिकवचनादित्यर्थः । 'आप्तः खलु साक्षात्कृतधर्मा यथा दृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टे'ति न्यायभाष्ये वात्स्यायनः । 'आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स' इति चरके पतञ्जलिः । प्रयोजकवृद्धेन—प्रेरणकर्त्राऽऽचार्यादिना, प्रयोज्यवृद्धेन—प्रेर्यशिष्यादिना, तदवधार्य—इयमस्य प्रवृत्तिर्ज्ञानजन्या प्रवृत्तित्वान्मत्प्रवृत्तिवदित्यनुमाय, यदुक्तम्—

'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इत्थं च भूतले नीलो घट इत्यादिशब्दान्न शाब्दबोधः—घटादिपदानां कार्यान्वितघटादिबोधे सामर्थ्यावधारणात् । कार्यताबोधं प्रति च लिङादानां सामर्थ्यात्तदभावान्न शाब्दबोध इत्यपि केचित् । तन्न । प्रथमतः कार्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात् । अत एव 'चैत्र पुत्रस्ते जातः कन्या ते गर्भिणी जाता' इत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति ।

## विवृतिः ।

इत्यादिना वाक्यपदीये । अवधारयति—निश्चिनोति, आवापोद्वापाभ्याम्—अन्वयव्यतिरेकाभ्याम् । घटं नयेत्यत्र घटपदसत्त्वे कंबुग्रीवादिमत्पदार्थबोधः । आनयपदव्यतिरेकेणानयनपदार्थबोधाभावः । गामानयेत्यत्र घटपदव्यतिरेकेण कंबुग्रीवादिमत्पदार्थबोधाभावः । आनयपदसत्त्वे आनयनपदार्थबोध इत्येवं रूपौ तौ । घटादिपदानामित्यारभ्य शक्तिं गृह्णातीत्यन्तस्य सामान्येन विशिष्टार्थस्य शक्तिमवधारयतीत्यर्थः । तदभावात्—कार्यताबोधकलिङादेरभावात् , न शाब्दबोधः—भूतले नीलो घट इत्यादाविति शेषः । केचित्—प्राभाकरादयः । परिहरति—तन्नेति परिहारहेतुमाह—प्रथमत इत्यादिना । लाघवेनेति । कार्यतान्वितघटशाब्दत्वापेक्षया घटशाब्दत्वस्य कार्यतावच्छेदकत्वे लाघवेनेत्यर्थ इति प्रकाशकृतः । तस्य—शक्त्यवधारणस्य, अत एव—कार्यत्वाविषयकबोधं प्रति पदानां हेतुत्वादेव । पुत्रस्ते जात इति । पुंनाम्नो नरकात्त्रायत इति पुत्रः 'नानेन पततीति' श्रुतेः । अनेन पुत्रेण जातेन सता पिता नरके न पततीति दुर्गटीका । कन्या ते गर्भिणीति । कन्या कुमारिका 'कन्या कुमारिका नार्यो'रिति विश्वकोशात् । ननु कन्या अथ च गर्भिणीत्यनुपपन्नं गर्भस्थितेरनन्तरं कन्यात्वनिवृत्तेरिति तु नाशङ्कनीयं या च प्रागभिसम्बन्धात्पुंसा सह सम्प्रयोगङ्गच्छति तस्यामपि कन्याशब्दो वर्तत एवेति भाष्यात् । विवाहविधिना विना पुरुषेण संयोगं प्राप्तापि कन्यात्वं न जहातीति कैय्यटाच्च । सुखदुःख इति । पुत्रस्य पुंनाम्नो नरकात्त्रायकत्वात्तज्जन्मनि सुखम् कन्याया गर्भे पापात् राजदण्डादिभयाद्वा दुः-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तथा च व्यभिचारात्कार्यान्विते न शक्तिः। न च तत्र तं पश्येत्यादि शब्दान्तरमध्याहार्यम्—मानाभावात्, चैत्र! पुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च। इत्थं च लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति। एवं वाक्यशेषादपि शक्तिग्रहः। यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः, कङ्गौ च म्लेच्छानाम्। तत्र हि 'अथान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति' इति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात्प्रयोगः—नानाशक्तिकल्पने गौरवात्। हर्यादिपदे तु विनिगमकाभावान्नानाशक्तिकल्पनम्। एवं विवरणादपि शक्तिग्रहः। विव-

विवृतिः।

खमित्यलम् प्रकृतविचारेण। तत्कारणत्वेन—सुखदुःखयोः कारणत्वेन, तद्धेतुतया—तादृशशाब्दबोधहेतुतया। व्यभिचारादिति। घटादिदिपदानां कार्यान्वितघटादिबोध एव सामर्थ्यमिति नियमस्य 'चैत्र पुत्रस्ते जात' इत्यादौ व्यभिचारदर्शनादित्यर्थः। चैत्र पुत्रस्ते जात इत्यादिपदैः लिङाद्यभावात् कार्यत्वाविषयकबोधस्यैवोत्पत्तेरनुभवादिति निष्कर्षः। तत्र—पुत्रस्ते जात इत्यादौ, तं—जातपुत्रम्। तदभावाच्चेति। तं पश्येत्यादिकार्यतावोधकपदाध्याहारासम्भवाच्चेत्यर्थः। इत्थं चेति। परमतनिराकरणपूर्वकं स्वमतोपसंहारो हि तदर्थः। लाघवादिति। यदुक्तं—

यत्तु कार्यान्विते शक्तिमाहुः प्राभाकरा न तत्।
युक्तं गौरवतः किञ्च लाघवात्सान्वितेपि न॥

अवधारयति शक्तिग्रहेच्छावान्वाल इति शेषः। यवपदस्येत्याक्षिप्रघट्टकस्य स्थूलार्थत इदं मर्म—आर्या यवशब्दं दीर्घशूके प्रयुञ्जते म्लेच्छास्तु कङ्गौ प्रयुञ्जते तमेव वुध्यन्ते तथाप्यार्यप्रसिद्धेर्बलवत्त्वात्।

वसन्ते सर्वशस्यानां जायते पत्रशातनम्।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥

इति विध्यर्थाकाङ्क्षया प्रवर्तमानात् वाक्यशेषाद्दीर्घशूकविशिष्टो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रणं तु तत्समानार्थपदान्तरेण तदर्थकथनम् । यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद्घटपदस्य कलशे शक्तिग्रहः । एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते । एवं प्रसिद्धपदसांनिध्यादपि शक्तिग्रहः । यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य कोकिले शक्तिग्रह इति । तत्र जा-

विवृतिः ।

यवपदवाच्य इति शक्तिनिर्णयः क्रियते एवमेव वेदे सिद्धान्तितम् । कङ्गौ तु म्लेच्छानां प्रयोगः शक्तिभ्रममूलक उभयत्र शक्तिकल्पने गौरवात् हयादिपदे तु कोषस्य हरौ शक्रादौ च तुल्यत्वान्न विनिगमकत्वं यवपदे च वाक्यशेषस्यैव तत्त्वमिति ॥ 'यथा वा 'स्वाराज्यकामोऽग्निष्टोमेन यजेते'त्यादिविधिशेषीभूतेभ्यः यन्न दुःखेन संभिन्नमित्यादिवाक्येभ्यः स्वरादिपदस्य । तत्समानार्थकपदान्तरेणेति । केन चिदुक्तं भो घटमानय स घटपदार्थाभिज्ञोऽपि प्रयोज्यः परं कलशपदेनेति तद्बोधनार्थं तत्पर्यायवाचकं कलशपदं पुनरुक्तं स च तमबोधीत्येतद्विवरणरूपमभ्यूहितव्यम् । आख्यातस्य-पचतीत्यस्य, यत्नार्थकत्वं–यत्नत्वविशिष्टे शक्तत्वम् । कल्प्यतेऽनुमीयते । प्रसिद्धपदसांनिध्यादिति । प्रसिद्धपदस्य–गृहीतसंकेतपदस्य, सांनिध्यात्–साहचर्यात् समीपोच्चारितत्वादित्यर्थः । भ्रमरादौ तादृशयोग्यतासत्त्वेऽपि वक्तृतात्पर्यविशेषज्ञानाभावान्न शक्तिग्रहः । वस्तुत इह सहकारतरौ मधुरं पिको रौतीत्युदाहरणं न सहृदयहृदयमारोढुमीष्टे तिङर्थे धर्मिण्यभेदेन नामार्थान्वयस्याव्युत्पन्नत्वात्, प्रत्यक्षसिद्धकोकिलत्वजात्यवच्छिन्न एव लाघवेन पिकशब्दस्य शक्त्यवच्छेदाच्च । नीरूपस्पर्शवान्वायुरित्यादिकन्तु युक्तम् । व्याकरणोपमानादिभिर्यथा शक्तिग्रहो भवति तत्सर्वं विज्ञातम् । संप्रति शक्तिग्रहो जातौ वा व्यक्तौ वा स्वीकर्त्तव्य इति न ज्ञातमिति तद्वक्तव्यमित्याकांक्षायां स्वमतमन्ते प्रदर्शयितुं निराकर्तुमन्येषां च मतमनुवदति–तत्र जातावेव शक्तिग्रह इत्यादिना । सर्वेषु पदार्थेषु जातिमेव निमित्तं कृत्वा तत्प्रवृत्तेरभ्युपगमादिति भावः । व्यक्तौ शक्तिग्रहबाधकं हेतुद्वयमुपन्यस्यति-व्यभिचारादानन्त्याच्चेति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तावेव शक्तिर्न तु व्यक्तौ व्यभिचारादानन्त्याच्च । व्यक्तिं विना च जातिभानस्यासंभवाद्व्यक्तेरपि भानमिति केचित् । तन्न । शक्तिं विना व्यक्तिभानानुपपत्तेः । न च व्यक्तौ लक्षणा, अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात् । न च व्यक्तिशक्तावानन्त्यं, सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात् । न चाननुगमः, गोत्वादेरेवानुगमकत्वात् । किंच गौः शक्येति शक्तिग्रहो यदि तदा व्यक्तौ शक्तिः, यदि तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारपदार्थस्मरणं शाब्दबोधश्च न स्यात्—

विवृतिः ।

अत्रायं निष्कर्षः । यदि व्यक्तौ शक्तिग्रहस्तदा अगृहीतशक्तिकगोपिण्डस्येव घटादेरपि गोपदात्प्रतीतिः स्यात् अगृहीतशक्तिकत्वस्य तौल्यादिति व्यभिचारः । यत्र व्यक्तौ शक्तेरग्रहस्तत्रापि शाब्दधीरुदेति परं तत्कारणीभूतशक्तिज्ञानं नास्तीति भावः । अथ व्यक्तिभेदेन शक्तिभेदस्य स्वीकारात् व्यक्तीनामानन्त्याच्छक्तेरपि तत्त्वमित्यानन्त्य दोषः । व्यक्तिं विनेति । अर्थक्रियाकारितया व्यक्तेरेव प्रवृत्तिनिवृत्तियोग्यत्वाद् गवादिपदेन लोके व्यक्तेरवबोधाच्चेति भावः । व्यक्तेरपि भानमिति । भानमत्रानुमानं—तच्च जातिर्व्यक्त्याश्रिता जातित्वादित्यात्मकम् । केचिदाहुर्भानमत्र नानुमानं व्याप्त्यादिज्ञानव्यतिरेकेणापि व्यक्तेरनुभवात् किंतु स्मरणमेव । केचित्-मीमांसकाः । शक्तिं विनेति । शक्तिरहिताया व्यक्तेर्भानायोगाद् व्यक्तौ शक्त्यनङ्गीकारे शाब्दबुद्धेरनिर्वाहाश्चेति भावः । न चेति मीमांसकस्योट्टङ्कनम् । अनुपत्तीति समाधानकर्तुर्हेतुः । अन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा लक्षणाबीजस्य तत्राभावान्न लक्षणेति भावः । ननु व्यक्तौ शक्तिस्वीकारे व्यक्तीनामानन्त्याच्छक्तेरप्यानन्त्यमित्याशङ्क्य समाधत्ते—नचेति । शक्तेः ईश्वरेच्छारूपशक्तेः; अननुगमः—अवच्छेदकत्वधर्मस्याभावरूपोऽननुगमः । गोत्वादेरेवानुगमकत्वादिति । एवं च शक्यतावच्छेदकगोत्वैक्येन एकव शक्तिरिति नाननुगमशङ्का शक्योत्प्रेक्षितुमिति भावः । गौः शक्येति । गोपदशक्येत्यर्थः । शक्तिग्रहः—शक्तिज्ञानं, एवमग्रेपि । गोत्वप्रकारकपदार्थस्मरणं—गोपदात् गोत्वप्रकारकपदार्थस्यार्थात् गोव्यक्तेः स्मरणम्, शाब्दबोधः—गोत्वप्रकारकगाविशेष्यकशाब्दबोधः । समान-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधं प्रति च हेतुत्वात् । किं च गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यम् । गोत्वत्वं तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वम् । तथा च गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात्तवैव गौरवम् । तस्मात्तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति ।

शक्तं पदं, तच्चतुर्विधम्—क्वचिद्यौगिकं क्वचिद्रूढं क्वचि

विवृतिः ।

प्रकारकत्वेनेत्यादि । यत्प्रकारकं यद्विशेष्यकं शब्दशक्तिज्ञानं तस्य तत्प्रकारकपदार्थस्मृतौ तत्प्रकारकतद्विशेष्यकशाब्दबुद्धौ च कारणत्वमित्यस्ति नियमः प्रकृतेऽपि गोत्वप्रकारकपदार्थस्मृतौ तादृक्शाब्दबोधे च गोत्वप्रकारकगोविशेष्यकशक्तिज्ञानस्य कारणत्वमिति कार्यकारणभावोऽवसेयः । किंचेति । अथ चेत्यर्थः 'किमथ व्यतिदेशे स्यादि'त्यजयः । यदि शक्तिरिति । गोपदस्येति शेषः । तदेति । गोत्वं शक्यं गोत्वत्वं शक्यतावच्छेदकं वक्तव्यमित्यर्थः । ननु गोत्वत्वं किं स्वरूपमभिप्रेयीत्यत्राह—गोत्वत्वं त्विति । गवेतरेति । गोव्यक्त्यतिरिक्तव्यक्तिषु समवायेनावृत्तित्वे सति गोव्यक्तिमात्रे समवायेन वृत्तित्वं तत्त्वम् । ननु किमनेनायातमित्यत्राह-तथा चेति । तवैव—जातिशक्तिवादिन एव । स्वोक्तमुपसंहर्तुमाह—तस्मादिति । विशिष्टव्यक्तावित्यत्रैवकारोऽपि अध्याहार्यस्तस्य च पृथक् २ शक्तिस्वीकारत्वव्यवच्छेदोऽर्थः । अत्रार्थे 'जात्याकृतिव्यक्तयः पदार्थः' इत्यत्र पदार्थगतैकवचनस्थो भगवानक्षपादोऽपि प्रमाणम् । पदार्थो गवादिः पदस्यार्थः त्रिष्वेकशक्तेर्लाभार्थमेकवचनम् । सूत्रे त्रितयनिष्ठस्य पदशक्तिरूपपदार्थस्यैकत्वं विवक्षितमिति तत्र विशेष्यपदस्य बहुवचनान्तत्वेऽपि विशेषणपदस्यैकवचनान्ततोपपत्तिरित्यादि सविशेषणमाचार्यगदाधरेण व्युत्पत्तिवादेऽभिहितम् । नव्यमतमस्योक्तमेवेत्यलमत्राधिक्येन मूलार्थजिज्ञासूनाम् ।

शक्तमिति । निरूपकतासंबन्धेन शक्तिविशिष्टमित्यर्थः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



योगरूढं क्वचिद्यौगिकरूढम् । तथाहि—यत्रावयवार्थ एव बुध्यते तद्यौगिकम्, यथा पाचकादिपदम् । यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढम्, यथा गोमण्डलादिपदम् । यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम्, यथा पङ्कजादिपदम् । तथाहि—पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृत्वरूपमर्थं बोधयति, समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति । न च केवलयाऽवयवशक्त्या कुमुदे प्रयोगः स्यादिति वाच्यम् । रूढिज्ञानस्य केवलयौगिकार्थज्ञाने प्रतिबन्धकत्वादिति प्राञ्चः ।

विवृतिः ।

न्यायनये द्विविधं पदं मुख्यं गौणं चेति । यच्छक्तिवृत्त्या यमर्थमुत्थापयति तत्तस्मिन्नर्थे मुख्यं यथा गोघटादिव्यक्त्युत्थापकं गोघटादिपदं । तस्यापि चातुर्विध्यमाह—तच्चतुर्विधमिति । चतस्रो यौगिक-रूढ-योगरूढ-यौगिकरूढ-लक्षणा विधा प्रकारा अस्य तत्तथाभूतम् । यत् लक्षणावृत्त्या यमर्थमुत्थापयति तत्तस्मिन्नर्थे गौणं यथा गङ्गायां घोष इत्यत्र तीरोपस्थापकं गङ्गापदम् । क्वचित्—किंचित् । सामान्यतो मुख्यस्य चातुर्विध्यमुक्त्वा संप्रति तल्लक्षणोदाहरणान्याह तथाहीत्यादिना । अयववशक्त्यैवार्थबोधकत्वं यौगिकत्वम् । लक्षणमुक्त्वोदाहरणमाह—यथेति । एवमग्रेऽपि बोध्यम् । पाचकादीत्यादिना पाठकादेः संग्रहः । अत्र पाचकादिपदं अवयवशक्त्या पाककर्तृबोधकम् । अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम् । गोमण्डलादीति । आदिना रथन्तरमित्यादिकमुदाहार्यम् । क्वाचित्को मण्डपादिपाठस्तु प्रामादिक इति प्रकाशकृत्त यदाह तदसत् इह गमनमण्डपानकर्तृत्वरूपं योगार्थं विनैव व्यक्तिविशेषगृहविशेषयोरवगमेन संभवदुदाहरणकत्वात् गोपदं गवि रूढं मण्डपपदं गृहविशेषे रूढमिति भाष्यादौ तथैव दर्शनाच्च । अवयवार्थसंवलितसमुदायशक्त्यार्थबोधकत्वं योगरूढत्वम् । अवयवशक्त्येति । अवयवाः पङ्कः जनिः इत्यादयः । समुदायशक्त्येति । समुदायो हि पङ्कज इति । एवं च पङ्कजनिकर्तृ पद्ममिति समग्रो बोधः । कुमुदे—श्वेतोत्पले, 'सिते कुमुदकैरवे' इत्यनुशासनात् । प्रयो-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वस्तुतस्तु समुदायशक्त्युपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुरन्वयो भवति सांनिध्यात्। यत्र तु रूढ्यर्थस्य बाधः प्रतिसंधीयते तत्र लक्षणया कुमुदादेर्बोधः। यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानं पद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण निर्वाह इत्याहुः। यत्र तु स्थलपद्मादाववयवार्थबाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः। यदि तु स्थलपङ्कजं विजातीयमेव तदा लक्षणयैवेति। यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम्, यथोद्भिदादिपदम्। तत्र हि उद्भेदनकर्ता तरुगुल्मादिरपि बुध्यते यागविशेषोऽपीति ॥८१॥

लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः।

लक्षणेति। गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसंधीयते तत्र लक्षणया तीरस्य बोध इति। सा च शक्यसम्बन्धरूपा। तथाहि—प्र-

विवृतिः।

गः स्यादिति। पङ्कजपदस्येति शेषः। प्रतिबन्धकत्वादिति। अतो न पङ्कजपदमवयवशक्त्या कुमुदे प्रयोक्तुमुचितमिति प्राचामाचार्याणां हृदयम्। मणिकृन्मतं दर्शयति—वस्तुतस्त्विति। सान्निध्यादिति। रूढ्यर्थस्य संनिहितोपस्थितिकत्वादित्यर्थः। बोधे—कुमुदबोधे, बोधः—पद्मत्वेन रूपेण पद्मत्वबोधः। अवयवशक्तिमात्रेणेति। मात्रपदं लक्षणावश्यकतां वारयति। निर्वाहः—पङ्कजनिकर्तृतया कुमुदशाब्दबोधस्य निर्वाहः। स्थलपद्मादौ—नीरसरसोत्पन्नपद्मादौ। अवयवार्थबाध इति। पङ्कजशब्दस्येति शेषः। बोधः—पद्मबोधः, यदि तु स्थलपङ्कजं विजातीयमेव तदा लक्षणैवेत्यपि बोध्यम्। अवयवशक्त्या समुदायशक्त्या चार्थबोधकत्वं यौगिकरूढत्वम्। तत्रोर्ध्वं भिनत्तीति व्युत्पत्त्यावयवशक्त्योद्भिद्वृक्षलतादिर्बुध्यते समुदायशक्त्या तूद्भिन्नामकयागविशेषः ॥८१॥

शक्यसम्बन्ध इति। विषयतासम्बन्धेन शक्याश्रयत्वं शक्यत्वम्। शक्यस्य—शक्त्योपस्थापितस्यार्थस्य, सम्बन्धस्तत्सम्बन्धिनि सम्बन्ध इत्यर्थः। शक्यादशक्योपस्थितिरपि लक्षणा। तत्र शा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणम्, ततः शाब्दबोधः। परंतु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात्–यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात्, तत्र च यष्टिप्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा। एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा। सर्वतो दधिरक्षायास्तात्पर्यविषयत्वात्। एवं छत्रिणो यान्तीत्यादौ छत्रि-

विवृतिः।

शक्याच्छक्यसम्बन्धज्ञानात् सङ्गतिः स्पष्टैव। तीरस्य स्मरणमिति। गङ्गापदवाच्यप्रवाहरूपशक्यसम्बन्धस्य तीरे सत्त्वात्तादृशशक्यसम्बन्धरूपलक्षणायाः प्रतीतेः गङ्गापदात्तीरोपस्थितिरित्यर्थ एवं श्वेतो धावतीत्यादौ बोध्यम्। शाब्दबोधः–गंगातीरवृत्तिर्घोष इति शाब्दबोधः। अन्वयानुपपत्तिस्तात्पर्यानुपपत्तिश्च लक्षणाबीजमिति प्राचां मतमपवदति–परन्तु यदीति। तत्प्रवेशे–यष्टिप्रवेशे। यष्टिधरेषु लक्षणेति। अत्र यष्टिधरान् प्रवेशयेत्येव यष्टीः प्रवेशयेत्यस्य शाब्दबोधात्। इयं जहत्स्वार्था लक्षणोच्यते। दध्युपघातके–काकविडालादिसाधारणदध्युपघातकत्वविशिष्टे। सर्वत इति। दध्युपघातकत्वावच्छिन्नादित्यर्थः। यत्र काकमात्रे तात्पर्यं न तत्र लक्षणा। छत्रिण इति। छत्रमेषामस्तीत्यर्थे 'अत इति ठनौ' इतीनिप्रत्ययः। एकसार्थवाहित्वे–एकसार्थवाहित्वविशिष्टे। अस्याः संज्ञान्तरमाह–इयमेवाजहत्स्वार्थेति। न जहति पदानि स्वार्थं शक्यार्थं यत्र साऽजहत्स्वार्था, जहति पदानि स्वार्थं शक्यार्थं यत्र सा जहत्स्वार्था पूर्वमुक्तैव। स्वशब्दस्य सर्वनामत्वात् पूर्वनिपाते प्राप्ते भाष्यप्रयोगाद्राजदन्तादित्वाद्वा न पूर्वनिपातः। लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका जहत्स्वार्था, लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिकाऽजहत्स्वार्थेत्यपि बोध्यम्। नियमो न स्यादिति। गङ्गातीरवृत्तिर्घोष इति बोधस्य गङ्गावृत्तिर्मीन इति बोधस्य वाऽयाधादिति भावः। गङ्गायां घोष इत्यत्र तात्पर्याभावे कुतो गङ्गापदेऽपि स्वार्थसम्बन्धिनि काकादौ न लक्षणा, तावताऽप्यन्वयानुपपत्तिशान्तेरतस्तात्पर्यानुपपत्तिरेव लक्षणाबीजं घोषपदस्य मीनादौ तु न

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पदस्यैकसार्थवाहित्वे लक्षणा । इयमेवाजहत्स्वार्था लक्षणेत्युच्यते—एकसार्थवाहित्वेन रूपेण छत्रितदन्ययोर्बोधात् । यदि चान्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा क्वचिद्गङ्गापदस्य तीरे क्वचिद्घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात् । इदं तु बोध्यम् । शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः । यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम् । अत एव लक्ष्यतावच्छेदके न लक्षणा—तत्प्रकारकबोधस्य तत्र लक्षणां विनाप्युपपत्तेः । परंतु एवंक्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात्तत्प्रकारकशक्यार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम् । यत्र तु शक्यार्थस्य परंपरासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते, यथा द्विरेफादिपदे रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते, भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते । तत्र लक्षितलक्षणा । किन्तु लाक्षणिकं पदं नानुभावकं लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम् । शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थशाब्दबोधं प्रति पदानां सामर्थ्यावधारणात् । वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणाऽपि ना-

## विवृतिः ।

लक्षणा 'न विधौ परः शब्दार्थ' इत्युक्तेः । तेनैव—गङ्गातीरत्वेनैव, स्मरणं—शाब्दबोधः, लक्ष्यतावच्छेदके—तीरत्वादौ, तत्प्रकारकबोधस्य—तीरत्वप्रकारकतीरविशेष्यकबोधस्य । तत्प्रकारकशक्यार्थस्मरणं प्रति तत्पदस्येति । घट इत्यादौ—घटत्वप्रकारकघट इति स्मृतौ, घटपदस्येत्यर्थः । विभावनीयमिति । लक्ष्यतावच्छेदके लक्षणानङ्गीकारे शक्यतावच्छेदके शक्त्यङ्गीकारे कारणं मृग्यमिति भावः । लक्षितलक्षणां जहत्स्वार्थायामेवान्तर्भावयन्नाह—यत्र त्विति । द्विरेफादिपद इति । द्विरेफः शब्दायते इत्यादिप्रयोगे पूर्वं द्विरेफपदेन रेफद्वयघटितं भ्रमरपदं लक्ष्यते पुनश्च भ्रमरपदेन स्वशक्यसम्बन्धीजन्तुविशेषरूपोऽर्थो लक्ष्यते इति भवति तत्र लक्षितलक्षणेति निर्गलितोऽर्थः । नानुभावकम्—न शाब्दबोधजनकं, पदान्तरं—घोषादिपदम् ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्ति । यत्र गभीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा । गभीरापदार्थस्य नद्या सहाभेदेनान्वयः क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात् । यदि तत्रैकदेशान्वयोऽपि न स्वीक्रियते तदा नदीपदस्य गभीरनदीतीरे लक्षणा गभीरापदं तात्पर्यग्राहकम् । बहुव्रीहावप्येवम् । तत्र हि चित्रगुपदादौ यद्येकदेशान्वयः स्वीक्रियते तदा गोपदस्य गोस्वामिनि लक्षणा गवि चित्राभेदान्वयः । यदि त्वेकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा चित्रापदं तात्पर्यग्राहकम् । एवमारूढवानरो वृक्ष इत्यत्र वानरपदस्य वानरावेशकर्मणि लक्षणा, आरूढपदं तात्पर्यग्राहकम् । एवमन्यत्रापि बोध्यम् । तत्पुरुषे तु पूर्वपदे लक्षणा । तथाहि—राजपुरुषादिपदे रा-

विवृतिः ।

इतरपदार्थान्वितस्येति । इतरपदार्थेन—तीरादिनाऽन्वितः स्वो घोषादीत्यर्थः । पदानां—घोषादिपदानाम् । अभेदेनान्वय इति । गभीराभिन्ना या नदी तादृशनदीतीरे घोष इत्याकारकोऽन्वय इत्यर्थः । क्वचित्—चैत्रस्य गुरुकुलमित्यादिस्थले, अत एव 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति' नियमस्त्यज्यते । वस्तुतस्त्वयं नियमः संख्यातिरिक्तस्थलार्थमस्ति संख्यायास्तु एकदेशेनाप्यन्वयो भवति संपन्नो व्रीहिरित्यादिप्रयोगदर्शनादित्याभिप्रायेणाह—यदीति । तत्र—गभीरायां नद्यां घोष इत्यत्र। तात्पर्यग्राहकमिति । नदीपदं गभीरनदीतीरविषयकबोधजनकं भवतु इतीच्छारूपतात्पर्यग्राहकमित्यर्थः। बहुव्रीहाविति । 'शेषो बहुव्रीहि'रित्यधिकारविहितत्वं बहुव्रीहित्वम् । एवं—अवयवलक्षणैव न तु वाक्ये लक्षणेत्यर्थः । गोस्वामिनीति । प्रकाशकृन्मते त्वत्र गोमतीत्येव पाठस्तस्य गोस्वामिनीति व्याख्याकरणात् । तात्पर्यग्राहकमिति । गोपदं चित्रगोस्वामिबोधजनकं भवतु इतीच्छारूपतात्पर्यग्राहकम्, अन्यथा गोपदस्य गोस्वामिनि लक्षणायां तदेकदेशे गवि चित्राभेदान्वयो न स्यात् 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'त्युक्तिविरोधादिति । वानरावेशकर्मणीति । आवेश—आरोहणम्, तात्पर्यग्राहकत्वमुक्तदिशावसेयम् । तत्पुरुषे तु पूर्वपदे लक्षणेत्यनेन सूचितमर्थं तथाहीत्यादिना प्रक-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जपदार्थेन पुरुषादिपदार्थस्य साक्षान्नान्वयो निपातातिरिक्तनामार्थयोर्भे-
देनान्वयबोधस्याव्युत्पन्नत्वात्, अन्यथा राजा पुरुष इत्यत्रापि तथान्व-
यबोधः स्यात् । घटो न पटः इत्यादौ घटपटाभ्यां नञः साक्षादेवा-
न्वयान्निपातातिरिक्तेति । नीलो घट इत्यादौ नामार्थयोरभेदसम्बन्धेना-
न्वयाद्भेदेनेति । न च राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्य-

विवृतिः ।

रणेन वितत्य प्रतिपादयति—राजपदार्थेनेति । वृद्धो यूनेति वत्सहा-
र्थे तृतीया । विपक्षे दोषमाह—अन्यथेति । निपातातिरिक्तनामार्थ-
योर्भेदेनान्वयस्वीकार इत्यर्थः । तथा—भेदेनान्वयबोधः, राजा पुरुष
इत्यत्र राजपदजन्यराजोपस्थितिः पुरुषपदजन्यपुरुषोपस्थितिः पुरुषे
राजसम्बन्धयोग्यतारूपयोग्यताज्ञानमप्यस्ति राजसम्बधिपुरुष-
विषयकबोधो भवतु इति तात्पर्यज्ञानमप्यस्त्येवेति भेदान्वयबो-
धकसामग्रीसत्त्वे कथं न भेदान्वयबोधः सामग्रीसत्त्वे कार्यावश्यंभा-
वनियमादिति भावः । निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधो न
भवतीति मते तु न क्वापि दोषो दृष्टिपथे पथिकायत इति दिक् । न-
ञः—नञर्थान्योन्याभावस्य । साक्षादेवान्वयादिति । पटो न घट इत्य-
स्य घटप्रतियोगिकभेदवान् पट इत्येवार्थस्तथा चात्र स्वानुयोगिक-
त्वसम्बन्धेन पटस्य सत्त्वात् साक्षात् सम्बन्धेनैवान्वय इति । नी-
लो घट इत्यादावित्यादिना पीतो घटः सुन्दरो घट इत्यादेः संग्रहः ।
अभेदसम्बन्धेनान्वयादिति । तथा चायमभेदान्वयप्रकारः—समवाये-
नाभेद्सम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वाव-
च्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति समवायेनाभेदसम्ब-
न्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्य-
ताकोपस्थित्यादिकं कारणम् । यद्वा घटत्वावच्छिन्नविशेष्यतानिरू-
पिताऽभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन तत्पुरुषी-
यशाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वावच्छिन्नविशेष्यतानिरूपिता-
ऽभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन तत्पुरुषीयोप-
स्थित्यादिकं कारणमेवमन्यदप्यूह्यम् । लुप्तविभक्तेः—राजपदो-
त्तरवर्त्तिलुप्तषष्ठीविभक्तेः । स्मरणं कल्प्यमिति । एवं
चात्र लुप्तविभक्तेः स्वरूपमर्थस्तत्र राजपदार्थान्वयः स्वरूपस्य

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मिति वाच्यम्। अस्मृतविभक्तेरपि ततो बोधोदयात्। तस्माद्राजपदादौ राजसम्बन्धिनि लक्षणा। तस्य च पुरुषेण सहाभेदान्वयः। द्वन्द्वे तु धवखदिरौ छिन्धीत्यादौ धवः खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुध्यते। तत्र न लक्षणा। न च साहित्ये लक्षणेति वाच्यम्। साहित्यशून्ययोरपि द्वन्द्वदर्शनात्। न चैकक्रियान्वयित्वरूपं साहित्यमस्तीति वाच्यम्।

विवृतिः।

पुरुषेऽन्वयस्तने राजनिरूपितस्वत्ववान् पुरुष इति वाक्यार्थः स्यादिति भावः। अस्मृतविभक्तेरपीति। प्रकृतिप्रत्ययानभिज्ञपुरुषस्यापीत्यर्थः। ततः–राजपुरुष इत्यतः, तस्य च–राजसम्बन्धिनश्च। पुरुषेण सहाभेदान्वय इति। एवं च राजसम्बन्ध्यभिन्नः पुरुष इति वाक्यार्थः सम्पद्यते। मणिकृतस्तु राजसम्बन्ध एव लक्षणेत्युररीचक्रुर्युक्तायुक्तत्वमन्यतो द्रष्टव्यम्। द्वन्द्वे तु–पूर्वतो भेदबोधकस्तुशब्दः, तत्र लक्षणानाश्रयणमेव च भेदः। धवखदिरौ छिन्धीत्यादावित्यादिना यथा धवखदिरावित्यत्र द्वित्वान्वयो भवति तथा 'रूपरसौ' इत्यादिद्वन्द्वस्थलेऽपि द्वित्वान्वयो विज्ञेयः। धवखदिरौ च वृक्षविशेषौ बोध्यौ। अत्र धवखदिरयोरेकस्मिन्नेव द्वित्वेऽन्वयस्तथा चैतादृशपारस्परिकप्रयोज्यप्रयोजकभावरूपैकवाक्यतायाः सत्त्वादत्र समासो जातः यद्यत्र धवनिष्ठविशेष्यतानिरूपिता द्वित्वनिष्ठा प्रकारता भिन्ना स्यात् खदिरनिष्ठविशेष्यतानिरूपिता च द्वित्वनिष्ठा प्रकारता भिन्ना स्यात्तदा तादृशप्रकारतयोः परस्परात्वाभावात् परम्पराप्रयुक्तप्रयोज्यप्रयोजकभावो न स्यादित्येकवाक्यताया असत्त्वात्समासो न स्यादेव भवति च समास इति धवखदिरोभयनिष्ठविशेष्यताद्वयनिरूपिता द्वित्वनिष्ठा एकैव प्रकारतास्तीति स्वीकार्यमित्यास्तां विस्तरः। विभक्त्यर्थद्वित्वप्रकारेण–द्वितीयाविभक्त्यर्थद्वित्वप्रकारेण। मीमांसकः शङ्कते–न चेति। साहित्ये धवखदिरोभयसहवृत्तित्वरूपसाहित्याश्रये, यदि खदिरपदस्य लक्षणाङ्गीक्रियते तदा का हानिरिति शंकितुराशयः। समाधत्ते—साहित्यशून्ययोरपि द्वन्द्वदर्शनादिति। हिमविन्ध्यावित्यादाविति शेषः। ततो न लक्षणेति समाधातुराकूतम्। ननु कृतं सहवृत्तित्वरूपसाहित्येन परन्तु धवखदिरोभयपदार्थनिष्ठं यत्साहित्यमेकक्रियान्वयित्वरूपं तच्चात्र

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



क्रियाभेदेऽपि धवखदिरौ पश्य छिन्धीत्यादौ तद्दर्शनात्साहित्यस्याननुभवाच्च । अत एव राजपुरोहितौ सायुज्यकामौ यजेतामित्यत्र लक्षणाभावाद्द्वन्द्व आश्रीयते तस्मात्साहित्यं नार्थः, किन्तु वास्तवभेदो यत्र तत्र द्वन्द्वः । न च नीलघटयोरभेद इत्यादौ कथमिति वाच्यम् । तत्र नीलपदस्य नीलत्वे घटपदस्य घटत्वे लक्षणा, अभेद इत्यस्य चाश्रयाभेद इत्यर्थात् । समाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयत इत्युच्यते तदाऽहिनकुलमित्यादौ परपदेऽहिनकुलसमाहारे लक्षणा पूर्वपदं तु तात्पर्यग्राहकम् । न च भेरीमृदङ्गं वादयेत्यत्र कथं समाहारस्यान्वयः,

विवृतिः ।

न बाधितमिति तदेव द्वन्द्वसमासार्थोऽभ्युपेय इत्याशङ्क्य समाधत्ते-क्रियाभेद इत्यादिना । साहित्यस्येति । भवदुक्तैकक्रियान्वयित्वरूपस्येत्यर्थः । अननुभवाच्चेति । धवखदिरौ छिन्धीत्यादिवाक्यबोध इति शेषः । नार्थः-न कस्यापि पदस्यार्थः । न द्वन्द्वसमासार्थो वा । अत एवेति । द्वन्द्वसमासे लक्षणाभावादेवेत्यर्थः । राजपुरोहिताविति । राजपदार्थः प्रसिद्धः । पुरोहितः पुरोऽग्रे सर्वकर्मस्वेनं दधतीत्युक्तः शान्तिपुष्टिकरो द्विजः । तथाच कामन्दकः 'पुरोहितस्तु विज्ञेयः शान्तिपुष्टिकरो द्विज' इति । सायुज्यकामाविति । सायुज्यं-मुक्तिः, यथा यजनेन भवति तथा ब्रह्मज्ञानादिनापि । तथा चानुश्रूयते—

ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा ।
वासः पुंसां कुरुक्षेत्रे मुक्तिरुक्ता त्वनेकधा ॥

ननु यदि द्वन्द्वे न लक्षणा तदा कर्मधारयाद् द्वन्द्वस्य भेद एव क इत्यत आह-किन्त्विति । वास्तवो भेदः—पदार्थद्वयस्येति शेषः । ननु यदि यत्र वास्तवो भेदस्तत्रैव द्वन्द्वस्तदा नीलघटयोरभेद इत्यादौ कथं द्वन्द्व इत्याशङ्कते-न चेति । नन्वभेद इति न समीचीनं नीलत्वघटत्वयोरभेदाभावादित्याशङ्क्य अभेदपदं व्याचष्टे-अभेद इत्यस्येति । इत्यर्थादिति पदं नीलत्वं घटत्वमित्यग्रेऽपि योज्यम् । परपदे-नकुलपदे, पूर्वपदमहिपदम् । कथं समाहारस्यान्वय इति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अपेक्षाबुद्धिविशेषरूपस्य तस्य वादनासंभवादिति वाच्यम्'। परंपरासंब-न्धेन तदन्वयात्। एवं पञ्चमूलीत्यादावपि। परे तु अहिनकुलमित्यादौ अहिर्नकुलश्च बुध्यते प्रत्येकमेकत्वान्वयः, समाहारसंज्ञा च यत्रैकत्वं नपुंसकत्वं च प्राणितूर्येत्यादिसूत्रेणोक्तं तत्रैव, अन्यत्रैकवचनमसाध्वि-त्याहुः। पितरौ श्वशुरावित्यादौ पितृपदे जनकदम्पत्योः श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा। एवमन्यत्रापि। घटा इत्यादौ तु न लक्षणा, घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात्। कर्मधारयस्थले तु नीलोत्पलमित्यादावभेदसम्बन्धेन नीलपदार्थ उत्पलपदार्थे प्रकारः, तत्र

विवृतिः।

कथं समाहारबोध इत्यर्थः। तस्य—समाहारस्य, परम्परासम्बन्धेन—स्वाश्रयवृत्तित्वरूपेण, अत्र स्वपदेन तादृक् समाहारस्य ग्रहणं त-दाश्रयो विषयतया भेरीमृदङ्गादिस्तद्वृत्तित्वं वादनस्येति समन्वयः। तदन्वयात्—वादनकर्मत्वान्वयात्। एवं पञ्चमूलीत्यादावपीति। उत्त-रपदे समाहारलक्षणेति शेषः। परंतु—अभिनवतार्किकास्तु, इति व-दन्तीत्यग्रिमेणान्वयः। बुध्यत इति। द्वयोरेव बोधो न तु समाहार-स्येत्यर्थः। प्रत्येकमेकत्वान्वय इति। एकवचनार्थे एकत्वान्वय इत्यर्थः। एकत्वसंख्याया अहौ नकुले च पृथक् पृथगेवान्वयस्य द-र्शनान्नात्र समाहारावकाश इति भावः। तर्हि समाहारसंज्ञया क्व भाव्यमत आह—समाहारसंज्ञा चेति।

प्राणितूर्येत्यादिसूत्रेण—'द्वन्द्वश्च प्राणितूर्यसेनाङ्गाना'मिति पाणि-नीयसूत्रेण। अन्यत्रेति। समाहारातिरिक्तद्वन्द्वे इत्यर्थः। पितराविति। माता च पिता च पितरावित्येकशेषः। अन्यत्रापीति। 'पुमान् स्त्रिये'-त्यनेनैकशेषस्थलेऽपि लक्षणाभ्युपगन्तव्येत्यर्थः। न लक्षणेति। घटा इत्यादिस्थले लक्षणया नानाघटोपस्थितिर्न भवति किन्तु घटपदो-च्चारणानन्तरं घटत्वेन रूपेण सा भवति बहुत्वान्वययोग्यानेको-पस्थितेः शक्तेरेव निर्वाहादिति हृदयम्। अभेदसम्बन्धेनेति। एवं च नीलभेदस्य गुणिपरतया नीलगुणवदभिन्नमुत्पलमित्यन्वयधीः। अभेदसम्बन्धावच्छिन्ननीलनिष्ठप्रकारतानिरूपितोत्पलत्वावच्छिन्नो-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



च न लक्षणा। अत एव निषादस्थपतिं याजयेदित्यत्र न तत्पुरुषो लक्षणापत्तेः, किन्तु कर्मधारयो लक्षणाभावात्। न च निषादस्य संकरजातिविशेषस्य वेदानाधिकाराद्याजनासम्भव इति वाच्यम्। निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनात्। लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतयाऽदोषत्वादिति। उपकुम्भमर्धपि-

विवृतिः।

त्पलनिष्ठविशेष्यतावान् बोधः। न लक्षणेति। स्वारसिकलक्षणा नेत्यर्थस्तेन नीलोत्पलमित्यत्र नीलरूपाश्रये नीलपदस्य निरूढलक्षणासत्वेऽपि नासंगतिः। अत एवेति। कर्मधारयस्थले लक्षणाभावकथनादेवेत्यर्थः। निषादस्थपतिमिति। स्थपतिरधिपतिः। 'स्थपतिरधिपतौ तक्षिण' इति वैजयंती। तत्र हेतुमाह न लक्षणापत्तेरिति। कर्मधारयः—स च निषादश्चासौ स्थपतिश्चेति तथा। निषादस्य—सङ्करजातिविशेषस्येति। ननु कोऽयं निषाद इति विवेचने 'तु निषादाश्च किराताश्चेति' भागवतोक्तेर्निषादस्य म्लेच्छजात्यन्तर्गतत्वं 'चत्वारो वर्णा' निषादः पञ्चम' इत्यौपमन्यवोक्तेः। 'निषादपञ्चमान् वर्णान्मन्यते शाकटायन' इति शौनकोक्तेश्च पञ्चमवर्णत्वं च सिद्ध्यति 'निषादः कस्मान्निषदनो भवति निषण्णमस्मिन् पापकमिति नैरुक्ता' इति यास्कोक्तेः 'ग्राम्यभोजनं निषादानां मृण्मयपात्रपानं चेति' कात्यायनोक्तेश्च पूर्वोक्तमुभयत्वमस्य निर्विवादमुत्पत्त्यादिकं तु विष्णुपुराणे द्रष्टव्यमित्यलमत्राधिक्येन। वेदानधिकारादिति। 'यद्युह वा एतत्स्मशानं यच्छुद्रस्तस्माच्छुद्रसमीपे नाध्येतव्यं 'न शूद्राय मतिं दद्यादि'त्यादिना निषेधादिति भावः। तत एवेति। श्रुतिबोधितयाजनानुपपत्त्यैवेत्यर्थः। मुख्यार्थस्यान्वये कर्मधारयद्वारेति शेषः। तदनुपपत्त्या—मुख्यार्थान्वयानुपपत्त्या, कल्पनायाः—निषादस्य वेदविद्याप्रयुक्तिकल्पनायाः। फलमुखगौरवतयाऽदोषत्वादिति। फलानुरोधेन जायमानं गौरवं तु न दोषरूपेण गृह्यते इति सर्वसम्मतत्वादित्यर्थः। परपदे—कुम्भपदे पिप्पलीपदे च। अन्वयबोध इति। कुम्भसम्बन्ध्यभिन्नं समीपं, पिप्पलीसम्बंध्यभिन्नमर्धमिति चान्वयधीः। समासे—वैय्याकरणाभिमतसमासे, समासस्य तु—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्पलीत्यादौ परपदे तत्संबन्धिनि लक्षणा पूर्वपदार्थप्रधानतया चान्वयबोध इति । इत्थं च समासे न क्वापि शक्तिः पदशक्त्यैव निर्वाहादिति ।

आसत्तिर्योग्यताकाङ्क्षा तात्पर्यज्ञानमिष्यते ॥ ८२ ॥
कारणं संनिधानं तु पदस्यासत्तिरुच्यते ।

आसत्तिरित्यादि । आसत्तिज्ञानं योग्यताज्ञानमाकाङ्क्षाज्ञानं तात्पर्यज्ञानं च शाब्दबोधे कारणम् । तत्रासात्तिपदार्थमाह संनिधानं त्विति । यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः शाब्दबोधे कारणम् । तेन 'गिरिर्भुक्तमाग्निमान्देवदत्तेन' इत्यादौ न शाब्द-

विवृतिः ।

सुपां सुपा तिङा नाम्ना धातुनाथ तिङा तिङा ।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥

इत्युक्तेः षड्विधत्वमेव । पदशक्त्यैव निर्वाहादिति । समासघटकीभूतपदशक्तिलक्षणाभ्यामेव सकलसाध्यसिद्धौ कृतं समासे शक्तिस्वीकारेण 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदि'त्यभियुक्तोक्तेरिति भावः ।

मूले आसत्त्यादितात्पर्यपर्यन्तानां पदानां द्वन्द्वस्तदन्ते श्रूयमाणस्य ज्ञानपदस्य प्रत्येकं सम्बन्धादाह आसत्तिज्ञानमिति । कारणमिति । सहकारिकारणमित्यर्थः । अपेक्षितः-तात्पर्यविषयः, तयोः-पदयोरित्यर्थः । न शाब्दबोध इति । अयं भावः-गिरिर्भुक्तमग्निमान् देवदत्तेन इत्यत्र गिरिरग्निमान् भुक्तं देवदत्तेनेतिवाक्यार्थबोधद्वयं प्रकृतम् तत्र प्रथमानुयोगिन्या भुक्तमितिपदार्थोपस्थित्या द्वितीयानुयोगिन्या अग्निमानितिपदार्थोपस्थित्या व्यवधानमिति नासत्तिरतश्च न बोधः । प्रकृतोपयोगिपदार्थोपस्थित्या व्यवधाने त्वासत्तिरस्त्येव । तेनाश्वेन ग्रामं गच्छति इत्यादौ ग्रामपदार्थोपस्थितिव्यवधानेऽपि अश्वपदस्य गच्छतीत्यनेनासत्तिरव्याहतैव । गिरिपदार्थभुक्तपदार्थयोः परस्परमन्वयबोधे वक्तुस्तात्पर्यं न किन्तु गिर्यग्निमत्पदार्थयोरन्वयबोधे तत् तयोश्च नाव्यवहितत्वमित्यासत्त्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



बोधः। 'नीलो घटो द्रव्यं पटः' इत्यादावासत्तिभ्रमाच्छाब्दबोधः। आसत्तिभ्रमाच्छाब्दबोधभ्रमाभावेऽपि न क्षतिः। ननु यत्र छत्री कुण्डली वासस्वी देवदत्त इत्याद्युक्तं तत्रोत्तरपदस्मरणेन पूर्वपदस्मरणस्य नाशादव्यवधानेन तदुत्तरपदस्मरणासंभव इति चेन्न। प्रत्येकपदानुभवजन्यसंस्कारैश्चरमस्य तावत्पदविषयकस्मरणस्याव्यवधानेनोत्पत्तेः। नानासंनिकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि संभवात्। तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात्। कथमन्यथा नानावर्णैरेकपदस्मरणम्, परंतु तावत्पदार्थानां स्मरणादेकदैव खले कपोतन्यायेन तावत्पदार्थानां क्रियाकर्मभावेनान्वयबोधरूपः शाब्दबोधो भवतीति केचित्।

विवृतिः।

भावान्न बोध इति निष्कर्षः। मूले संनिधानमिति वदताऽसंनिधाने प्रहरादिविलम्बेनोच्चारणे आसत्त्यभावाच्छाब्दबोधाभावो ध्वनितः। आसत्तिभ्रमादिति। नीलस्य पटपदार्थेनान्वयबोधे तात्पर्यात् भ्रमाद् घटेनान्वयात् नीलाभिन्नो घट इत्यर्थः। द्रव्यं पट इति। अत्र घटमुद्दिश्य द्रव्यत्वविधानात् द्रव्यमुद्दिश्य घटत्वविधानासंभवाच्च घटविशेष्यक एव शाब्दबोधो न तु घटप्रकारक इत्यप्यवधेयम्। अत्र भ्रमाच्छाब्दबोधमात्रं न तु तत्रासत्तिरपीति॥ तत्र–नानापदघटितवाक्ये। नाशादिति। योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वादित्यर्थः। अव्यवधानेन–व्यवधानराहित्येन। चेदित्यन्तं शङ्काग्रन्थं समाधत्ते नेति। उत्पत्तेरिति। उत्पत्तिसम्भवादित्यर्थः। ननु तद्विशेष्यकतत्प्रकारकस्मृतिं प्रति तद्विशेष्यकतत्प्रकारकसंस्कारत्वेन जनकत्वात्कथं प्रत्येकपदसंस्कारैर्नानापदविशेष्यकस्मरणं भिन्नविषयकत्वादत आह नानासंनिकर्षैरितीति प्रकाशकृतः। नानासंनिकर्षैः–घटपटादिचक्षुःसंयोगरूपानेकसंनिकर्षैः, एकप्रत्यक्षस्येव–इमौ घटपटावित्येकसाक्षात्कारस्येव, नानासंस्कारैरेकस्मरणस्यापि सिद्धिः सुशकेति न दोष इति भावः। विपक्षे दोषमाह कथमन्यथेति। अनन्तसंस्कारसमूहस्यैकस्मरणोद्बोधकतानङ्गीकार इत्यर्थः।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति ।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ॥
अपरे तु—यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥

तथा च खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्मृत्या महावाक्या-

विवृतिः ।

नानावर्णैः—नानावर्णानां प्रत्येकसंस्कारैः, तावत्पदार्थानां—तत्तत्पद- जन्यपदार्थानामेवमग्रेऽपि । एकदैव—एककालावच्छेदेनैव, केचित्—प्राञ्चः, अन्यत्रोक्तमपि खले कपोतन्यायमतिस्पष्टार्थमुल्लिखति वृद्धा इति । पदार्था इति । चिरतरचिरसंनिहितकालोक्ता इत्यर्थः ।

ग्रन्थप्रपञ्चार्थमन्तेवासिमनीषोन्मेषार्थमन्येषामपि मतमुल्लिखति अ- परे त्विति । इदमेव च ग्रन्थकृत्संमतं मतं मन्तव्यम् । यद्यदिति । अत्र यद्यपि तेन तेनेति द्विर्वचनमयुक्तं द्विरुक्तार्थस्य एकेनैव तदा परामर्ष्टुं शक्यत्वात् । अत एव 'यां यां मन्येत सा भवेदि'त्युक्तं भाष्ये तथापि निराकांक्षत्वप्रतिपत्तये तत्पदद्वयमत एव च 'यं यं कामयते कामं तं तमाप्नोतीति' प्रामाणिकाः । स्वार्थाकांक्षितं स्वार्थयोग्यं यद्यत् संनिधानं प्रपद्यते स्वार्थोपस्थितिविषयो भवति तेन तेनैवान्वितः स्वार्थः पदैः प्रथममनुभाव्यतेऽनन्तरं च महावाक्यार्थबोध इत्यर्थः । स्वयमुक्तश्लोकभावार्थमाह तथा चेति । पदार्थस्मृत्या—पदार्थस्मर- णद्वारा । महावाक्यार्थबोध इति । तत्र वाक्यं तु एकातिङ्वाक्यमिति शाब्दिकाः । विधिर्निषेध इति द्विविधं लिङादिघटितं वाक्यमिति मीमांसकाः । स्वर्गकामो यजेत इति विधिः । न कलञ्जं भक्षयेत् इति निषेधः । तार्किकास्तु सुबन्तसमूहः तिङन्तसमूहः सुप्तिङन्त- समूह इति विभागमाहुः । तत्र त्रयः कालाः इति प्रथमः इह वर्त- मानत्वासंभवेन संतीत्यादेर्दुर्ज्ञानत्वेन ज्ञायन्ते इत्यादेश्चार्थाध्याहा- रासंभवः । पचति भवतीति द्वितीयः । चैत्रः पचतीति तृतीयः । वाक्ययोर्द्वयो महावाक्यं तस्यार्थो महावाक्यार्थः । पदस्फोटोऽपी- ति । स्फोटस्तु स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या । तत्र वर्णपद- वाक्यभेदेन स्फोटास्त्रिधा तत्रापि जातिव्यक्तिभेदेन पुनः षोढा अ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



र्थबोध इत्यप्याहुः। एतेन तावद्वर्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः। तत्तद्वर्णसंस्कारसहितचरमवर्णोपलंभेन तद्व्यञ्जकनेवोपपत्तेरिति। इदं तु बोध्यम्। यत्र द्वारमित्युक्तं तत्र पिधेहीत्यादिपदस्य ज्ञानादेव बोधो न तु पिधानादिरूपार्थज्ञानात्। पदजन्यपदार्थोपस्थितेस्तत्तच्छाब्दबोधे हेतुत्वात्। किंच क्रियाकर्मपदानां तेन तेनैव सह साकाङ्क्षत्वात् तेन क्रियापदं विना कथं शाब्दबोधः स्यात्। तथा पुष्पेभ्य इत्यादौ स्पृहयतीत्यादिपदाध्याहारं विना चतुर्थ्यनुपपत्तेः पदाध्याहार आवश्यकः।

योग्यतांनिर्वक्ति—

पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥ ८३ ॥

पदार्थ इति। एकपदार्थेऽपरपदार्थसंबन्धो योग्यतेत्यर्थः। तज्ज्ञानाभावाच्च वह्निना सिञ्चतीत्यादौ न शाब्दबोधः। नन्वेतस्या योग्यताया ज्ञानं शाब्दबो-

विवृतिः।

खण्डपदस्फोटोऽखण्डवाक्यस्फोटश्चेति संकलनयाष्टौ स्फोटा इति मंजूषायां विस्तरः। निरस्त इति। यदुक्तं भट्टपादैः—

वर्णा वा ध्वनयो वापि स्फोटं न पदवाक्ययोः।
व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः॥

निरासे हेतुमाह तत्तद्वर्णेति। पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इति स्वीकारेणैवोपपत्तेरित्यर्थः। द्वारमित्यादौ पिधेहीति न पदाध्याहारः किन्त्वर्थाध्याहार एवेति वादिनः प्राभाकरस्य मतं निरस्यति यत्रेति। क्रियापदमिति। तथा च प्रकृते पिधेहीति क्रियापदं विना द्वारमित्युच्चारणेऽपि न शाब्दबोध एवमन्यत्र द्वारमिति कर्मपदं विना पिधेहीत्युच्चारणेऽपि न स इत्यपि बोध्यम्। चतुर्थ्यनुपपत्तेरिति। "स्पृहेरीप्सित" इति चतुर्थीविधायकपाणिनिसूत्रस्य स्पृहयतियोगं विना प्राप्त्यभावेन चतुर्थ्यनुपपत्तेः पुष्पेभ्यः इत्यनुपपन्नं स्यादिति निष्कर्षः।

मूले तद्वत्तेति। पदान्तरार्थप्रतियोगिको विवक्षितसम्बन्ध इत्यर्थः। तज्ज्ञानाभावात्—योग्यताज्ञानाभावात्। वह्निना सिञ्चतीत्यादौ न शाब्दबोध इति। अयमभिसंधिः—प्रकृतवाक्यं योग्यता नास्ति वह्नेः सेककरणत्वाभावात् द्रवद्रव्यक्षरणस्यैव सेकपदार्थत्वात्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धात्प्राक्सर्वत्र न संभवति वाक्यार्थस्यापूर्वत्वादिति चेन्न । तत्तत्पदार्थस्मरणे सति क्वचिन्निश्चयरूपस्यापि योग्यताया ज्ञानस्य संभवात् ।

नव्यास्तु योग्यताया ज्ञानं न शाब्दज्ञाने कारणम्–वह्निना सिञ्चतीत्यादौ सेके वह्निकरणत्वाभावरूपाऽयोग्यतानिश्चयेन प्रतिबन्धान्न शाब्दबोधः । तदभावनिश्चयस्य लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे प्रतिबन्धकत्वाच्छाब्दबोधं प्रत्यपि प्रतिबन्धकत्वं सिद्धम् । योग्यताज्ञानविलम्बाच शाब्दबोधविलम्बोऽसिद्ध इति वदन्ति ॥८२।८३॥

आकाङ्क्षां निर्वक्ति—

यत्पदेन विना यस्याननुभावकता भवेत् ।
आकाङ्क्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥ ८४ ॥

यत्पदेनेत्यादि । येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन पदेन सह तस्याकाङ्क्षेत्यर्थः । क्रियापदं विना कारकपदं नान्वयबोधं

विवृत्तिः ।

वह्नौ च तदभावात् शाब्दबोधं प्रति च योग्यताज्ञानस्य कारणत्वान्न तादृशवाक्याच्छाब्दबोध इति ॥ अपूर्वत्वादिति । शाब्दबोधात् पूर्वमनिश्चितत्वादित्यर्थः । तत्तत्पदार्थस्मरणे–तत्तत्पदजन्यतत्तत्पदार्थस्मरणे ।

सेके वह्निकरणकत्वाभावेति । वह्निकरणकसेकाभावेत्यर्थः । प्रतिबंधान्न शाब्दबोध इति । शाब्दबोधाभावेऽयोग्यतानिश्चय एव हेतुरिति भावः । तदभावनिश्चयस्य–अनाहार्याप्रामाण्यज्ञानानास्कंदिततद्धर्मिकतदभावनिश्चयस्य, तज्ज्ञानमात्रे–तद्विशिष्टबुद्धिमात्रे । सिद्धमिति । तेनायोग्यताज्ञानस्य पृथक् प्रतिबंधकताकल्पनमनावश्यकमिति सारम् । इदं च न ग्रन्थकृत्संमतं मतं प्रतिभाति । यद्विषयकमनुमित्यादिकं नासीच्छाब्दज्ञानं तूत्पन्नं तद्विशिष्टबुद्धावयोग्यताज्ञानाभावत्वमपेक्ष्य योग्यताज्ञानत्वेनैव हेतुत्वे लाघवादत एव अत्र नव्या इति वक्तव्येऽपि नव्यास्तु इति तु नारुचिः सूचितेति दिक् ॥ ८२ ॥ ८३ ॥

अन्वयाननुभावकत्वं–अर्थास्मारकत्वम् । तेन पदेन सह तस्येति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जनयतीति तेन तस्याकाङ्क्षा। वस्तुतस्तु क्रियाकारकपदानां संनिधानमासत्त्या चारितार्थम्, परन्तु घटकर्मताबोधं प्रति घटपदोत्तर-द्वितीयारूपाकाङ्क्षाज्ञानं कारणम्। तेन घटः कर्मत्वमानयनं कृति-रित्यादौ न शाब्दबोधः। अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ तु पुत्रेण सह राजपदस्य तात्पर्यग्रहसत्त्वात्तेनैव सहान्वयबोधः स्यादेव।

तात्पर्यं निर्वक्ति। वक्तुरिच्छेति। यदि तात्पर्यज्ञानं कारणं न स्यात्तदा 'सैन्धवमानय' इत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोधो

विवृतिः।

दविशिष्टत्वं तत्पदस्येत्यर्थः। गामानयेत्यादौ गवादिपदमन्तरेणास्पद-स्यार्थास्मारकत्वाद्गवादिपदविशिष्टत्वमस्पदे आकाङ्क्षा बोध्या। क्रि-यापदं विनेत्यादि। यथा घटमिति कारकपदमानयेति क्रियापदं विना नान्वयबोधजनकमिति तेन तस्याकांक्षा, गौरश्वः पुरुषो हस्तीत्यत्र तु नाकांक्षेत्यपि बोध्यम्। क्रियाकारकपदानामिति। द्वन्द्वान्तन्यायेन क्रियापदानां कारकपदानां चेत्यर्थः। घटकर्मताबोधं प्रतीत्यादि। घटपदाव्यवहितोत्तरवर्त्यम्विभक्तिरूपाकांक्षाज्ञानस्य शाब्दज्ञाने हेतुत्वमित्यर्थः। इत्यादौ-विपरीतवाक्ये। न शाब्दबोध इति। तादृ-शाकाङ्क्षाभावात् घटमानयेत्यादिवाक्यवदिति भावः। इत्यादाविति। उभयविधाकाङ्क्षायुक्ते वाक्ये इत्यर्थः। अयं भावः-सम्बन्धविशेष-ख्यापिका राज्ञ इति षष्ठी राज्ञः पुत्रे पुरुषे चोभयत्रान्वयं बोधयति यदि पुत्रेण सहान्वये वक्तुस्तात्पर्यं तदायं राज्ञः पुत्र एति पुरुषो-ऽपसार्यतामथ च पुरुषेण सहान्वये वक्तुस्तात्पर्यं तदायं राज्ञः पुरुष एति स्वः पुत्रोऽपसार्यतामिति सति तात्पर्य उभयत्रान्वयबो-धः सम्भवतीति। प्रकृतवाक्ये राजपदपुरुषपदयोरेकवाक्यता ना-स्त्यतो न समासापत्तिरपीतरथा धवखदिराविव समासापत्तिर्गी-र्वाणगुरुणापि दुर्वारैवेत्यपि बोध्यम्।

निर्वक्तीति। लक्षयतीत्यर्थः। वक्तुरिच्छेतीति। एतत्पदं वाक्यं वा एतदर्थबोधायोच्चार्यत इति प्रयोक्तुरिच्छेत्यर्थः। तच्च नानार्थ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न स्यात् । न च तात्पर्यग्राहकप्रकरणादीनां शाब्दबोधे कारणत्वमस्त्विति वाच्यम् । तेषामनुगमात् । तात्पर्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्यज्ञानमेव लाघवात्कारणमस्तु । इत्थं च वेदस्थलेऽपि तात्पर्यज्ञानं कारणमिति वाच्यं—सर्गादावध्यापकाभावात् । न च प्रलय एव नास्ति कुतः सर्गादिरिति वाच्यम् । प्रलयस्यागमेषु प्रतिपाद्यत्वात् । इत्थं च शुकवाक्येऽपीश्वरीयतात्पर्यज्ञानं कारणम् । विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणम् । अन्ये तु नानार्थादौ क्वचिदेव

विवृतिः ।

स्थले उपयुज्यते प्रकरणादिना चोत्पद्यते ॥ बोधो न स्यादिति । अयं भावः—एकस्मादेव सैन्धवशब्दाद् यात्राप्रसङ्गेऽश्वस्य भोजनप्रसङ्गे लवणस्य यो बोधो भवति स न स्यात्सति तु तात्पर्यज्ञानस्य शाब्दबोधे हेतुत्वे सम्भवत्येव । ग्राहकेति । तात्पर्यनियामकेत्यर्थः । प्रकरणादीनामित्यादिना संयोगविप्रयोगसाहचर्यादीनां परिग्रहः । एषामुदाहरणानि तु काव्यप्रकाशादिषु स्पष्टानीत्यलं पिष्टपिष्ट्या । अननुगमात्–एकरूपेणेत्यर्थः । तेषां–प्रकरणादीनाम् । इत्थं चेति । शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य हेतुत्वे चेत्यर्थः । तत्र–शाब्दबोधे । सर्गादावध्यापकाभावादिति । सृष्ट्यादिकालेऽध्यापकाभावेनेश्वरीयतात्पर्यज्ञानाङ्गीकारस्यैवोचितत्वादिति भावः । ननु प्रलय एव तावन्नास्ति कुतस्तरां प्रपञ्चप्रलयानन्तरीणसर्गादेः सम्भव इत्याशङ्कां परिहरति–प्रलयस्यागमेषु प्रतिपाद्यत्वादिति । 'धाता यथा पूर्वमकल्पयदि'त्याद्यागमेषु प्रलयस्य विस्पष्टमभिधानात् । न हि चागमस्तर्केण बाध्यते ।

धर्मस्य चाव्यवच्छिन्ना ये पन्थानो व्यवस्थिताः ।

न तांल्लोकप्र सिद्धत्वात्कश्चित्तर्केण बाधते ॥

इति वाक्यपदीयोक्तेः । विसंवादि—निष्फलम् । शिक्षयितुरेवेति । न चेश्वरस्य तदिच्छाया विसंवादित्वाभावादित्येवकारार्थः । केचित्तु न तात्पर्यज्ञानस्य हेतुतामेकान्ततः श्रद्दधते इत्याह–अन्ये त्विति । नानार्थादौ–सैन्धवमानयेत्यादिवाक्ये । क्वचिदेवेति । न सर्वत्रेत्यर्थः । शुकवाक्ये तात्पर्यज्ञानावश्यकतां निर-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तात्पर्यज्ञानं कारणम् । तथा च शुकवाक्ये विनैव तात्पर्यज्ञानं शाब्दबोधः । वेदे त्वनादिमीमांसापरिशोधिततर्कैरेवार्थावधारणमित्याहुः ॥ ८४ ॥

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यां शब्दखण्डं समाप्तम् ॥

विवृतिः ।

स्य वेदेपि तां निरस्यति–वेदे त्विति । कया रीत्या तर्हि तत्रार्थोऽवधारणीय इत्यत्राह—अनादीति । गुरुपरम्पराप्राप्तलाघवज्ञानरूपतर्कसहकृतानुमानेन चार्थनिर्णय इत्यर्थ इति शम् ॥ ८४ ॥

इति मूलचन्द्रिकायां शब्दखण्डम् ॥ ४ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पूर्वमनुभवस्मरणभेदाद्बुद्धेर्द्वैविध्यमुक्तम्। तत्रानुभवप्रकारा दर्शिताः, सुगमतया स्मरणं न दर्शितम्। तत्र हि पूर्वानुभवः कारणम्। अत्र केचित्—अनुभवत्वेन न कारणत्वं किन्तु ज्ञानत्वेनैव, अन्यथा सकृदनुभवस्थले स्मरणानन्तरं स्मरणं न स्यात्समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात्। मन्मते तु तेनैव स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं जन्यत इत्याहुः। तन्न—यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण स्मरणमजानिष्ट सकलविषयकस्मरणं तु नाभूत्तत्र फलस्य संस्कारनाशकत्वाभावात्कालस्य रोगस्य चरमफलस्य वा संस्कारनाशकत्वं वाच्यम्। तथा च न क्रमिकस्मरणानुपपत्तिः। न च पुनः पुनः स्मरणाद्दृढतरसंस्कारानुपपत्तिरिति वाच्यम्। झटित्युद्बोधकसमव-

विवृतिः।

पूर्वं-बुद्धिस्तु द्विविधामतेत्यत्र, प्रकाराः—प्रत्यक्षानुमित्युपमितिशाब्दरूपाः, स्मरणं तु सुगमतया न दर्शितम्। मूलकारेण स्मृतिस्सुगमतया नोक्ता परन्तूपयोगितया विवरणकृतोपक्षिप्तेति भावः। तत्र हि-स्मरणे हि। पूर्वानुभव इति। पूर्वानुभूतवस्तुन एव स्मरणं भवितुमर्हतीति स्मृतिपूर्वानुभूत्योर्गीर्वाणगुरुणापि कार्यकारणभावो दुर्वार इति भावः। किन्तु ज्ञानत्वेनैवेति। एतन्मते स्मृतित्वावच्छिन्नं प्रतिज्ञानत्वावच्छिन्नमेव कारणं नानुभवत्वावच्छिन्नम्। विपक्षे दोषमाह-अन्यथेति। ज्ञानत्वेन हेतुतानङ्गीकार इत्यर्थः। सकृदनुभूतस्थले-सकृदेकवारं 'एकवारं समं सकृत्' इत्यजयः। स्मरणं न स्यादिति। अनुभवस्य तदानीमभावादिति भावः। तत्र हेतुमाह-समानप्रकारकेति। तेनानुभवजन्यसंस्कारसद्भावेन न तत्सिद्धिरिति ध्येयम्। मन्मते तु-स्मृतौ ज्ञानत्वेनैव कारणत्वमिति मते तु, तेनैव-समानप्रकारकस्मरणेनैव, सकलविषयकस्मरणं-घटपटमठा इति समूहालम्बनात्मकस्मरणम्। संस्कारनाशकत्वाभावादिति। समानप्रकारकत्वाभावादिति भावः। कालस्य-दीर्घकालस्य, एवमग्रेऽपि। न क्रमिकेति। स्मरणोत्तरस्मरणं नेत्यर्थः। ननु स्मृतिं प्रति ज्ञानत्वावच्छिन्नस्योत अनुभवत्वावच्छि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धानस्य दार्ढ्यपदार्थत्वात् । न च विनिगमनाविरहादेव ज्ञानत्वेनापि जनकत्वं स्यादिति वाच्यम् । विशेषधर्मेण व्यभिचाराज्ञाने सामान्यधर्मेणान्यथासिद्धत्वात्, कथमन्यथा दण्डस्य भ्रमिद्वारा द्रव्यत्वेन रूपेण न कारणत्वम् । न चान्तरालिकस्मरणानां संस्कारनाशकत्वसंशयाद्व्यभिचारसंशय इति वाच्यम् । अनन्तसंस्कारतन्नाशकल्पनापेक्षया लाघवेन चरमस्मरणस्यैव संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावात् ।

इति स्मृतिप्रक्रिया ॥



विवृतिः ।

त्वस्य हेतुत्वमित्यत्र विनिगमकाभावाज्ज्ञानत्वावच्छिन्नस्यैव जनकत्वमस्तु का हानिरित्याशङ्कते नचेति । विशेषधर्मेण–अनुभवत्वेन, व्यभिचाराज्ञाने–कार्यकारणभावव्यभिचाराज्ञाने, सामान्यधर्मेण–ज्ञानत्वेन। अन्यथासिद्धत्वादिति। कार्यकारणभावकल्पनाया इति शेषः। अन्यथा–सामान्यधर्मेण कारणतास्वीकारे । न कारणत्वमिति । घटरूपकार्ये प्रतीति शेषः । न चेष्टापत्तिरिति वाच्यम् । सति विशेषे सामान्ये तदनङ्गीकारादिति मूको भव । तच्च विशेषं दण्डत्वमेव न द्रव्यत्वमिति भावः । व्यभिचारसंशयः–स्मृतित्वावच्छिन्नं प्रत्यनुभवत्वेन हेतुत्वे इत्यर्थः । एवं च न विशेषधर्मेण व्यभिचारज्ञानमिति भावः । व्यभिचारसंशयाभावादिति । अनुभूतविषये तन्नाशकचरमस्मरणस्य तत्कालेऽसत्त्वेन संस्काराणां च सत्त्वेन स्मरणं प्रत्यनुभवत्वेनापि जनकत्वे व्यभिचारसंशयावकाशो नास्त्येवेति भावः ॥

इति मूलचन्द्रिकायां स्मरणनिरूपणम् ॥





CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इदानीं क्रमप्राप्तं मनो निरूपयितुमाह—

साक्षात्कारे सुखादीनां करणं मन उच्यते ।
अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥ ८५ ॥

साक्षात्कार इति । एतेन मनसि प्रमाणं दर्शितम् । तथाहि—सुखसाक्षात्कारः सकरणको जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारवत् इत्यनुमानेन मनसः करणत्वसिद्धिः । न चैवं दुःखादिसाक्षात्काराणामपि करणान्तराणि स्युरिति वाच्यम् । लाघवादेकस्यैव तादृशसकलसाक्षात्कारकरणतया सिद्धेः । एवं सुखादीनामसमवायिकारणसंयोगाश्रयतया मनसः सिद्धिर्बोद्धव्या । तत्र मनसोऽणुत्वे प्रमाणमाह अयौगपद्यादिति । ज्ञानानां चाक्षुषरासनादीनामयौगपद्यमेककालोत्पत्तिर्नास्तीत्यनुभवसिद्धम् । तत्र नानेन्द्रियाणां सत्यपि विषयसंनिधाने यत्संबन्धादेकेनेन्द्रियेण

विवृतिः ।

क्रमप्राप्तं-निरूपणक्रमप्राप्तम्, प्रमाणं-अनुमानप्रमाणम् । साक्षात्कार इत्यादिना मूलेन सूचितमर्थं तथाहीत्यादिना प्रकरणेन वितत्य प्रतिपादयति तथाहीति । सकरणः-साधनजन्य इत्यर्थः । जन्यसाक्षात्कारत्वात् चक्षुःसाक्षात्कारवदिति । अयं भावः-यथा घटादिजन्यसाक्षात्कारश्चक्षुरादिना सकरणकस्तथा सुखादिसाक्षात्कारोऽपि सकरणकस्तच्च करणं प्रकृते मन एव नान्यदिति । न चेत्यादिना शङ्कितं परिहरति-लाघवादिति । दुःखादिसाक्षात्कारे पृथक् पृथक्करणत्वकल्पनापेक्षयैकस्यैव सकलसाक्षात्कारकरणत्वकल्पने लाघवादिति निष्कर्षः । प्रकारान्तरेणापि मनःसाधनमाह—एवमिति । सुखाद्यसमवायिकारणं संयोगः क्वचिदवश्यमाश्रितो यत्राश्रितस्तन्मनः इति भावः । "तदभावादणु मनः" इत्यादिनागमेनोपपन्नमपि 'अणुपरिमाणं मन' इति तार्किकप्रवादं स्वयं युक्त्या सङ्गमयति-अयौगपद्यादितीति । रासनादीनामित्यादिना त्वाचादिपरिग्रहः । अनुभवसिद्धमिति । अनुभवसिद्धस्य चापलापानर्हत्वमिति भावः । यत्सम्बन्धादिति । अत्र यत्पदेन मनोग्रहणमेवमग्रेऽपि । परैरन्यैरिन्द्रियैः । इति न विभु मन इति । यदि मनो विभु स्या-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ज्ञानमुत्पद्यते यदसंबन्धाच्च परैर्ज्ञानं नोत्पद्यते तन्मनसो विभुत्वे न संभवतीति न विभु मनः। न च तदानीमदृष्टविशेषोद्बोधकविलम्बादेव तज्ज्ञानविलम्ब इति वाच्यम्। तथा सति चक्षुरादीनामप्यकल्पनापत्तेः। न च दीर्घशष्कुलीभक्षणादौ नानावधानभाजां च कथमेकदाऽनेकेन्द्रियजन्यज्ञानमिति वाच्यम्। मनसोऽतिलाघवाद् झटिति नानेन्द्रियसंबन्धान्नानाज्ञानोत्पत्तेः। उत्पलशतपत्रभेदादिव यौगपद्यप्रत्ययस्य भ्रान्तत्वात्। न च मनसः संकोचविकाशशालित्वादुभयोपपत्तिरस्त्विति वाच्यम्। नानावयवतन्नाशादिकल्पने गौरवाल्लाघवान्निरवयवस्याणुरूपस्यैव मनसः कल्पनादिति संक्षेपः॥ ८५॥

॥ इति द्रव्यपदार्थो व्याख्यातः॥

विवृतिः।

तर्हि सर्वज्ञानानि युगपद् भवेयुः विभोः सर्वेन्द्रियैः सह सर्वदा संयोगात् परन्तु नैतद् दृश्यते इति न मनसो विभुत्वमिति भावः। तदानीं-ज्ञानोत्पत्तिकाले। तथासतीति। दृष्टसामग्रीसत्त्वेऽप्यदृष्टविलम्बात्कार्यविलम्बाङ्गीकार इत्यर्थः। अकल्पनापत्तेरिति। अदृष्टतदभावकल्पनेनेष्टसिद्धेस्तत्कल्पनस्य सुतरां वैयर्थ्यादिति भावः। अनेकेन्द्रियजन्यज्ञानमिति। तत्रानेकेन्द्रियजन्यमाधुर्यगन्धस्पर्शादिज्ञानमित्यर्थः। ननु तर्हि क्रमः कथं न लक्ष्यते इत्यत्राह उत्पलशतपत्रभेदादिवेति। सूक्ष्मत्वाद्दुर्लक्ष्य इति भावः। उभयोपपत्तिरिति। मनसः संकोचविकासयोरेकेन्द्रियनानेन्द्रियसंनिकर्षाद्यथाक्रममेकस्य ज्ञानस्य युगपदनेकज्ञानानां च सिद्धिरिति निष्कर्षः। तन्नाशादीति। आदिना संकोचविकासध्वंसप्रागभावादीनां संग्रहः। कल्पनादिति। मनसो नानावयवतन्नाशादिकल्पनामपेक्ष्य 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति न्यायात् निरवयवाणुत्वकल्पनमेव लघुत्वात्समीचीनमिति भावः॥ ८५॥

इति मूलचन्द्रिकायां द्रव्यपदार्थविवरणम्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



द्रव्यं निरूप्य गुणान्निरूपयति—

अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः ।

अथेति । गुणत्वजातौ किं मानमिति चेत् ? इदम्—द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किंचिद्धर्मावच्छिन्ना निरवच्छिन्नकारणताया असंभवात् । नहि रूपत्वादिकं सत्ता वा तत्रावच्छेदिका न्यूनातिरिक्तदेशवृत्तित्वात् । अतश्चतुर्विंशत्यनुगतं किंचिद्वाच्यं तदेव गुणत्वमिति सिद्धम् । द्रव्याश्रिता इति । यद्यपि द्रव्याश्रितत्वं न लक्षणं कर्मादावतिव्याप्तेस्तथापि द्रव्यत्वव्यापकतावच्छेकसत्ताभिन्नजातिमत्त्वं तदर्थः । भवति हि गुणत्वं द्रव्यत्वव्यापकतावच्छेदकं तद्वत्ता च गुणा-

विवृतिः ।

अस्मत्कुलांबुधौ चन्द्रं मूलचन्द्रं सहोदरम् ।
विद्यान्तं हृदये शान्तं भूलाकान्तमहं भजे ॥

मूले अथशब्दस्यानन्तर्यमर्थः । तदेवाह—द्रव्यं निरूप्येति । द्रव्ये गुणावस्थानात्तन्निरूपणानन्तरं गुणनिरूपणम् । प्रतिबन्धकीभूतजिज्ञासाव्युदासाय वा तथा कृतम् । निरूपणं नाम लक्षणस्वरूपप्रामाण्यप्रकारकज्ञानजनकशब्दप्रयोगः । किञ्चिद्धर्मावच्छिन्नेति । यथा घटनिष्ठकार्यतानिरूपितदण्डगतकारणता दण्डत्वधर्मावच्छिन्ना तथा, निरवच्छिन्नकारणताया असम्भवात्—निरवच्छिन्ना कारणता न क्वापि तिष्ठतीति दृष्टत्वात् । रूपत्वादिकमित्यादिशब्देन रसत्वादेः सङ्ग्रहः । सत्ता वेति । 'सदिति यतो द्रव्यगुणकर्मसु सा सत्ता' द्रव्यादित्रिकवृत्तिरित्यर्थः । तत्र—गुणे । न्यूनाधिकदेशवृत्तित्वादिति । द्वन्द्वान्तन्यायेन देशशब्दस्योभयत्रान्वयस्तथाच रूपत्वादेर्न्यूनदेशे ( चतुर्विंशतिगुणमध्ये रूपमात्रे ) सत्तायाश्चाधिकदेशे ( गुणापेक्षया द्रव्यकर्मरूपे ) वृत्तित्वादिति भावः । चतुर्विंशत्यनुगतमिति । चतुर्विंशतावनुगतं चतुर्विंशतिमात्रवृत्ति । चतुर्विंशतिशब्दाद्बहुवचनं नोत्पद्यते 'विंशत्याद्याः सदैकत्वे' इत्यनुशासनात् । अत एव 'शतं ब्राह्मणा' इत्यादेः साधुत्वमिति सङ्क्षेपः । न लक्षणमिति । गुणस्येति शेषः । कर्मादावतिव्याप्तेरिति । द्रव्याश्रयत्वस्य

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नामिति । द्रव्यत्वं कर्मत्वं वा न द्रव्यत्वव्यापकतावच्छेकं गगनादौ द्रव्यकर्मणोरभावात् । द्रव्यत्वत्वं सामान्यत्वादिकं वा न जातिरिति तद्व्युदासः । निर्गुणा इति । यद्यपि निर्गुणत्वं कर्मादावपि तथापि सामान्यवत्त्वे सति कर्मान्यत्वे च सति निर्गुणत्वं बोध्यम् । जात्यादीनां न सामान्यवत्त्वं कर्मणो न कर्मान्यत्वं द्रव्यस्य न निर्गुणत्वमिति तत्र नातिव्याप्तिः । निष्क्रिया इति स्वरूपकथनं न तु लक्षणं गगनादावतिव्याप्तेः ।

विवृतिः ।

गुणवत्कर्मादावपि सत्त्वेन गुणलक्षणस्य तत्राप्यतिप्रसक्तेरिति भावः । द्रव्यत्वव्यापकतेति । द्रव्यनिरूपितं यद् गुणनिष्ठव्यापकत्वं तादृशव्यापकत्वावच्छेदिकाया सत्ताभिन्ना जातिर्गुणत्वरूपा तादृशजातिमत्त्वं गुणेष्वस्तीत्यक्षरार्थः । तद्वत्ता–गुणत्ववत्ता । गगनादौ द्रव्यकर्मणोरभावादिति । समवायेन गगनादिपञ्चसु द्रव्यान्तरस्य गगनादिचतुर्षु कर्मणो वाऽभावादिति मूलार्थः । द्रव्यत्वाधिकरणं गगनं तद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वस्य द्रव्यत्वे कर्मत्वे वाऽभावादिति भावः । द्रव्यत्वत्वं द्रव्यत्वे वर्तमानो धर्म एवमग्रेऽपि न जातिः किन्तूपाधिः । यद्यपि धर्ममात्रमुपाधिस्तथापि जात्यतिरिक्तधर्मे उपाधिव्यपदेशो नैयायिकानां प्रायिकः । तद्व्युदासः–तयोर्द्रव्यत्वत्वसामान्यत्वयोरुक्तलक्षणे व्यवच्छेदः । कर्मादावपीति । तथा चातिव्याप्तिरत आह–तथापीति । निर्गुणत्वमिति । गुणसामान्यलक्षणं वक्तुं युक्तमित्यर्थः । तत्र नातिव्याप्तिरिति । तत्र–तेषु । अयं भावः–निर्गुणत्वमात्रोक्तौ कर्मण्यतिव्याप्तिस्तद्वारणाय 'कर्मान्यत्व' इति । तावन्मात्रोक्तावपि सामान्येऽतिव्याप्तिस्तद्व्युदासाय 'सत्यन्तं' निर्गुणत्वानुक्तौ परिशिष्टोक्तौ द्रव्येऽतिव्याप्तिस्तां निवर्तयितुं 'निर्गुणत्व' मिति गुणलक्षणे उपात्तमिति । न तु लक्षणमिति । अव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यस्यैव लक्षणत्वात् । गगनादावतिव्याप्तेरिति । आकाशकालादीनामपि निष्क्रियत्वेन वत्रोक्तलक्षणस्यातिव्याप्तेरिति निष्कर्षः । लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वमतिव्याप्तिः ।

मूले गुणानामवान्तरभेदमभिधातुकामः प्रथमं मूर्त्तगुणानाह–

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥
द्रवत्वं स्नेहवेगाश्च मता मूर्तगुणा अमी ।

मूर्तगुणा इति । अत्र वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः । अमूर्तेषु न वर्तन्त इत्यर्थः । लक्षणं तु तावदन्यान्यत्वम् । एवमग्रेऽपि ।

धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥ ८७ ॥
एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः ।

अमूर्तगुणा इति । मूर्तेषु न वर्तन्ते इत्यर्थः ।

संख्यादयो विभागान्ता उभयेषां गुणा मताः ॥ ८८ ॥

उभयेषामिति । मूर्तामूर्तगुणा इत्यर्थः ॥ ८६–८८ ॥

संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा ।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥

अनेकाश्रिता इति । संयोगविभागद्वित्वादीनि द्विवृत्तीनि । त्रित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यम् ॥ ८९ ॥

विवृतिः ।

रूपमिति । उपलक्षणीय इति । स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणम् । अमूर्तेषु न वर्तन्त इति । अमूर्तावृत्तिगुणत्वं रूपादीनां धर्म इत्यर्थः । तावदन्यान्यत्वं–एतद्भिन्नभिन्नत्वम् ॥

मूर्तेषु न वर्तन्त इति । मूर्तावृत्तिगुणत्वं धर्मादीनां समानो धर्म इत्यर्थः ॥ ८६ ॥ ८७ ॥ ८८ ॥

अनेकाश्रिता इतीति । न एकं अनेकं अनेकमाश्रिता अनेकाश्रिता इति समासोऽत्र बोध्यः । संयोगादीनां द्विवृत्तित्वात् ॥ ८९ ॥

मूले अतः–अस्मात्संयोगादिपञ्चकात्, सर्वे–द्वाविंशतिः ।

मूले बुद्ध्यादिषट्कमिति । षण्णां सङ्घः षट्कम् । संख्यायाः संज्ञासंघसूत्राध्ययनेषु' इति कप्रत्ययः । द्रवणक्रियाव्युदासाय मूलोक्तद्रवपदं व्याचष्टे–द्रवत्वमिति । स्वार्थे ठगिति । 'विनयादिभ्यष्ठक्' इत्यनेन स्वार्थे ठक् प्रत्ययः ठस्य चेके वैशेषिकपदसिद्धिरित्यर्थः । ननु विशेषपदस्य विनयादिष्वनन्तर्गतत्वान्मूलासङ्गतिरिति तु न शङ्क्यम्—विनयादेराकृतिगणत्वात् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अतः शेषगुणाः सर्वे मता एकैकवृत्तयः ।

रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखे-च्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः ।

बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥९० ॥
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः ।

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इत्यर्थः । स्पर्शान्ताः रूपरसगन्ध-स्पर्शा इत्यर्थः । द्रवो द्रवत्वम् । वैशेषिका इति । विशेषा एव वैशे-षिकाः स्वार्थे ठक् । विशेषगुणा इत्यर्थः ।

संख्यादिरपरत्वान्तो द्रवः सांसिद्धिकस्तथा ॥ ९१ ॥
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ।

संख्यादिरिति । संख्यापरिमाणपृथक्त्वसंयोगाविभागपरत्वापरत्वा-नीत्यर्थः ।

संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९२ ॥
एते तु द्वीन्द्रियग्राह्याः—

द्वीन्द्रियेति । चक्षुषा त्वचाऽपि ग्रहणयोग्यत्वात् ।

अथ स्पर्शान्तशब्दकाः ।
बाह्यैकैकन्द्रियग्राह्याः—

बाह्येति । रूपादीनां चक्षुरादिग्राह्यत्वात् ।

गुरुत्वादृष्टभावनाः ॥ ९३ ॥
अतीन्द्रिया विभूनां तु ये स्युर्वैशेषिका गुणाः ।

विवृतिः ।

मूलस्थसंख्यादीत्यादिपदग्राह्यगुणान् स्पष्टप्रतिपत्त्यर्थमुल्लिख-ति संख्यापरिमाणेत्यादिना ।

चक्षुरादीति । चक्षुरादिनैवेत्यर्थः । ग्राह्यत्वात्—ग्रहणयोग्यत्वात् ।

कारणगुणपूर्वका इति 'कारणगुणपूर्वकः कार्यगुणो दृष्ट' इति कणभक्षसमयादिति भावः । न तादृशा इति । न कारणगुणपूर्वका

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥

विभूनामिति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा इत्यर्थः । अकारणेति। कारणगुणेन कार्ये ये गुणा उत्पद्यन्ते ते कारणगुणपूर्वका रूपादयो वक्ष्यन्ते । बुद्ध्यादयस्तु न तादृशा आत्मादेः कारणाभावात् ॥९०–९४ ॥

अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् ।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ।

अपाकजास्त्विति । पाकजरूपादीनां कारणगुणपूर्वकत्वाभावात् अपाकजा इत्युक्तम् । तथाविधमपाकजम् । तथैकत्वमपि बोध्यम् । स्पष्टम् ।

संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥

कर्मजा इति । यद्यपि कर्मजत्वं न साधर्म्यं घटादावतिव्याप्तेः, संयोगजसंयोगेऽव्याप्तेश्च, तथापि कर्मजन्यवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यम् । एवमन्यत्राप्यूह्यम् ॥ ९५ ॥ ९६ ॥

स्पर्शान्तपरिमाणैकपृथक्त्वं स्नेहशब्दके ।
भवेदसमवायित्वं–

स्पर्शान्तेति । स्पर्शोऽत्रानुष्णो ग्राह्यः । एकपृथक्त्वमित्यत्र

विवृतिः ।

इत्यर्थः । तत्र हेतुमाह––आत्मादेरिति । आदिनाकाशपरिग्रहः । ॥ ९० ॥ ९४ ॥

कारणगुणपूर्वकत्वाभावात्–कारणगुणपूर्वकत्वव्यवहाराभावात् । न साधर्म्यमिति । संयोगविभागयोरनपेक्षकारणं कर्मेत्युक्तेः । घटादावतिव्याप्तेरिति । घटादावपि चक्रभ्रमणादिकर्मजत्वसत्त्वादिति भावः । संयोगजसंयोगे–हस्तपुस्तकादिसंयोगजकायपुस्तकादिसंयोगे, अव्याप्तेः–तस्य संयोगजत्वेन कर्मजत्वाभावात् । कर्मजन्यवृत्तिगुणत्वव्याप्यजातिमत्त्वमिति । वृत्तित्वान्तानुक्तौ रूपादावतिप्र-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च ग्राह्यम्। पृथक्त्वपदेन चैकपृथक्त्वं विवक्षितम्। भवेदसमवायित्वमिति। घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति। एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वम्। शब्दस्यापि द्वितीयशब्दं प्रत्यसमवायिकारणत्वम्। एवं स्थितिस्थापकैकपृथक्त्वयोरपि ज्ञेयम्।

—अथ वैशेषिके गुणे ॥ ९७ ॥

आत्मनः स्यान्निमित्तत्वम्—

निमित्तत्वमिति। बुद्ध्यादीनामिच्छादिनिमित्तत्वादिति भावः।

—उष्णस्पर्शगुरुत्वयोः।

वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥

द्विधैव कारणत्वं स्याद्

द्विधैवेति। असमवायिकारणत्वं निमित्तकारणत्वं च। तथाहि—उष्णस्पर्श उष्णस्पर्शस्यासमवायिकारणं पाकजे निमित्तम्। गुरुत्वं गुरुत्वपतनयोरसमवायिकारणं प्रतिघाते निमित्तम्। वेगो वेगस्पन्दनयोरसमवायी अभिघाते निमितम्। द्रवत्वं द्रवत्वस्पन्दनयोरसमवायि

विवृतिः।

सङ्गः। घटव्युदासाय गुणत्वव्याप्येति ॥ ९५ ॥ ९६ ॥

त्वप्रत्ययस्य—'तस्य भावस्त्वतलौ'वित्यनेन विहितस्य त्वप्रत्ययस्य। प्रत्येकमन्वयादिति। द्वन्द्वात्परः श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यत इति न्यायादिति भावः। मूले एकपृथक्त्वं स्नेहशब्दक इत्यत्रैकत्वं एकपृथक्त्वं चेत्यर्थो बोद्धव्यः।

उष्णस्पर्शः—कपालादिनिष्ठोष्णस्पर्शः, उष्णस्पर्शस्य—घटादिनिष्ठोष्णस्पर्शस्य, पाकजे—घटादिगतपाकजरूपादौ, निमित्तं—निमित्तकारणमेवमग्रेऽपि। गुरुत्वम्—कारणगतगुरुत्वम्। गुरुत्वेति। कार्यगतगुरुत्वेत्यर्थः। एवमेव द्रवत्वे बोध्यम्। अभिघाते—अभिघाताख्यसंयोगे, सङ्गदे—लकुत्वादिसंयोगविशेषे। वंशादलेति। वंशो वेणुः 'वेणुर्वंशो कुलं वंश' इत्यनुशासनात्।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संग्रहे निमित्तम् । भेरीदण्डसंयोगः शब्दे निमितम् भेर्याकाशसंयो-गोऽसमवायी । वंशदलद्वयविभागः शब्दे निमित्तम् वंशदलाकाशवि-भागोऽसमवायीति ।

अथ प्रादेशिको भवेत् ।
वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥
प्रादेशिकोऽव्याप्यवृत्तिः ॥ ९७ ॥ ९८ ॥ ९९ ॥
चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।
चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥

चक्षुरिति । रूपत्वजातिस्तु प्रत्यक्षसिद्धा । रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेन्मास्तु रूपशब्दप्रयोगस्तथापि नीलपीतादिष्वनुगत-ज़ातिविशेषोऽनुभवसिद्ध एव । रूपशब्दाप्रयोगेऽपि नीलो वर्णः पीतो वर्ण इति वर्णविशेषोल्लेखिनी प्रतीतिरस्त्येव । एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम् । न चैकैका एव नीलरूपादिव्यक्तय इत्येकव्यक्तिवृत्तित्वा-न्नीलत्वादिकं न जातिरिति वाच्यम् । नीलो नष्टो रक्त उत्पन्न इत्यादि-प्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात्, अन्यथा एकनील-

विवृतिः ।

अव्याप्यवृत्तिरिति । किञ्चिदवच्छेदेन वृत्तिरिति यावत् ॥९७॥९८॥९९॥

मास्तु रूपशब्दप्रयोग इति । रूपशब्दप्रयोगे रूपशब्दोल्लेखन्याः प्रतीतेरेव हेतुत्वादिति भावः । अनुभवसिद्ध एवेति । अनुभव-सिद्धस्य चापलापानर्हत्वम् । वर्णविशेषोल्लेखनी प्रतीतिरस्त्येवेति । साक्षाद्रूपशब्दप्रयोगे न नो निर्बन्धः किंतु रूपशब्दपर्य्यायवाचिवर्ण-शब्दोल्लेखनीं प्रतीतिं को निन्होतुमीष्टे, न कोऽपीति चेत्–सिद्धं नः समीहितमिति भावः । नीलत्वादिकमिति । रूपत्वव्याप्यनीलत्वा-दिजातिरित्यर्थः । एकव्यक्तिवृत्तित्वान्नीलत्वादिकं न जातिरिति । व्यक्तेरभेदस्योक्तप्रामाण्येन जातिबाधकत्वादिति भावः । विपक्षे दो-षमाह–अन्यथेति । नीलादीनामेकव्यक्तित्वाङ्गीकार इत्यर्थः । असौ प्रत्ययः–नीलो नष्टो रक्त उत्पन्न इति प्रत्ययः, नीलसमवायनाशो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नाशे जगदनीलमापद्येत। न च नीलसमवायरक्तसमवाययोरेवोत्पाद-
विनाशविषयकोऽसौ प्रत्यय इति वाच्यम्। प्रतीत्या समवायानुल्लेखात्।
न च स एवायं नील इति प्रत्ययाल्लाघवाच्चैक्यमिति वाच्यम्। प्रत्यक्षस्य
तज्जातीयविषयकत्वात्, सैवेयं गुर्जरीतिवत्। लाघवं तु प्रत्यक्षबा-
धितम्, अन्यथा घटादीनामप्यैक्यप्रसङ्गात्-उत्पादविनाशबुद्धेः सम-
वायावलम्बनत्वापत्तेरिति। एतेन रसादिकमपि व्याख्यातम्। चक्षुर्ग्राह्य-
मिति। चक्षुर्ग्राह्यविशेषगुणत्वमित्यर्थः। एवमग्रेऽपि। द्रव्यादेरिति।
उपलम्भकमुपलब्धिकारणम्।

इदमेव विवृणोति चक्षुष इति। द्रव्यगुणकर्मसामान्यानां
चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम्। शुक्लादिकमनेकधेति।
तच्च रूपं शुक्लनीलपीतरक्तहरितकपिशकर्बुरादिभेदादनेकप्रकारकं भव-
ति। ननु कथं कर्बुरमतिरिक्तरूपं भवति? इत्थं—नीलपीताद्यवयवार-

विवृतिः।

रक्तसमवायोत्पाद इति क्रमः। प्रतीत्या समवायानुल्लेखादिति। नीलो
नष्ट इत्यादिप्रत्ययेन समवायावगाहनस्य कर्तुमशक्यत्वादिति भावः।
ऐक्यमिति। नीलपीतादिव्यक्तेरेकत्वमेवेत्यर्थः। तज्जातीयविषयत्वात्-
समानजातीयविषयत्वात्। सैवेयमिति। या गुर्जरदेशोद्भवौषधि-
क्षेत्रेण भक्षिता सैवेयं मयापि भक्षितेति व्यक्तिभेदेऽप्यंतद्व्यपदेशस्या-
निर्वाधत्वादिति। लाघवं तु—नीलपीतादिव्यक्त्यैक्यरूपमित्यर्थः। प्र-
त्यक्षबाधितम्—नीलो नष्ट इत्यादि चाक्षुषज्ञानेनैव बाधितम्, अन्य-
था—नीलादीनामेकत्वस्य लाघवमात्रेण स्वीकारे। समवायेति।
घटपटादिसमवायेत्यर्थः। एतेन—ईदृशजातिबाधकप्रमाणेन। व्या-
ख्यातमिति। एवं च रसत्वादीनामप्येकत्वमुक्तरीत्या शोपेयमिति भावः।
चक्षुर्ग्राह्यविशेषगुणत्वमित्यर्थं इति। इदं च रूपस्य लक्षणम्। एवं
अग्रेऽपीति। रसस्पर्शलक्षणेऽपि सरणिरियमनुसरणीयेत्यर्थः।

उद्भूतरूपं कारणमिति। बहिर्द्रव्यचाक्षुषप्रत्यक्षे रूपस्य हेतु-
तया रूपं विना तत्सर्वमेवानध्यक्षमिति भावः। अनेकप्रकारक-
मिति। सप्तविधमित्यर्थः—तथैवानुभवात्। व्याप्यवृत्तीति। सर्वावय-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ब्धोऽवयवी न तावन्नीरूपोऽप्रत्यक्षप्रसङ्गात्। नापि व्याप्यवृत्ति नीलादिरूपमुत्पद्यते—पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात्। नाप्यव्याप्यवृत्ति नीलादिकमुत्पद्यते—व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात्। तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्रं रूपमारभ्यते। अत एवैकं चित्रमित्यनुभवोऽपि। नानारूपकल्पने गौरवात्। इत्थं च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनादवयविनि न पीताद्युत्पत्तिः। एतेन स्पर्शोऽपि व्याख्यातः। रसादिकमपि नाव्याप्यवृत्ति, किंतु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः। तत्र रसनयाऽवयवरस एव गृह्यते, रसनेन्द्रियादीनां द्रव्यग्रहे सामर्थ्याभावात्, अवयविनो नीरसत्वेऽपि क्षतेरभावात्।

नव्यास्तु तत्राव्याप्यवृत्त्येव नानारूपं—नीलादेः पीतादिप्रतिब-

विवृतिः।

वावच्छेदेनेत्यर्थः। पीतावच्छेदेनापीति। अपिना नीलावच्छेदेन पीतस्य पीतावच्छेदेन नीलस्येत्यर्थो व्यज्यते। तर्हि अव्याप्यवृत्तिनीलादिकमेवोत्पद्यतामित्याशंकां परिहरति—नाप्यव्याप्यवृत्तीति। किञ्चिदवयवावच्छेदेनेत्यर्थः। नानेति। अवयवगतनीलपीतादिनानेत्यर्थः। अवयविनि—चित्रावयविनि, विजातीयं—विलक्षणम्, अतएव—चित्ररूपस्वीकारादेव। अनुभवोऽपीति। अनुभवसिद्धस्य चापलापानर्हत्वमिति भावः। गौरवादिति। गौरवं चात्रोपस्थितिकृतं बोध्यम्। इत्थं च—उक्तलाघवेन चित्ररूपसिद्धौ च, एतेन—चित्ररूपव्याख्यानेन, स्पर्शोऽपि—चित्रस्पर्शोऽपि, व्याख्यातः—अवश्यमङ्गीकर्तव्य इति निष्कर्षः। रसाभावेऽपि—चित्ररसाभावेऽपि, तत्र—नानाजातीयरसवदवयवैरारब्धेऽवयविनि। रसनयेति। रसना—जिह्वा 'रसज्ञा रसना जिह्वे'ति केशवः।

चित्ररूपमनङ्गीकुर्वतां मणिकृदादीनां मतं प्रदर्शयति—नव्यास्त्विति। तत्र—चित्रावयविस्थले। शास्त्रमपीति। यदि चित्ररूपं पृथगभविष्यत्तदात्र चित्रमित्यपि विशेषणमदास्यद्दानाभावान्नास्तीत्यत्र स्कन्द-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्धकत्वकल्पने गौरवात्। अत एव--

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते।

इत्यादिशास्त्रमप्युपपद्यते। न च व्याप्याऽव्याप्यवृत्तिजातीययोर्द्वयोर्विरोधः—मानाभावात्। न च लाघवादेकं रूपम्-अनुभवविरोधात्, अन्यथा घटादेरपि लाघवादैक्यं स्यात्। एतेन स्पर्शादिकमपि व्याख्यातमिति वदन्ति ॥ १०० ॥

**जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम्।**

जलादीति। जलपरमाणौ तेजःपरमाणौ च रूपं नित्यम्। पृथिवीपरमाणुरूपं तु न नित्यं तत्र पाकेन रूपान्तरोत्पत्तेः, नहि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते, नहि रक्तकपालस्य कपालिका नीलावयवा भवति। एवंक्रमेण परमाणावपि पाकसिद्धेः। अन्यज्जलतेजःपरमाणुरूपभिन्नं रूपं सहेतुकं जन्यम्।

रसं निरूपयति--

**रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥**
**सहकारी रसज्ञाया नित्यतादि च पूर्ववत्।**

विवृतिः।

पुराणमपि प्रमाणमिति भावः। ननु व्याप्यवृत्त्यव्याप्यवृत्तिजातीययोस्तु परस्परं तेजस्तिमिरवद्विरोध इत्याशंक्य समाधत्ते—न चेति। अनुभवविरोधादिति। 'अयं नीलादिनानावर्णयुक्तोवयवी'त्यनुभवविरोधादित्यर्थः। अन्यथेति। अनुभवविरुद्धलाघवाङ्गीकारे इत्यर्थः ॥ १०० ॥

तत्र—पृथिवीपरिमाणौ, पाकेन—अग्निसंयोगेन, तदवयवो—घटावयवः। रक्तकपालस्येति। अग्निसंयोगेनेति शेषः। परमाणावपि—पार्थिवपरमाणावपि। जन्यमिति। अग्निसंयोगादिजन्यमित्यर्थः। अनित्यमिति यावत्। तथा चाह भगवान् कणादः—'पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्या नित्यत्वादनित्याश्च' ॥

मूले मधुरादिरिति। आदिनाम्ललवणकटुकषायतिक्तरसा गृह्यन्ते।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रसस्त्विति । सहकारीति । रासनज्ञाने रसः कारणमित्यर्थः । पूर्ववदिति । जलपरमाणौ रसो नित्योऽन्यः सर्वोऽपि रसोऽनित्य इत्यर्थः ।

गन्धं निरूपयति—

**घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥**

घ्राणग्राह्य इति । उपकारक इति । घ्राणजन्यज्ञाने कारणमित्यर्थः । सर्वोऽपि गन्धोऽनित्य एव ॥ १०१ ॥ १०२ ॥

**सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः ।**

स्पर्शं निरूपयति—

**स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥१०३॥**

स्पर्श इति । उपकारक इति । स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः ॥ १०३ ॥

**अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः ।**
**काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥ १०४ ॥**

अनुष्णाशीतेति । पृथिव्यां वायौ च स्पर्शोऽनुष्णाशीतः । जले शीतः । तेजस्युष्णः । काठिन्येति । कठिनसुकुमारस्पर्शौ पृथिव्यामेवेत्यर्थः । कठिनत्वादिकं तु न संयोगगतो जातिविशेषः—चक्षुर्ग्राह्यत्वापत्तेः । पूर्ववदिति । जलतेजोवायुपरमाणुस्पर्शा नित्यास्तद्भिन्नास्त्वनित्या इत्यर्थः ॥ १०४ ॥

विवृतिः ।

तत्र मधुरमिक्ष्वादौ आम्लं जम्बीरादौ लवणः सैन्धवादौ तिक्तः पिचुमर्दादौ कषायः पूगीफलादौ कटुर्मरीचादावित्यनुभवः । रासनज्ञाने—रासनप्रत्यक्षे, सर्वोपि—पृथिवीपरमाणुजन्यजलपृथिवीगत इत्यर्थः ।
सर्वोऽपि गन्धोऽनित्य एवेति । आश्रयानित्यत्वादिति भावः । अत्र यदुवक्तव्यं तत्प्रागवोचाम ॥ १०१—१०४ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित् ।
तत्रापि परमाणौ स्यात्पाको वैशेषिके नये ॥ १०५ ॥

एतेषामिति । एतेषां रूपरसगन्धस्पर्शानां नान्यत्रेति । पृथिव्यां हि रूपरसगन्धस्पर्शपरावृत्तिरग्निसंयोगादुपलभ्यते । नहि शतधापि ध्यायमाने जले रूपादिकं परिवर्तते । नीरे सौरभमौष्ण्यं चान्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते, पवनपृथिव्योः शीतस्पर्शादिवत् । तत्रापि–पृथिवीष्वपि मध्ये, परमाणावेव रूपादीनां पाक इति वैशेषिका वदन्ति । तेषामयमाशयः । अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवति परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः । पुनश्च पक्वपरमाणुसंयोगाद्द्व्यणुकादिक्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः । तेजसामतिशयितवेगवशात्पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति । अत्र द्व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद्भवतीति शिष्यबुद्धिवैशद्यार्थं क्षणप्रक्रिया । तत्र विभागजविभागानङ्गीकारे नवक्षणा । तदङ्गीकारे तु विभागः क्रि-

विवृतिः ।

अन्वयव्यतिरेकाभ्यामिति । पृथिव्याः सत्त्वे सौरभप्रतीतेः सत्त्वमभावे च सौरभप्रतीतेरभाव इत्यन्वयव्यतिरेकौ । ननु क्व एतद्दृष्टमित्यत्राह–पवनपृथिव्योरिति । यथा पवने पृथिव्यां च शीतस्पर्श औपाधिको न वस्तुतस्तयोरनुष्णाशीतस्पर्शस्य पूर्वमेव निर्धारितत्वात्तथैवानुभवाच्च तथा नीरेऽपि तद्धिति भावः । परमाणावेवेति । न तु कारणसमुदायः पच्यते नैय्यायिकवत् तत्रैव च पूर्वरूपनाशाग्रिमरूपाद्युत्पत्तिः कारणगुणक्रमेण चावयविनि रूपाद्युत्पद्यते इति । पाकः–परावृत्तिः । तेषां–वैशेषिकाणाम्, अयं–वक्ष्यमाणः, अवयविना–घटादिना, अवयवेषु–कपालादिषु, स्वतन्त्रेषु–कार्यद्रव्यध्वंसविशिष्टेषु, महावयवी–घटादिः, व्यूहः–संस्थानम् । तत्र–क्षणप्रक्रियायाम् । नव क्षणा इति । नवक्षणेषु रूपादिमद्भवतीत्यर्थं एवमग्रेऽपि बोध्यम् । तदङ्गीकारे तु–विभागजविभागाङ्गीकारे तु, तत्त्वे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



क्षित्सापेक्षो विभागं जनयेत्, निरपेक्षस्य तत्त्वे कर्मत्वं स्यात्। 'संयोगविभागयोरनपेक्षं कारणं कर्मेति' वैशेषिकसूत्रम्। स्वोत्तरोत्पन्नभावान्तरानपेक्षत्वं तस्यार्थः। अन्यथा कर्मणोऽप्युत्तरसंयोगोत्पत्तौ पूर्वसंयोगनाशापेक्षणादव्याप्तिः स्यात्। तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदा दशक्षणा। अथ द्रव्यनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदैकादशक्षणा।

तथा हि अथ नवक्षणा। वह्निसंयोगात्परमाणौ कर्म। ततः परमाण्वन्तरेण विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशः। १। ततः परमाणौ श्यामादिनाशः। २। ततो रक्ताद्युत्पत्तिः। ३। ततो द्रव्यारम्भानुगुणा क्रिया। ४। ततो विभागः। ५। ततः पूर्वसंयोगनाशः। ६। तत आरम्भकसंयोगः। ७। ततो द्व्यणुकोत्पत्तिः। ८। ततो रक्ताद्युत्पत्तिः। ९। ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणा क्रियास्त्विति चेन्न। अग्निसंयुक्ते परमाणौ यत्कर्म तद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च परमाणौ क्रियान्तराभावात्कर्मवति कर्मान्तरानुत्पत्तेर्निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च। तथापि परमाणौ श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादिति चेन्न। पूर्वरूपादिध्वंसस्यापि रूपान्तरं हेतुत्वात्। इति नवक्षणा।

विवृतिः।

विभागजनकत्वे। कर्मत्वं स्यादिति। अविशेषात्कर्मलक्षणस्य तत्रातिव्याप्तिः स्यादित्यर्थः। स्वोत्तरेति। स्वपदेनात्र कर्मणो ग्रहणम्। तस्यार्थः—वैशेषिकसूत्रस्यार्थः। द्रव्यारम्भकेति। द्व्यणुकादिद्रव्यारम्भकेत्यर्थः।

परमाण्वन्तरेण—द्व्यणुकारम्भकपरमाण्वन्तरेण। आरम्भकेति। द्व्यणुकारंभकेत्यर्थः। ततो रक्तादीति। ततः—तृतीयक्षणे। रक्ताद्युत्पत्तिरिति। परमाणुष्विति शेषः। चेदित्यन्तं शङ्काग्रन्थः। नेत्यादिना परिहरति॥ रूपान्तरं—रूपान्तरोत्पत्तौ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अथ दशक्षणा । सा च आरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात् । तथा हि—वह्निसंयोगाद्द्व्यणुकारम्भके परमाणौ कर्म । ततो विभागः । तत आरम्भकसंयोगनाशः । ततो द्व्यणुकनाशविभागजविभागौ । १ । ततः श्यामनाशपूर्वसंयोगनाशौ । २ । ततो रक्तोत्पत्त्युत्तरसंयोगौ । ३ । ततो वह्निनोदनजन्यपरमाणुकर्मणो नाशः । ४ । ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारम्भानुगुणा क्रिया । ५ । ततो विभागः । ६ । ततः पूर्वसंयोगनाशः । ७ । तत आरम्भकसंयोगः । ८ । ततो द्व्यणुकोत्पत्तिः । ९ । ततो रक्तोत्पत्तिः । १० ।

अथैकादशक्षणा । वह्निसंयोगात्परमाणौ कर्म । ततो विभागः । ततो द्रव्यारम्भकसंयोगनाशः । ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागश्यामनाशौ । २ । ततः पूर्वसंयोगनाशरक्तोत्पत्ती । ३ । तत उत्तरसंयोगः । ४ । ततो वह्निनोदनजन्यपरमाणुकर्मनाशः । ५ । ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारम्भानुगुणा क्रिया । ६ । ततो विभागः । ७ । ततः पूर्वसंयोगनाशः । ८ । ततो द्रव्यारम्भकोत्तरसंयोगः । ९ । ततो द्व्यणुकोत्पत्तिः । १० । ततो रक्ताद्युत्पत्तिः । ११ । इति । मध्यमशब्दवदेकस्मादग्निसंयोगान्न रूपनाशोत्पादौ तावत्कालमेकस्याग्नेरास्थिरत्वात् किञ्च । नाशक एव यद्युत्पादकस्तदा नष्टे रूपादावग्निनाशे नीरूपश्चिरं परमाणुः स्यात् । उत्पादकश्चेन्नाशकस्तदा रक्तोत्पत्तौ तदग्निनाशे रक्ततरता न स्यात् ।

अथ परमाण्वन्तरे कर्मचिन्तनात्पञ्चमादिक्षणेऽपि गुणोत्पत्तिः ।

विवृतिः ।

विभागेन विभागजनने—विभागजविभागाङ्गीकारे ।

मध्यमशब्दवदिति । मध्यमशब्दाद्यथा पूर्वशब्दनाशे भवत्युत्तरशब्दप्रसवस्तथेत्यर्थः । अग्नेः—द्व्यणुकनाशकाङ्क्षसंयोगस्य । रक्ततरता न स्यादिति । अनुभूयते च साऽतः श्यामादिनाशको रक्ता-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तथाहि—एकत्र परमाणौ कर्म । ततो विभागः । तत आरम्भकसंयोग-नाशपरमाण्वन्तरकर्मणी । ततस्तु द्व्यणुकनाशः । परमाण्वन्तरकर्मजन्यविभाग इत्येकः कालः । १ । ततः श्यामादिनाशो विभागाच्च पूर्वसंयोगनाशश्चेत्येकः कालः । २ । ततो रक्तोत्पत्तिर्द्रव्यारम्भकसंयोगश्चेत्येकः कालः । ३ । अथ द्व्यणुकोत्पत्तिः । ४ । ततो रक्तोत्पत्तिरिति । ५ । पञ्चक्षणा । द्रव्यनाशसमकालं परमाण्वन्तरे कर्मचिन्तनात्षष्ठे गुणोत्पत्तिः—तथाहि—परमाणुकर्मणा परमाण्वन्तरविभागः । तत आरम्भकसंयोगनाशः अथ द्व्यणुकनाशपरमाण्वन्तरकर्मणी । १ । अथ श्यामादिनाशः परमाण्वन्तरे कर्मजो विभागश्च । २ । ततो रक्तोत्पत्तिः परमाण्वन्तरे पूर्वसंयोगनाशश्च । ३ । ततः परमाण्वन्तरसंयोगः । ४ । ततो द्व्यणुकोत्पत्तिः । ५ । अथ रक्तोत्पत्तिरिति । ६ । षट्क्षणा । एवं श्यामनाशक्षणे परमाण्वन्तरे कर्मचिन्तनात्सप्तक्षणा तथाहि—परमाणौ कर्म ततः परमाण्वन्तरेण विभागः । तत आरम्भकसंयोगनाशः । ततो द्व्यणुकनाशः । १ । ततः श्यामादिनाशपरमाण्वन्तरकर्मणी । २ । ततो रक्तोत्पत्तिः परमाण्वन्तरे कर्मजविभागश्च । ३ । ततः परमाण्वन्तरेण पूर्वसंयोगनाशः । ४ । ततः परमाण्वन्तरेण संयोगः । ५ । ततो द्व्यणुकोत्पत्तिः । ६ । ततो रक्तोत्पत्तिः । ७ । इति सप्तक्षणा । एवं रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्मचिन्तनादष्ट क्षणा । तथाहि—परमाणौ कर्म । ततः परमाण्वन्तरे विभागः । तत आरम्भकसंयोगनाशः । ततो द्व्यणुकनाशः । १ । ततः श्यामनाशः । २ । ततो रक्तोत्पत्तिपरमाण्वन्तरकर्मणी । ३ । ततः परमाण्वन्तरकर्मजविभागः । ४ । ततः परमाण्वन्तरे पूर्वसंयोगनाशः । ५ । ततः परमाण्वन्तरे संयोगः । ६ । ततो द्व्यणुकोत्पत्तिः । ७ । अथ रक्तोत्पत्तिरित्यष्टक्षणा ॥ १०५ ॥

विवृतिः ।

द्युत्पादकश्चाग्निसंयोगो भिन्न एवेत्यभिप्रायः । पञ्चमादित्यत्रादिपदं षष्ठसप्तमाष्टमक्षणान् परिगृह्णाति ॥ १०५ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नैयायिकानां तु नये द्व्यणुकादावपीष्यते ।

नैयायिकानामिति । नैयायिकानां मते द्व्यणुकादाववयविन्यपि पाको भवति । तेषामयमाशयः । अवयविनां साच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्ठब्धेष्वपि पाको न विरुध्यते—अनन्तावयवितन्नाशकल्पने गौरवात् । इत्थं च सोऽयं घट इत्यादिप्रत्यभिज्ञाऽपि संगच्छते । यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियते इति ।

संख्यां निरूपयितुमाह—

गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥ १०६ ॥

विवृतिः ।

नैयायिकानां न्यायमधीयते विदन्ति वा नैयायिकाः 'क्रतुकथादि' इति ठक् पिठरपाकवादिनाम्, अवयविन्यपीत्यपिशब्दात्परमाणावपि । सच्छिद्रत्वादिति । सच्छिद्राण्येवावयविद्रव्याणि कथमन्यथा कुम्भादावन्तर्निहितानां तैलघृतादीनां स्पन्दनं श्रपणमवं च मध्यभागेपि तेजःसंयोगः । सच्छिद्रत्वेऽवयविनामङ्गीकृते तन्मध्येऽग्निप्रवेशसम्भवादवयविनमारभ्य परमाणुपर्यन्तं पाको निर्विरोधः । असंख्यावयविनाशप्रसवकल्पे गौरवापातः । इत्थं च—अवयविनाशानभ्युपगमे च । प्रत्यभिज्ञापीति । तन्मते द्रव्यनाशस्य स्वीकर्तुमशक्यत्वादिति भावः ।

संख्यां निरूपयितुमाहेति । ननु परिमाणसंख्ययोः पृथङ्निरूपणं व्यर्थं परिमीयते परिच्छिद्यते येन तत्परिमाणं संख्ययापि च परिच्छिद्यते इति सापि परिमाणमेवेति चेत्, अत्र श्लोकवार्तिकम्—

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ॥

तुलादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादेर्गुरुत्वमुन्मीयते तदुन्मानम् । येन काष्ठादिनिर्मितेन व्रीह्यादिः परिमीयते तत्परिमाणं प्रस्थादि । आयामो दैर्घ्यं स येन मीयते तत्प्रमाणं यथा वस्त्रादेर्हस्तादिः । संख्या तु उन्मानपरिमाणप्रमाणेभ्यः पलादिप्रस्थादिहस्तादिभ्यस्त्रिभ्यो बहिर्भूता एकत्वद्वित्वादिरिति तदर्थः । गणनाव्यवहारेति । अयमेक

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गणनेति । गणनाव्यवहारासाधारणकारणं संख्येत्यर्थः ॥१०६॥

नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।
द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०७ ॥

नित्येष्विति । नित्येषु परमाण्वादिषु एकत्वं नित्यम् । अनित्ये घटादावेकत्वमनित्यमित्यर्थः । द्वित्वादयो व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्याः ॥ १०७ ॥

अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः ।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥ १०८ ॥

अनेकेति । यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्तते- तथाप्येको द्वाविति प्रत्ययाभावात् एको न द्वाविति प्रत्ययसंभवाच्च द्वित्वादीनां पर्याप्तिलक्षणः कश्चन संम्बन्धोऽनेकाश्रयोऽभ्युपगम्यते ।

विवृतिः ।

इमौ द्वाविमे बहव इत्यादिर्यो गणनाव्यवहारस्तस्यासाधारणकारणं संख्येत्यर्थः । कालादावतिप्रसङ्गव्युदासार्थमसाधारणपदमेवमन्य- दप्यूहनीयम् ॥ १०६ ॥

एकत्वस्य नित्यानित्यत्वविषयतां दर्शयति नित्येषु परमाण्वा- दिष्विति । एकत्वं नित्यमिति । आश्रयनित्यत्वादित्यर्थः । एवमनित्ये- ऽनित्यमाश्रयानित्यत्वात् ।

मूले द्वित्वादयः परार्धान्ता इति । सर्वेषामपि चैतत्स्वी- कार आवश्यकः । तदेतत्स्पष्टीचकार 'पारे परार्धं गणना यदि स्या'दित्यादिना श्रीहर्षः । द्वित्वादीनामनित्यत्वसाधन- मवशिष्यते । तथाहि—द्वित्वादय इति । द्वित्रिचतुरादिका । परार्ध- पर्यन्ता इत्यर्थः । व्यासज्यवृत्तिसंख्याः—धर्मद्वयसमनियतवृत्तिसं- ख्याः । अपेक्षाबुद्धिजन्या इति । तत एवानित्या इत्यर्थः ॥ १०७ ॥

वर्तते—समवायेनेति । तथा चानेकाश्रयपर्याप्तेति मूलासङ्गति- रिति भावः । पर्याप्तिलक्षणः—पर्याप्तिनामकः, 'लक्षणं नाम्नि चिन्हे चे'ति विश्वप्रकाशः । पर्याप्तिश्च—अयमेक इमौ द्वाविति प्रतीतिसाक्षि- कः स्वरूपसम्बन्धविशेष इति गदाधरः । अनेकाश्रय इति । एकभि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रथममपेक्षाबुद्धिः, ततो द्वित्वोत्पत्तिः, ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पात्मकम् । ततो द्वित्वत्वविशिष्टप्रत्यक्षम्, अपेक्षाबुद्धिनाशश्च । ततो द्वित्वनाश इति । यद्यपि ज्ञानानां द्विक्षणमात्रस्थायित्वं–योग्याविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात् । तथाप्यपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं कल्प्यते । अन्यथा निर्विकल्पकालेऽपेक्षाबुद्धिनाशानन्तरं द्वित्वस्यैव नाशः स्यान्न तु द्वित्वप्रत्यक्षं–तदानीं विषयाभावात् । विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात् । तस्माद्द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धिनाशकं कल्प्यते । न चापेक्षाबुद्धिनाशात्कथं द्वित्वनाश इति वाच्यम् । कालान्तरे द्वित्वप्रत्यक्षाभावात् । अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशात्तन्नाश इति कल्पनात् । अत एव तत्पुरुषीयापेक्षाबुद्धिजन्याद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते । न चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षे कारणत्वमस्त्विति वाच्यम् । लाघवेन द्वित्वं प्रत्येव कारणत्वस्यैवोचितत्वात् । अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनाम् । सर्गादिकालीनपरमाण्वादावीश्वरीयापेक्षाबुद्धिर्ब्रह्माण्डान्तरवर्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति ॥ १०८ ॥

विवृतिः ।

न्नमनेकामिति कृत्वोभयाद्याश्रय इत्यर्थः । प्रथममिति । प्रथमक्षण इत्यर्थः । द्वित्वोत्पत्तिरिति । घटद्वयादाविति शेषः । इतीति पञ्चक्षणा इत्यर्थः । अन्यथा—अपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वकल्पनाया अस्वीकारे, निर्विकल्पककाले—द्वित्वत्वनिर्विकल्पकरूपज्ञानकाले । द्वित्वस्यैवेति । अत्रैवकारो भिन्नक्रमः तेन च द्वित्वस्य नाश एवेत्यर्थो विज्ञेयः । विषयाभावात्–द्वित्वात्मकविषयाभावात्, कालान्तरे–अपेक्षाबुद्ध्यभावकाले । तदुत्पादिकेति । द्वित्वोत्पादिकेत्यर्थः । तन्नाशात्–अपेक्षाबुद्धिनाशात् । तन्नाशः–द्वित्वादिनाशः । अत एवेति । पूर्वोक्तयुक्त्यापेक्षाबुद्धेर्द्वित्वोपादकत्वस्यावश्यकत्वादेव । तेनैव गृह्यत इति । तद्भिन्नेन न गृह्यत इति कल्प्यते इत्यर्थः । लाघवेनेति । द्वित्वप्रत्यक्षत्वापेक्षया द्वित्वत्वस्य कार्यतावच्छेदकस्य लघुत्वादिति भाव इति प्रकाशकृतः ॥ १०८ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अपेक्षाबुद्धिः केत्यत आह —

**अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरिष्यते ।**

अनेकैकत्वेति । अयमेकोऽयमेक इत्याकारिका इत्यर्थः । इदं तु बोध्यम् । यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते, यथा सेनावनादाविति कन्दलीकारः । आचार्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते । तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नातिरिच्यते । सेनावनादावुत्पन्नेऽपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात् । इत्थं चेतो बहुतरेयं सेनेति प्रतीतिरुपपद्यते, बहुत्वस्य संख्यान्तरत्वे तु तत्तारतम्याभावान्नोपपद्येतेत्यवधेयम् ॥

परिमाणं निरूपयति—

**परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥ १०९ ॥**

विवृतिः ।

नन्वपेक्षाबुद्धिरेवाप्रामाणिकी 'लक्षणप्रमाणाभ्यामेव वस्तुसिद्धिर्भवति नान्यथे'त्यभियुक्तव्यवहारादित्यतस्तामेव लक्षयितुकामस्येदमभिधानमपेक्षाबुद्धिः केति । अनेकैकत्वेतीति । अनेकेषामेकत्वानामवगाहिनीत्यर्थः । अयमेकोऽयमेक इति । घटद्वयसंनिकर्षानन्तरं यदयमेकोऽयमेको इति ज्ञानं जन्यते तदेवापेक्षाबुरिति भावः । अनियतैकत्वज्ञानमिति । एकत्वज्ञानमनियतमित्यर्थः । बहुत्वसंख्योत्पद्यत इति । तादृशस्थले नियतापेक्षाबुद्ध्यभावाद्बहुत्वमात्रमूह्यते न तु शतसहस्रादिसंख्येति तदाशयः । ननु क्वैतद्दृष्टमित्यत्राह—यथेति । ननु क इदमभिप्रैतीत्यत्राह—कंदलीकार इति । कन्दली न्यायकन्दली ( प्रशस्तभाष्यटीकां ) तत्कर्ता श्रीधरपण्डित इत्यर्थः । आचार्यास्तु—उदयनाचार्यास्तु । त्रित्वादिकमेव बहुत्वमिति । त्रित्वादिविलक्षणस्य बहुत्वस्याननुभवादिति भावः । दोषात्—नियतानेकैत्वज्ञानाभावात् , इतः—सेनातः । उपपद्यत इति । इतो बहुतरेत्यत्र बहुत्वे स्वसमानजातीयनिरूपितस्योत्कर्षस्य प्रतीतिर्निराबाधैवेत्यर्थः । संख्यान्तरत्वे—त्रित्वादिभ्यः पृथक्संख्यात्वे । नोपपद्येतेति । प्रतीतिरित्यनुषज्यते ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



परिमाणमिति । परिमितिव्यवहारासाधारणं कारणं परिमाणमित्यर्थः ॥ १०९ ॥

अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।

तच्चतुर्विधं–अणु महद् दीर्घं ह्रस्वं चेति ।

अनित्ये तदनित्ये स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥

संख्यातः परिमाणाच्च प्रचयादपि जायते ।

तत्परिमाणम् । नित्यमित्यत्र परिमाणमित्यनुषज्यते । जायत इत्यत्रापि परिमाणमित्यनुवर्तते । अनित्यमिति पूर्वेणान्वितम् । तथा चानित्यपरिमाणं संख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः ।

तत्र संख्याजन्यमुदाहरति––

अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥ १११ ॥

अनित्यमिति । द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणं–परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात् । द्व्यणुकस्याणुपरिमाणं तु परमाण्वणुत्वापेक्षया नोत्कृष्टम् । त्रसरेणुपरिमाणं तु न सजातीयम् । अतः परमाणौ द्वित्वसंख्या द्व्यणुकपरिमाणस्य द्व्यणुके त्रित्वसंख्या च त्रसरेणुपरिमाणस्यासम-

विवृतिः ।

परिमितीति । परिमितेर्यो व्यवहार इदमणु इदं महदित्यात्मकस्तस्यासाधारणं कारणं परिमाणमित्यर्थः । कालादीनां व्युदासार्थमसाधारणं शब्दत्वस्य च कारणमिति बोध्यम् ॥ १०९ ॥

तत्–परिमाणम् । प्रसिद्धिसिद्धमपि चातुर्विध्यं स्पष्टार्थमुल्लिखति । अणु महदिति । अत्राणुत्वह्रस्वत्वयोर्महत्त्वदीर्घत्वयोश्च समनियतत्त्वं, न च ह्रस्वत्वदीर्घत्वयोरणुत्वमहत्त्वरूपतैवास्तु कृतं चातुर्विध्येनेति शक्यमभिधातुं तदवधिकमहत्तयाऽव्यवह्रियमाणेऽपि तदवधिकदीर्घत्वव्यवहारादेवमन्यदप्यूह्यम् । फलितार्थमाह––तथाचेति ।

अकारणत्वे हेतुमुपन्यसति परिमाणस्येति । स्वसमानेति । स्वं–परिमाणम् । उक्तमेवार्थं विशदयति––द्व्यणुकस्येत्यादिना । प-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वायिकारणमित्यर्थः ॥ ११० ॥ १११ ॥

परिमाणजन्यं परिमाणमुदाहरति--

परिमाणं घटादौ तु परिमाणजमुच्यते ।

परिमाणं घटादाविति । घटादिपरिमाणं कपालादिपरिमाणजन्यम् ।

प्रचयजन्यमुदाहर्तुं प्रचयं निर्वक्ति--

प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ ११२ ॥

परिमाणं तूलकादौ--

प्रचय इति ॥ ११२ ॥

परिमाणं चाश्रयनाशादेव नश्यतीत्याह--

नाशस्त्वाश्रयनाशतः ।

नाश इति । अर्थात्परिमाणस्यैव । न चावयवनाशः कथं परिमाणनाशकः ? सत्यप्यवयविनि त्रिचतुरादिपरमाणुविश्लेषे तदुपचये चावयविनः प्रत्यभिज्ञानेपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम् । परमाणुविश्लेषे हि द्व्यणुकस्य नाशोऽवश्यमभ्युपेयस्तन्नाशे च त्रसरेणुनाशः, एवंक्रमेण महावयविनो नाशस्यावश्यकत्वात् । सति च नाशकेऽनभ्युपगममात्रेण

विवृतिः ।

रमाणौ द्वित्वसंख्येति । परमाणुद्वयगतद्वित्वसंख्येत्यर्थ एवमेव द्व्यणुके त्रित्वसंख्येत्यत्रापि बोध्यम् ॥ ११० ॥ १११ ॥

प्रचय इतीति । तत्त्वं चावयवगतो जातिविशेषः । इदमेव प्रशिथिलत्वमुच्यते ॥ ११२ ॥

परिमाणस्यैवेति । न गुणान्तरस्येत्येवकारार्थः । परिमाणाश्रयस्य द्रव्यस्य नाशात्परिमाणनाश इत्यत्र केषामपि विप्रतिपत्तेरभावादिति भावः । अवयविनि--पटादौ, परमाणुः--तन्तुः । प्रत्यभिज्ञाने इति । अयं स एव पटः इत्याकारके इत्यर्थः । प्रत्यक्षसिद्धत्वादिति । अत्रावयविनाशरूपकारणाभावेऽपि परिमाणनाशरूपकार्यप्रतीतेर्व्यतिरेकव्यभिचार इति भावः । तन्नाशे--द्व्यणुकनाशे, नाशस्य--अवयविनाशस्य । असमवायिकारणनाशस्येति । हस्ताद्यवयवसंयोगनाशस्येत्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नाशस्यापलपितुमशक्यत्वात् । शरीरादाववयवोपचयेऽसमवायिकारण-नाशस्यावश्यकत्वादवयविनाश आवश्यकः । न च पटादिविनाशेऽपि तन्त्वन्तरसंयोगात्परिमाणाधिक्यं न स्यादिति वाच्यम् । तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशात्पटनाशस्यावश्यकत्वात् । किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात्तन्त्वन्तररूपकारणाभावात् । तन्त्वन्तरस्यावयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत् । तस्मात्तत्र तन्त्वन्तरसंयोगे सति पूर्वपटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्यम् । अवयविनः प्रत्यभिज्ञानं तु साजात्येन दीपकलिकादिवत् । न च पूर्वतन्तव एव तन्त्वन्तरसहकारात्पूर्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यम् । मूर्तयोः समानदेशताविरोधात्तत्र पटद्वयासंभवादेकदा नानाद्रव्यस्य तत्रोपलम्भस्य वाधितत्वाच्च । तस्मात्पूर्वद्रव्यस्य प्रतिवन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यवश्यमभ्युपेयत्वात् ।

पृथक्त्वं निरूपयति —

संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥ ११३ ॥
अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते ।
अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥ ११४ ॥

विवृतिः ।

र्थः । पटादिविनाशेऽपि—त्रिचतुरादिपरमाणुविश्लेषेऽपि सतीति तात्पर्यम् । पूर्वं—तन्तुसंयोगात्पूर्वम् । तन्त्वन्तररूपकारणाभावादिति । कार्यस्य तदविनाभूतत्वादिति भावः । न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवदिति । यथा संयुक्ते घटपटादौ संयुक्तमात्रस्य व्यपदेशो न परिमाणाधिक्यस्य तथैव तन्त्वन्तरसंयोगात्पटेऽपीत्यक्षरार्थः । मूर्तयोः—मूर्तद्रव्यद्वयस्य, मूर्तपदार्थः पुरस्तात् कृतव्याख्यानः । एकदा नानेति । एकस्मिन् पटादिद्रव्ये नानाद्रव्योपलम्भो दुःशकः प्रतिपादयितुं अनुभवविरुद्धत्वादित्यभिमानः । प्रतिबन्धकस्य—उत्तरद्रव्योत्पत्तिविरोधिनः ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संख्यावदिति । पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वम् । तन्नित्यतादिकं संख्यावत् । तथाहि—नित्येष्वेकत्वं नित्यम्, अनित्येष्वनित्यम् । अनित्यमेकत्वं तु आश्रयद्वितीयक्षणे चोत्पद्यते आश्रयनाशान्नश्यति । तथैकपृथक्त्वमपि । द्वित्वादिवच्च द्विपृथक्त्वादिकमपीत्यर्थः ।

नन्वयमस्मात्पृथगित्यादावन्योन्याभावो भासते तत्कथं पृथक्त्वं गुणान्तरं स्वीक्रियते ? न चास्तु पृथक्त्वं न त्वन्योन्याभाव इति वाच्यम् । रूपं न घट इति प्रतीत्यनापत्तेः । नहि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति न वा घटे घटावधिकं पृथत्वमस्ति येन परंपरासम्बन्धः कल्प्यत इत्यत

विवृतिः ।

पृथक्प्रत्ययेति । अयमस्मात् पृथगिति यः प्रत्ययो ज्ञानं तत्प्रति यदसाधारणकारणं तदेव पृथक्त्वमिति लक्षणार्थः । दण्डादेर्व्युदासाय पृथक्पदं कालादेश्चासाधारणम् । अयमर्थः-सामान्यतः कारणं द्विप्रकारं–साधारणासाधारणभेदात् । कार्यमात्रं प्रति यत्कारणं तत्साधारणं यथा दिक्कालादृष्टादि । कार्यविशेषं प्रति यत्कारणं तदसाधारणं यथा प्रकृते । तन्नित्यतादिकं संख्यावदित्येनैव सूचितस्यार्थस्य तथाहीत्यनेन वितत्य प्रतिपादनं स्पष्टार्थम् । एकपृथक्त्वमिति । एकसमवेतपृथक्त्वम् । एकत्वमिव एकपृथक्त्वं नित्ये नित्यमनित्येऽनित्यमनित्यैकत्ववदनित्यपृथक्त्वम् । द्वित्वादिवच्च द्विपृथक्त्वादिकमपीति । द्विपृथक्त्वादिकं द्वित्वादिकमिवानेकाश्रयवृत्ति अपेक्षाबुद्धिजन्यमपेक्षाबुद्धिनाशान्नश्यतीति निष्कर्षः । अयमस्मात् पृथगिति । अयं (घटः) अस्मात् ( पटात् ) पृथगिति .पृथक्त्वप्रत्ययादयमसौ नेत्यन्योन्याभावो भासत इत्यर्थः । तत्कथं पृथक्त्वं गुणान्तरं स्वीक्रियत इति । अर्थादर्थाविशेषाद्भवदुक्तपृथक्त्वस्यान्योन्याभाव एवान्तर्भावसम्भवात् कृतं पृथक्त्वस्य पृथक्स्वीकारेण । प्रतीत्यनापत्तेरिति । पृथक्त्वेनैतत्प्रतीतिनिर्वाहस्य दुर्घटत्वाद् विनिगमनाभावाच्च द्वयमपि स्वीकर्तव्यमिति भावः । तदेव स्पष्टयंति–न हीत्यादिना । परम्परासम्बन्धः–सामानाधिकरण्यात्मकः । घटात्पृथगिति । पट इति शेषः । घटो न पट इति । घटप्रतियोगिकभेदवान्पट इत्यर्थः । पञ्चमी-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



आह अस्मादिति। ननु शब्दवैलक्षण्यमेव न त्वर्थवैलक्षण्यमिति चेन्न। वि-नार्थभेदं घटात्पृथगिति वद्धटो न पट इत्यत्रापि पञ्चमीप्रसङ्गात्। त-स्माद्यदर्थयोगे पञ्चमी सोऽर्थो नञर्थान्योन्याभावतो भिन्नो गुणान्तरं कल्प्यत इति ॥ ११३ ॥ ११४ ॥

संयोगं निरूपयति—

अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः।
कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥ ११५ ॥

अप्राप्तयोरिति। तं विभजते। कीर्तित इति। एष-संयो-गः ॥ ११५ ॥

तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः।
आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥ ११६ ॥
मेषयोः संनिपातो यः स द्वितीय उदाहृतः।

संनिपातः—संयोगः। द्वितीय—उभयकर्मजः।

कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ॥ ११७ ॥
तृतीयः स्यात्कर्मजोऽपि द्विधैव परिकीर्तितः।
अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥ ११८ ॥
शब्दाहेतुर्द्वितीयः स्याद्

तृतीय इति। संयोगजसंयोग इत्यर्थः। तृतीयः स्यादिति पूर्वेणान्वितम्। आदिमः अभिघातः। द्वितीयो नोदनाख्यः संयोग इति।

विवृतिः।

प्रसङ्गादिति। नञ्पृथक्पदयोरनर्थान्तरत्वे नञ्योगेऽपि 'पृथग्विने'-त्यनुशासनेन पञ्चम्यादिविभक्तयः स्युः परन्तु न हि कश्चित् घटा-त्पटो नेति प्रत्येति ततो नोभयार्थैक्यमिति न तत्र पञ्चमीप्रसङ्गोपी-ति गूढ आशयः ॥ ११३ ॥ ११४ ॥

मूलेऽप्राप्तयोः—असम्बन्धयोः, प्राप्तिः—सम्बन्धः, एवं चामिलित-योर्मिलनं संयोग इति फलितम्। उभयकर्मजः—उभयक्रियाजन्यः ११५

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विभक्तप्रत्ययकारणं विभागं निरूपयति—

विभागोऽपि त्रिधा भवेत् ।

एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥ ११९ ॥

विभाजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत् ।

हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२० ॥

विभाग इति । एककर्मेति । तदुदाहरणं तु श्येनशैलविभागादिकं पूर्ववद्बोध्यम् । तृतीयोऽपि विभागजविभागः—कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति द्विविधः । आद्यस्तावत् यत्र कपाले कर्म ततः कपालद्वयविभागः । ततो घटारम्भकसंयोगनाशः । ततो घटनाशः । ततस्तेनैव कपालविभागेन सकर्मणः कपालस्याकाशविभागो जन्यते । तत आकाशसंयोगनाशः । तत उत्तरदेशसंयोगः । ततः कर्मनाश इति । न च तेनैव कर्मणा कथं देशान्तरविभागो न जन्यत इति वाच्यम् । एकस्य कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य च विरोधात् । अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गात् । तस्माद् यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत्तदारम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत् । न च कारणविभागेनैव द्रव्यनाशात्पूर्वं कुतो देशान्तरविभागो न जन्यत इति वाच्यम् ।

विवृतिः ।

विभक्तप्रत्ययेति । अयमस्माद्विभिन्न इति यः प्रत्ययस्तस्यासाधारणं कारणमिति लक्षणलक्षितं विभागं विभजत इत्यर्थः । तदुदेति । तत्तेषां त्रिविधविभागानाम् । पूर्ववदिति । संयोगवदित्यर्थः । कारणमात्रेति । मात्रपदेन तदन्यव्यवच्छेदः । तेनैवेति । एवकारोऽन्यत्रान्वयी कर्मव्युदासकश्च । उत्तरदेशसंयोगः—कपालस्योत्तरदेशेन संयोगः । कपालनाशः—कपालगतकर्मनाशः । कर्मणैवेति । कपालद्वयविभागजनककर्मणैवेत्यर्थः । आरम्भकसंयोगेति । आरम्भकसंयोगस्य कपालद्वयसंयोगस्य प्रतिद्वन्द्विविनाशकं यद् विभागजनकत्वं तस्य एवमनारम्भकसंयोगस्य कपालाकाशसंयोगस्य, शेषं पूर्ववत् । अन्यथा—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तर-विभागासम्भवात्। द्वितीयस्तावत् यत्र हस्तक्रियया हस्ततरुविभागस्त-तः शरीरेऽपि विभक्तप्रत्ययो भवति तत्र शरीरतरुविभागे हस्तक्रिया न कारणं–व्यधिकरणत्वात्। शरीरे तु क्रिया नास्त्येव–अवयविकर्मणो या-वदवयवकर्मनियतत्वात्। अतस्तत्र कारणाकारणविभागेन कार्याकार्य-विभागो जन्यत इति। अत एव विभागो गुणान्तरम्, अन्यथा शरीरे विभक्तप्रत्ययो न स्यात्। अतः संयोगनाशेन विभागो नान्यथासिद्धो भवति ॥ ११६–१२० ॥

परापरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति––

परत्वं चापरत्वं च द्विविधं परिकीर्तितम्।
दैशिकं कालिकं चापि मूर्त एव तु दैशिकम् ॥ १२१ ॥
परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत्।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥ १२२ ॥

परत्वं चेति। दैशिकमिति। दैशिकपरत्वं बहुतरमूर्तसंयोगान्तरि-

विवृतिः।

उक्तधर्मद्वयस्यैकत्वाङ्गीकारे, इदं–कर्म। कारणाविभागनैवेति। कपाल-द्वयरूपकारणमात्रविभागेनैवेत्यर्थः। द्रव्यनाशात्–घटादिरूपद्रव्यना-शात्, अवयवस्य–कपालाद्यवयवस्य, द्वितीयः–कारणाकारणविभा-गजन्यः। कुत एतत् इत्यत आह–व्यधिकरणत्वादिति। हस्तक्रिया हस्ते शरीरतरुविभागस्तु शरीरतरुनिष्ठ इति तयोर्व्यधिकरणत्वं, समानाधिकरणयोरेव कार्यकारणभावनियमाच्चेति भावार्थः। कार-णाकारणेति। एवं च हस्ततरुविभागेनैव शरीरतरुविभागो जन्यत इति स्वीकार्यम्। ननु विभाग एव न प्रमाणम् संयोगाभाव एव विभागव्यवहारादिति तु रिक्तं वचः–संयोगाभावोऽत्यन्ताभावश्चेद् गुणकर्मणोरपि विभागव्यवहारप्रसङ्गादित्यत एवाह–अत एवेति। वक्ष्यमाणयुक्तेरेवेत्यर्थः। अन्यथा–तस्य गुणान्तरानङ्गीकारे ॥ ११६—१२० ॥

परापरेति। परव्यवहारस्य निमित्तकारणं परत्वमपरव्यव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तत्वज्ञानादुत्पद्यते । एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते । अत्रावधित्वार्थं पञ्चम्यपेक्षा । यथा पाटलिपुत्रात्काशीमपेक्ष्य प्रयागः परः । पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति ॥ १२१ ॥ १२२ ॥

तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।

तयोर्दैशिकपरत्वापरत्वयोः । असमवायी—असमवायिकारणम् । तदाश्रये—दैशिकपरत्वापरत्वाश्रये ।

दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ १२३ ॥
परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः ।
अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥ १२४ ॥

दिवाकरेति । अत्र परत्वापरत्वं कालिकं ग्राह्यम् । यस्य सूर्यपरि-

विवृतिः ।

द्वारस्य निमित्तकारणमपरत्वमित्यर्थः । दैशिकपरत्वमिति । अयं निष्कर्षः। दैशिकपरत्वे मूर्तसंयोगभूयस्त्वज्ञानं हेतुर्दैशिकापरत्वे मूर्तसंयोगाल्पत्वज्ञानं हेतुरिति । अवधित्वार्थम्—अवधिज्ञानार्थम् । उदाहरति—यथेति । कुरुक्षेत्रमिति । इदमष्टचत्वारिंशत्क्रोशपरिमितं क्षेत्रं प्रसिद्धतरमेवाबालवृद्धम् । श्रुतिस्मृती चात्र भवतः—'अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षीभवती'ति ॥

पृथिव्यां नैमिषं पुण्यमन्तरीक्षे च पुष्करम् ।
त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते ॥ इति ।

अन्यत्रापि—

आदौ ये ब्राह्मणा जाता ब्रह्मक्षेत्रे तपोधना । इत्युपक्रम्य—ब्रह्मक्षेत्रे कुरुक्षेत्रं ब्रह्मदेशो निगद्यते ।

आदिगौडर्षिदेशः स, इत्युक्तं परमेश्वराचार्यैः । अमुमेव ब्रह्मदेशमुद्दिश्य एतद्देशप्रसूतस्येत्यादि । अत एवेदानीमपि प्रायः प्रतिदिशं प्रति प्रसिद्धनगरमत्रत्या एव शिक्षां ददतोऽनुभूयन्ते विद्वांसः ॥ १२१ ॥ १२२ ॥

कालिकमिति । कालकृतमित्यर्थः । ज्येष्ठे कालकृतं परत्वं कनिष्ठे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्पन्दापेक्षया यस्य सूर्यपरिस्पन्दोऽधिकः स ज्येष्ठः। यस्य न्यूनः स कनिष्ठः। कालिकपरत्वापरत्वे जन्यद्रव्य एव। अत्र-कालिकपरत्वापरत्वयोः ॥ १२३ ॥ १२४ ॥

अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः।

तेषां—कालिकदैशिकपरत्वापरत्वानाम्।

क्रमप्राप्तां बुद्धिं निरूपयितुमाह—

बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥ १२५ ॥

अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते।

अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥ १२६ ॥

तच्छून्ये तन्मतिर्या यादप्रमा सा निरूपिता।

तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥ १२७ ॥

बुद्धेरिति। तत्राप्रमां निरूपयति तच्छून्य इति। तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः। तत्प्रपञ्चोऽप्रमाप्रपञ्चः ॥ १२५ ॥ ॥ १२६ ॥ १२७ ॥

आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः।

भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥ १२८ ॥

आद्य इति। विपर्यास इत्यर्थः। शरीरादौ निश्चयरूपं यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकम्। एवं शङ्खादौ पीतः शङ्ख

विवृतिः।

कालकृतमपरत्वम्। जन्यद्रव्य एव—जन्यद्रव्यमात्रवृत्तीन्येव भवतः ॥ १२३ ॥ १२४ ॥

मूले बुद्धेः प्रपञ्च इत्यत्र 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तर'मितिन्यायसूत्राद् बुद्धिज्ञानयोरेकार्थत्वमिष्यते न तु सांख्यादिमत इव पार्थक्यमग्रे तत्रैव 'ज्ञानं द्विविध'मित्यभिधानात्। तदभाववति—तद्धर्माभाववति, तत्प्रकारकं—तद्धर्मप्रकारकम्, तादृशप्रमायामिच्छाद्यां चातिप्रसङ्गव्युदासाय तत्प्रकारकज्ञानपदे ॥ १२५ ॥ १२६ ॥ १२७॥

विपर्यासः—विपर्ययो, मिथ्याज्ञानमिति यावत्। तथाच योगसूत्रं—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इत्याकारकं यज्ज्ञानं निश्चयरूपं तद् भ्रम इति ॥ १२८ ॥

किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।
तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२९ ॥

किंस्विदिति वितर्के । निश्चयस्य लक्षणमाह तदभावेति । तदभावाप्रकारकं तत्प्रकारकं ज्ञानं निश्चयः ॥ १२९ ॥

संशयं लक्षयति—

स संशयो मतिर्या स्यादेकत्राभावभावयोः ।
साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥ १३० ॥

स संशय इति। एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशय इत्यर्थः। साधारणेति । उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणम् । यथोच्चैस्तरत्वं स्थाणुपुरुषसाधारणं ज्ञात्वाऽयं स्थाणुर्नवेति सन्दिग्धे । एवमसाधारणधर्मज्ञानमपि कारणम् । यथा शब्दत्वस्य नित्यानित्यव्यावृत्तत्वेन शब्दे गृहीतत्वाच्छब्दो नित्यो न वेति संदिग्धे । विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणं—शब्दव्याप्तिज्ञा-

विवृतिः ।

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ १२८ ॥

निश्चयस्य लक्षणमिति । लक्षणस्य तु प्रयोजनमितरभेदज्ञानं व्यवहारो वा 'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमि'त्यभिधानात्संगतिरुन्नेया । तदभावाप्रकारकमिति । शुक्तित्वाद्यभावाप्रकारकं शुक्तिविशेष्यकं शुक्तित्वप्रकारकं यत शुक्तिरियमिति ज्ञानं तदेव निश्चयपदार्थ इति संघातार्थः ॥ १२९ ॥

एकधर्मिकेति । एकधर्मावच्छिन्नविशेष्यतानिरूपितेत्यर्थः । एकधर्मावच्छिन्नविशेष्यतानिरूपितविरोधिसंसर्गावच्छिन्नोभयप्रकारताशालिज्ञानत्वं तत्त्वम् । ज्ञात्वा—सूक्ष्मांशकार इति शेषः । अयं स्थाणुर्न वेति । छिन्नशाखं शुष्कं वृक्षमूलं स्थाणुशब्देनोच्यते । अत्र पुरोवर्तिनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितस्थाणुत्वस्थाणुत्वाभावरूपोभयनिष्ठप्रकारतानिरूपितप्रकारितावत्त्वात् संशयः । संदिग्धे—क्रियापदमेतत् । सन्देहं करोतीत्यर्थः । कारणम्—संशयकारणम्, विप्र-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नादीनां निश्चयमात्रजनकत्वस्वभावात् । किन्तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते, संशयस्तु मानस एवेति । एवं ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इति । एवं व्याप्यसंशयादपि व्यापकसंशय इत्यादिकं बोध्यम् । किन्तु संशये धर्मिज्ञानं धर्मीन्द्रियसंनिकर्षो वा कारणमिति ॥ १३० ॥

दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।
पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ १३१ ॥

दोष इति । अप्रमां प्रति दोषः कारणम् । प्रमां प्रति गुणः कारणम् । तत्रापि पित्तादिरूपा दोषा अननुगताः । तेषां कारणत्वमन्वयव्यतिरेकाभ्यां सिद्धम् । गुणस्य प्रमाजनकत्वं तु अनुमानात्सिद्धम् । यथा प्रमा ज्ञानसाधारणकारणभिन्नकारणजन्या जन्यज्ञानत्वात् अप्रमावत् । न च दोषाभाव एव कारणमस्त्विति वाच्यम् । पीतः शङ्ख इति

विवृतिः ।

तिपत्तिर्विवादः । निश्चयमात्रेति । मात्रचा संशयव्यवच्छेदः । मानस एवेति । मनसि भवो मानसो मन एव मानसं वा प्रज्ञादित्वादण् संगतिः स्वयमूहनीया । ज्ञाने—इदं पानीयमिति ज्ञाने । प्रामाण्यसंशयाद्विषयसंशय इति । इदं पानीयत्वप्रकारकं ज्ञानं प्रमा न वेति सन्देहादिदं पानीयं नवेति रूपस्य विषयस्य सन्देहो भवतीति ॥ एवं—अनया रीत्या । व्याप्येति । धूमादिर्व्याप्यो वह्न्यादिर्व्यापकोऽयं धूमवान्न वेति व्याप्यसंशय एवमग्रेऽपि । इत्यादिकमित्यादिशब्देन व्याप्यत्वसंशयादितो व्यापकत्वसंशयोऽवसेयः । संशये—संशयमात्रे ॥ १३० ॥

अप्रमाज्ञाने प्रमाज्ञाने च नैकं कारणमित्याह अप्रमां प्रतीत्यादिना । पित्तादीत्यादिश्चाकचिक्यादीनुपगृह्णाति । अननुगता इति । अननुगतत्वमनेकत्रस्थायित्वम् । तेषां—पित्तादिदोषाणाम् । अन्वयव्यतिरेकाभ्यामिति । पित्तादिदोषसत्त्वेऽप्रमासत्त्वमन्वयः पित्तादिदोषाभावेऽप्रमाभावो व्यतिरेकः । अनुमानप्रकारमेव स्पष्टतयाह यथेति । ज्ञानसामान्यकारणभिन्नकारणता चात्र गुणानिष्ठेति बोध्यम् । कारणमस्तु



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ज्ञानस्थले पित्तदोषसत्त्वाच्छङ्खत्वप्रमानुत्पत्तिप्रसङ्गात् । विनिगमनाविरहादनन्तदोषाभावकारणत्वमपेक्ष्य गुणस्य कारणताया न्याय्यत्वात् । न च गुणसत्त्वेऽपि पित्तेन प्रतिबन्धाच्छङ्खे न श्वैत्यज्ञानमतः पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यम्, तथा च किं गुणस्य हेतुत्वकल्पनयेति वाच्यम् । तथाप्यन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः । एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वम् । तत्र दोषाः के इत्याकाङ्क्षायामाह पित्तेति । क्वचित्पीतादिभ्रमे पित्तं दोषः । क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः । क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवंरूपा दोषा अननुगता भ्रान्तिजनका इत्यर्थः ॥ १३१ ॥

अथ के गुणा इत्याकांक्षायां प्रत्यक्षादौ क्रमशो गुणान्दर्शयति—

प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
संनिकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः ॥ १३२ ॥
पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा ।

विवृतिः ।

प्रमाज्ञानं प्रतीति शेषः । शङ्खत्वप्रमानुत्पत्तिप्रसङ्गादिति । अयमभिप्रायः पीतः शङ्ख इति ज्ञानस्थले पीतरूपांशे भ्रमः शङ्खत्वांशे शङ्खत्वप्रकारकं शङ्खविशेष्यकज्ञानं प्रमा सेदानीं न स्याद्दोषाभावरूपस्य हेतोस्तत्रासद्भावात् । गुणसत्त्वेऽपि—प्रमाज्ञानजनकगुणसत्त्वेऽपीत्यर्थः । पित्तेन—पित्तरूपदोषेण, तथाच—दोषाभावानामवश्यहेतुताक्लृप्तत्वे च, हेतुत्वासिद्धेः दोषाभावमात्रेण गुणस्यान्यथासिद्धत्वं न भवतीत्यर्थः । गुणाभाव इति । अत्रैवकारोऽप्यध्याहार्यस्तेन गुणाभाव एव नतु दोषोऽपि । क्वचित्—शङ्खादौ । मण्डूकवसाञ्जनमिति । दोष इत्यनुषज्यते ॥ १३१ ॥

प्रत्यक्षस्य सर्वप्रमाणेषु मूर्धन्यत्वादाह—प्रत्यक्षादाविति । प्रत्यक्षे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गुणः स्याद्भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥

प्रत्यक्षे त्विति। प्रत्यक्षे विशेषणवद्विशेष्यसंनिकर्षो गुणः। अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुणः। एवमग्रेऽपि ज्ञेयम्। प्रमां निरूपयति। भ्रमभिन्नमिति ॥ १३२-१३४ ॥

ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वाभावादत आह—

अथ वा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम्।
तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥१३५॥
प्रकारतादिशून्यं हि संबन्धानवगाहि तत्।

अथवेति। तद्वद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं प्रमेत्यर्थः। अथैवं स्मृतेरपि प्रमात्वं स्यात्, ततः किमिति चेत्तथा सति तत्कारणस्यापि प्रमाणान्तरत्वं स्यादिति चेन्न। यथार्थानुभवकरणस्यैव प्रमाणत्वेन

विवृतिः।

प्रत्यक्षप्रमायामेवमग्रेऽपि। विशेषणवद्विशेष्येति। विशेषणम्–घटत्वादिमत् विशेष्यं–घटादि स्पष्टमन्यत्। साध्यव्याप्यवैशिष्ट्यज्ञानं–वह्निव्याप्यधूमवानयं पर्वत इत्यादिपरामर्शज्ञानं, एवमग्रेपि। ज्ञेयमिति। उपमितिशाब्दबोधयोरपि सादृश्ययोग्यतादिप्रमयोर्गुणत्वं बोध्यमित्यभिप्रायः ॥ १३२—१३४ ॥

भ्रमभिन्नत्वाभावादिति। शुक्त्यंशे भ्रमात्मकत्वादेवेत्यर्थः। तद्वद्विशेष्यकत्वे सतीत्यादि। यथा घटवद्विशेष्यकत्वे सति घटत्वप्रकारकं ज्ञानं प्रमा। अत्र तत्पदेन प्रकारीभूतो धर्मो ग्राह्यस्तद्वत्त्वं च प्रकारतावच्छेदकतासंबंधेन समवायादिना विवक्षणीयम् तेन कालिकसम्बन्धेन शुक्त्यादौ रजतसत्त्वेऽपीदं रजतमिति भ्रमे नातिव्याप्तिः। प्रमात्वं स्यादिति। तस्या अपि तद्वद्विशेष्यकतत्प्रकारकत्वादिति भावः। ततः–स्मृतेः प्रमात्वस्वीकारानन्तरं, किं? अनिष्टं स्यादित्यर्थः। तत्कारणस्यापि—स्मृतिकारणीभूतानुभवस्य संस्कारस्य चेत्यर्थः। परिहरति नेति। विवक्षितत्वादिति। स्मृतेर्यथार्थानुभवभिन्नत्वेन तत्करणस्य प्रमाणत्वाभावादिति भावः। विशेषवक्तव्यमाह—इदन्तु

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विवक्षितत्वात् । इदं तु बोध्यम् । येन संबन्धेन यद्वत्ता तेन संबन्धेन तद्वद्विशेष्यकत्वं तेन संबन्धेन तत्प्रकारकत्वं वाच्यम् । तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः । एवं सति निर्विकल्पकं प्रमा न स्यात्तस्य सप्रकारकत्वाभावादत आह । न प्रमेति । ननु वृक्षे कपिसंयोगज्ञानं भ्रमः प्रमा च स्यादिति चेन्न । प्रतियोगिव्यधिकरणकपिसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात् । न च वृक्षे संयोगाभावावच्छेदेन संयोगज्ञानं भ्रमो न स्यात्तत्र संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वादिति वाच्यम् । तत्र संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वाल्लक्ष्यस्याननुगमाल्लक्षणाननुगमेऽपि न क्षतिः ।

प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥

प्रमात्वमिति । मीमांसका हि प्रमात्वं स्वतो ग्राह्यमिति वदन्ति ।

विवृतिः ।

बोध्यमिति । यद्वत्ता—यद्धर्मवत्ता, यद्वस्तुन इति शेषः । तेन—एकसम्बन्धेनैव तद्वद्विशेष्यकत्वादिवाच्यत्वेन, घटादिज्ञाने—संयोगेन घटवन्तौ कपालावित्यादिभ्रमज्ञाने । नातिव्याप्तिरिति । प्रमालक्षणस्येति शेषः । तत्र समवायस्यैव तद्धर्मवत्तावच्छेदकत्वदर्शनात् । तस्य—निर्विकल्पकज्ञानस्य, निष्प्रकारकस्येति यावत् । ननूक्तरीत्या वृक्षे कपिसंयोगज्ञानस्य मूलावच्छेदेन भ्रमरूपत्वं शाखावच्छेदेन प्रमात्मकत्वं च स्यादित्याशंकते—नन्विति । प्रतियोगीति । कपिरूपप्रतियोगिनो व्यधिकरणं विरुद्धमधिकरणं यस्य सः । तत्र—वृक्षे कपिसंयोगाभावावच्छेदेन संयोगज्ञाने । प्रतियोगिसमानेति । भ्रमत्वसाधकप्रतियोगिव्यधिकरणत्वस्य तत्राभावादिति भावः । अननुगमेऽनैक्ये । न क्षतिरिति । लक्ष्यानुसारित्वादेव लक्षणानामिति भावः ।

मीमांसका हीति । मीमांसामधीयते विदन्ति वा मीमांसकाः । क्रमादिभ्यो वुन् । अत्र लोकप्रसिद्धिद्योतनार्थो हिशब्दो न त्ववधारणार्थः । स्वतो ग्राह्यमिति । ज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वं तत्त्वम् । मीमांसकेष्वपि मीमांसापारावारपारीणानां गुरूणां मतं प्रकटयति—तत्र गुरूणामिति । गुरुरिति मीमांसापण्डितमण्डलाखण्ड-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यत इति । भट्टानां मते ज्ञानमतीन्द्रियम् । ज्ञानजन्या ज्ञातता प्रत्यक्षा तया च ज्ञानमनुमीयते । मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते । सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते । विषयनिरूप्यं हि ज्ञानम्, अतो ज्ञानवित्तिवेद्यो विषयः । तन्मतं दूषयति न स्वतो ग्राह्यमिति । संशयेति । यदि ज्ञानस्य प्रामाण्यं स्वतो ग्राह्यं स्यात्तदाऽनभ्यासदशोत्पन्नज्ञाने प्रामाण्यसंशयो न स्यात् । तत्र हि यदि ज्ञानं ज्ञातं तदा त्वन्मते प्रामाण्यं ज्ञातमेवेति कथं संशयः । यदि तु ज्ञानं न ज्ञातं तदा धर्मिज्ञानाभावात्कथं संशयः । तस्माज्ज्ञाने

विवृतिः ।

लस्य प्रभाकरस्य नाम । तच्चास्य गुरुणैव धृतमिति प्रवादः । तथाहि—एकस्मिन्दिनेऽध्ययनकाले 'अत्र तु नोक्तं तत्रापि नोक्त'मिति विषयः समायातः । अत्र नोक्तं तत्र नोक्तमिति सर्वथा नोक्तमेवेति कथमद्य द्विरुक्तिरिति प्रभाकरकृतस्य प्रश्नस्योत्तरमस्य गुरुरपि दातुं नाशकत्तदनु स्वयमेवायं यदेवात्र तुशब्देनोक्तन्तदेव तत्रापिशब्देनोक्तमभूदिति द्विरुक्तिरुचितैवेति समादधे ततस्तद्बुद्धिप्राबल्यं विलोक्य प्रसन्नस्तद्गुरुर्गुरुरित्युपाधिमस्मै प्रदत्तवानित्यलमप्रकृतविचारेण । स्वप्रकाशत्वादिति । न हि ज्ञानं तद्गतप्रामाण्यं वा ज्ञानान्तरग्राह्यमनवस्थाप्रसङ्गादिति तेषामाशयः । तज्ज्ञानप्रामाण्यं तेनैव गृह्यते इति । यथा ज्ञानग्रहणेन ज्ञाननिष्ठज्ञानत्वादि गृह्यते तथैव ज्ञाननिष्ठप्रामाण्यस्यापि ग्रहे बाधकाभाव इति भावः । भट्टानां—कुमारिलभट्टानाम् । ज्ञानजन्येति । घटविशेष्यकघटत्वप्रकारकज्ञानजन्येत्यर्थः । ज्ञानमनुमीयत इति । ज्ञानस्यातीन्द्रियतया प्रत्यक्षासम्भवेन स्वजन्यज्ञाततालिङ्गकानुमितिर्ज्ञाने प्रामाण्यावगाहिनीत्यर्थः । अनुमानप्रकारः प्रकाशादावनुसन्धेयः । अनुव्यवसायेन—व्यवसायरूपप्रत्यासत्त्या, सर्वेषां—गुरुमिश्रभट्टानाम् । तज्ज्ञानेति । अनुव्यवसायज्ञानेत्यर्थः । एवमग्रेऽपि । विषयनिरूप्यं—विषयविषयकम्, हिरवधारणार्थकः । ज्ञानं सविषयं प्रकाशकत्वाद्दीपवत् । ज्ञानवित्तिवेद्यः—ज्ञानविषयकज्ञानवेद्यः । वि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रामाण्यमनुमेयम् । तथा हि—इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं यथाऽप्रमा । इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात् । एवमिदं जलत्वप्रकारकं ज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात् । न च हेतुज्ञानं कथं जातमिति वाच्यम् । पृथिवीत्वप्रकारकत्वस्य स्वतो ग्राह्यत्वात् । तत्र गन्धग्रहेण गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात् । तत्प्रकारकत्वावच्छिन्नतद्वद्विशेष्यकत्वं परं न गृह्यते संशयानुरोधात् ।

ननु सर्वेषां ज्ञानानां यथार्थत्वात्प्रमालक्षणे तद्विशेषणं व्यर्थम्, न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात् तव मते भ्रमस्या-

विवृतिः ।

षयो घटादिः । ज्ञानस्य—ज्ञानगतप्रमात्वस्य । प्रामाण्येति । प्रमात्वप्रामाण्येत्यर्थः । संशयाभावमेवोपपादयति—तत्र हीति । प्रामाण्यं-ज्ञाननिष्ठाप्रमाण्यं, ज्ञातमेव—निर्धारितमेव । कथं संशय इति । धर्मिज्ञानानन्तरमेव धर्मसंशयोपपत्तेरिति शङ्कितुराशयः । अनुमेयमनुमानाद्बोध्य- अनुमानप्रकारमेवाह—तथाहीति । सम्वादिप्रवृत्तीति । सफलप्रवृत्तीत्यर्थः । भ्रममादाय व्यभिचारवारणाय संवादीति । यन्नैवं तन्नैवमिति । यत्संवादिप्रवृत्तिजनकं न तत्प्रमात्मकं नेत्यर्थः । गन्धवतीति । गन्धस्य पृथिव्या एव व्याप्यत्वादेवमग्रेऽपि । पृथिवीत्वप्रकारकत्वस्य—पृथिवीत्वप्रकारावगाहिज्ञानगतधर्मस्य, तत्र—पृथिव्यां, सुग्रहत्वात्—स्वतो ग्रहस्येत्यर्थः । तत्प्रकारकत्वावच्छिन्नतद्वद्विशेष्यकत्वमिति । पृथिवीत्वप्रकारकत्वावच्छिन्नपृथिवीत्ववद्विशेष्यकत्वमित्यर्थः । निराकांक्षयोर्विशेष्यविशेषणयोः स्वतोग्रहस्तु न दोषं जनयतीति भावः ।

प्रभाकराभिमताख्यातिं निराचिकीर्षुरन्यथाख्यातिं च सिषाधयिषुः प्रभाकरमतेनोट्टङ्कते—नन्विति । विशेषणं व्यर्थमिति । तत्प्रकारकं ज्ञानं प्रमेति प्रमालक्षणे न क्वापि दोषः । यतोऽयथार्थं ज्ञानं वारयितुमेव लक्षणे तद्वद्विशेष्यकेति विशेषणं दीयते तच्च ज्ञानमेव नास्तीति किमर्थं तद्विशेषणमित्यभिप्रायः । भ्रमजन्या—न्यायमते भ्रमजन्या, तव—प्रभाकरस्य, मते न स्यादेव । यतस्तव मते भ्रमस्यान्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भावादिति वाच्यम्, तत्र हि दोषाधीनस्य पुरोवर्तिनि स्वतन्त्रोपस्थित-रजतभेदाग्रहस्य हेतुत्वात्, सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात्त-देव कारणम्, अस्तु वा तत्रापि भेदाग्रहः स एव कारणमिति, न चाऽन्यथाख्यातिः संभवति, रजतप्रत्यक्षकारणस्य रजतसंनिकर्षस्या-भावात् रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न। सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वादन्यत्रापि तत्कल्पनात्। न च संवा-दिप्रवृत्तौ तत्कारणं विसंवादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यम्। लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात्। इत्थं च रङ्गे रजतत्ववि-शिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः—फलमुख-गौरवस्यादोषत्वात्। किञ्च यत्र रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानं जातं तत्र न कारणबाधोऽपि। अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे

## विवृतिः।

थाख्यातेरयथार्थज्ञानस्येति यावत्। अभावादिति। नैय्यायिकेन कृतस्याक्षेपस्य समाधानमाह प्रभाकरः—तत्र हीति। रङ्गगोचरविसं-वादिरजतार्थिप्रवृत्तौ हीत्यर्थः। दोषाधीनस्येति। बहुत्र दोषाधीन-स्थेति पाठः स न रमणीयः—अर्थासंगतेः। दोषश्च प्रमातुर्लोभादिः प्रमाणस्य पित्तादिः प्रमेयस्य सादृश्यादिः। पुरोवर्तिनि-रङ्गादौ, रजतभेदाग्रहस्य-रजतभ्रमस्य, विशिष्टज्ञानस्य-रजतत्वप्रकारकरजत-विशेष्यकेदंरजतमित्याकारकस्य, तदेव-विशिष्टज्ञानमेव, तत्रापि-सत्यरजतस्थलेऽपि, स एव-रजतभेदाग्रह एव, अन्यथाख्यातिर्भ्रमः। क्लृप्तत्वात्-उचितत्वात्, अन्यत्रापि-रङ्गगोचरजतार्थिप्रवृत्तावपि, त-त्कल्पनात्-विशिष्टज्ञानस्य हेतुतायाः कल्पनात्। तत्कारणं-विशिष्ट-ज्ञानं कारणम्। प्रवृत्तिमात्र इति। मात्रपदेन संवादिविसंवादिप्रवृत्त्यो-र्व्यवच्छेदः। तस्य-विशिष्टज्ञानस्य, इत्थं च-प्रवृत्तिमात्रे विशिष्ट-ज्ञानस्य हेतुत्वस्वीकारे च। ज्ञानलक्षणाप्रत्यासत्तीति। अयमभिप्रायः—यथा सुरभि चन्दनमित्यादौ सौरभांशे ज्ञानलक्षणाप्रत्यासत्तिः कल्प्यते तथैवेदं रजतमित्यादौ रजतांशेऽपि सा कल्पनीया दोषाभावात्। फलमुखगौरवस्य-इष्टार्थसिद्धिकृद्गौरवस्य। कारणेति। रजतादि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्याताम्–रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात् त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात् । किञ्चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा । यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम् । सेयमुभयतःपाशा रज्जुः । इत्थं चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणं रङ्गं रजततयाऽवेदिषमित्यनुभवादिति संक्षेपः ॥ १३५ ॥ १३६ ॥

पूर्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति—

व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे, तर्कः क्वचिच्छङ्कानिवर्तकः ॥१३७॥

विवृतिः ।

साक्षात्कारकारणीभूतरजतादिसंनिकर्षेत्यर्थः । उभयत्र–रङ्गरजतयोः, युगपदेककालावच्छेदेन । स्यातामिति । न चैतत्संभवति इष्टसाधनताज्ञानपूर्वकविषयाभिमुखगमनरूपप्रवृत्तेरनिष्टसाधनताज्ञानपूर्वकविषयविमुखगमनरूपनिवृत्तेश्चैकदाऽसम्भवात् । अनुमितिः–ह्रदो वह्निमानित्यन्यथाख्यातिरूपानुमितिः । निराबाधेति । बाधज्ञानात्पूर्वं भेदाग्रहरूपानुमितिकारणसत्त्वादनुमितिरूपकार्यस्य युक्तत्वमेव कारणसत्त्वे कार्यावश्यम्भावनियमादिति भावः । कारणमनुमितिं प्रतीति शेषः । अनुमित्यनुरोधादिति । अयोगोलकं वह्निमदित्यनुमितिमनुरुध्येत्यर्थः । ततः किमनिष्टमिति चेदत्राह–सेयमिति । इत्थं च–त्वन्मतेऽपि अन्यथा ख्यातेर्दुर्वारत्वे च । प्रत्यक्षमेवेति । प्रत्यक्षमपीत्यर्थः । प्रत्यक्षमित्यत्र वीप्सायां यथार्थत्वेन समासः । अक्ष्णोराभिमुख्यमित्यर्थे 'लक्षणेनाभिप्रती'–इति वा समासः । अनुभवादिति । प्रत्यक्षानुभवे तु न कस्यचिद्विमतिः । संक्षेप इति । प्रभाकराभिमताख्यातिखण्डनस्यान्यथाख्यातिमण्डनस्य च स बोध्यः ॥ १३५ ॥ १३६ ॥

पूर्वमनुमानखण्डे, तं–व्याप्तिग्रहोपायम्, चशब्द उभयोः समानबलकत्वं द्योतयति । व्यभिचारग्रहस्य–व्यभिचारज्ञानस्य । एवमन्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्यभिचारस्येति। व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणम्। व्यभिचारग्रहस्य व्याप्तिग्रहे· प्रतिबन्धकत्वात्तदभावः कारणमित्यर्थः। एवमन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता। भूयोदर्शनं तु न कारणं–व्यभिचारास्फूर्तौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात्। क्वचिद्व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते। यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षे बाधकतर्कोऽपेक्षितः। तथाहि–वह्निविरहिण्यपि धूमः स्यादिति यद्याशङ्का भवति, तदा सा वह्निधूमयोः कार्यकारणभावस्य प्रतिसन्धानान्निवर्तते। यद्ययं वह्निमान्न स्यात्तदा धूमवान्न स्यात्कारणं विना कार्यानुत्पत्तेः। यदि च क्वचित्कारणं विना कार्यं भविष्यति तदाऽहेतुक एव भविष्यतीति तत्राप्याशङ्का भवेत्तदा सा व्याघातादपसारणीया। यदि हि कारणं विना कार्यं स्यात्तदा धू·

विवृतिः।

ग्रापि। तदभावः–व्यभिचारग्रहाभावः। कारणमिति। कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणत्वोपगमादिति भावः। अन्वयव्यतिरेकाभ्यामिति। वह्न्यादिसत्त्वे धूमादिसत्त्वमन्वयः वह्न्याद्यभावे धूमाद्यभावो व्यतिरेकः। हेतुतेति। व्याप्तिग्रह इति शेषः। साध्याभाववद्वृत्तित्वं स तदस्फूर्तिरस्मरणम्, सकृदेकवारं 'एकवारं समे सकृदि'त्यजयः। विधूननं–व्युदासः, शङ्का नापैति–न निवर्तते। बाधकतर्कोऽपेक्षित इति। व्यभिचारशङ्कां निवर्तयितुमिति शेषः। प्रतिसन्धानात्–ज्ञानात्, अयं–पर्वतः। धूमवान्न स्यादिति। यदि वह्निमन्तरापि क्वचिद्धूमस्यावस्थानमिति मन्यते तदा महती प्रत्याशा। कारणं विना कार्यानुत्पत्तेरिति। एवं च धूमो वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादिति तर्कशरीरम्। तत्रापि—तादृशतर्ककारणीभूतकार्यकारणभावज्ञानेऽपि, आशंका–अहेतुकमेव कार्यं स्यादित्यात्मिका, भवेत्–प्रतिबन्धिकेति शेषः। स्पष्टप्रतिपत्तये व्याघातस्वरूपमाह–यदि हीत्यादिना। नियमत–एकान्ततः। कारणं विना कार्योत्पत्तिस्वीकारे सर्वत्र सर्वदा सर्वकार्योत्पादप्रसङ्गोऽपि दोषो विज्ञेयः। स्वत एव–शंकासामग्रीविरहादेव,



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मार्थं वह्नेस्तृप्त्यर्थं भोजनस्य वा नियमत उपादानं तवैव न स्यादिति। यत्र स्वत एव शङ्का नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तं–'तर्कः क्वचिच्छङ्कानिवर्तक' इति ॥ १३७ ॥

इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति—

साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥

साध्यस्येति। साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधिरित्यर्थः। ननु स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वं नोपाधिः स्यात्तस्य साध्यव्यापकत्वाभावाच्छ्यामत्वस्य विवृतिः।

नावतरति–नोदेति। तत्र न तर्कापेक्षापीतीति। यदुक्तम्–'व्याघातावधिराशंका तर्कः शंकावधिर्मतः'। शंकानिवर्तक इति। तर्कस्य शंकानिवर्तकत्वं नु व्याप्तिज्ञानकारणीभूतो योऽव्यभिचारशंकाविरहस्तत्तं पादकत्वमुखेनानुमानानुग्राहकत्वम्, यथाह भगवानक्षपादः–'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्त' इति। तर्कश्च द्विविधः–विषयपरिशोधकव्याप्तिग्राहकभेदात्। तत्राद्यस्तु यदि वह्निर्न स्यात्तदा धूमोऽपि न स्यादित्यादिः। द्वितीयो धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादिरिति प्रकाशकृत्। तन्न सर्वस्यापि यत्किंचिद्विषयपरिशोधकत्वेन विषयपरिशोधकनाम्न एकविधस्यैव तस्य गणनौचित्यात्। तर्कत्वं हि तर्कयामीत्यनुभवसिद्धो जातिविशेषः ॥ १३७ ॥

इदानीमिति। व्याप्तिग्रहोपायनिरूपणानन्तरमित्यर्थः। मूले–साध्यस्य साध्यत्वेनाभिमतस्यैवं हेतोः हेतुत्वेनाभिमतस्येत्यर्थः। निरूपयतीति। निरूपणं लक्षणप्रामाण्यज्ञापनं तच्च प्रसङ्गसङ्गत्यात्र बोध्यम्। संग्रहे तु–साध्यव्यापकत्वे सति साधनाव्यापकत्वमित्येवोपाधेर्लक्षणमुक्तम्। साधने सोपाधिः साध्ये निरुपाधिरित्यन्यत्र। मित्रायाःपितो द्वौ पुत्रावास्तां श्वेतवर्णश्यामवर्णौ, सोऽत्र श्वेतवर्णः। श्याम इति। श्यामवर्ण इत्यर्थः। मित्रातनयत्वादिति हेतुः। अत्र–अनुमाने, यस्योपाधेः। साध्यव्यापकत्वाभावादिति। यत्र साध्यं तत्र नियमे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



द्भूतरूपवत्त्वं नोपाधिः स्यात्प्रत्यक्षत्वस्यात्मादिषु सत्त्वात्तत्र च रूपा-
घटादावपि सत्त्वात्, एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रो-
भावात्, एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं नोपाधिः स्या-
द्विनाशित्वस्य प्रागभावेऽपि सत्त्वात्तत्र च भावत्वाभावादिति चेन्न।
यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे
तात्पर्यात्। मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं
तदवच्छिन्नसाधनाव्यापकं च। एवं पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्ष-
त्वस्य व्यापकमुद्भूतरूपवत्त्वम्, बहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकं
च। एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं

विवृतिः।

नोपाधिरित्यस्यात्र दुर्वचत्वादित्यर्थः। कुत एतदित्याह–श्यामत्व-
स्येति। श्यामत्वस्य कोकिलजलदजम्बुफलादौ सत्त्वेऽपि शाकपाक-
जत्वाभावान्न शाकपाकजत्वमुपाधिरिति भावः। पूर्वोक्तपदार्थदा-
र्ढ्याय स्थलान्तरमपि प्रदर्शयति–एवमिति। प्रत्यक्षत्वस्य–प्रत्यक्षत्व-
रूपसाध्यस्य, तत्रात्मनि। रूपाभावादिति। उद्भूतरूपाभावादित्यर्थः।
तत्र च–प्रागभावे च। भावत्वाभावादिति। विनाशित्वे सत्यपि
भावत्वविरहादित्यर्थः। यद्धर्मावच्छिन्नेति। यादृशधर्मविशिष्टसा-
ध्येन सहोपाधेः सहचारस्तादृशधर्मविशिष्टसाधनेन सहावश्यं व्यभि-
चारो युक्त इति निर्गलितोऽर्थः। एवं च पर्वतो धूमवान् वह्निमत्त्वा-
दित्यत्र यद्धर्मावच्छिन्नसाध्यः पर्वतायोगोलकान्यतरत्वधर्मावच्छि-
न्नसाध्यो धूमस्तेनार्द्रेन्धनसंयोगोपाधेर्व्यापकत्वमव्यापकत्वं च पर्व-
तायोगोलकान्यतरत्वावच्छिन्नसाधनेनेति। एवमग्रेऽप्येषा सरणि-
रनुसरणीया। अव्याप्तीनां परिहारं दर्शयति–मित्रातनयत्वेत्यादिना।
तदवच्छिन्नसाधनाव्यापकं च–मित्रातनयत्वरूपसाधनाव्यापकं च।
एवमिति। वायुः प्रत्यक्ष इत्यत्रेति शेषः। पक्षधर्मबहिर्द्रव्यत्वाव-
च्छिन्नप्रत्यक्षत्वस्येति। द्रव्यत्वलक्षणो यः पक्षधर्मस्तदवच्छिन्नबहिः-
प्रत्यक्षत्वस्येत्यर्थः। आत्मनि व्यभिचारवारणाय बहिःपदम्। जन्य-
त्वावच्छिन्नसाध्येति। जन्यत्वरूपसाधनावच्छिन्नसाध्यं–विनाशित्वं
तस्याव्यापकं चेत्यर्थः। सद्धेतौ–वह्निमान् धूमादित्यादिसद्धेतुस्थले,

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भावत्वम् । सद्धेतौ तु एतादृशो धर्मो नास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य चाव्यापकं किञ्चित्स्यात् । व्यभिचारिणि तूपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचाराधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेरन्ततः सम्भवतीति ॥ १३८ ॥

अत एव लक्ष्यमप्युपाधिस्वरूपमेतदनुसारेण दर्शयति—

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः ।
हेतो रेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥

सर्वेति । स्वमुपाधिः, स्वं च साध्यं च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः ॥ १३९ ॥

उपाधेर्दूषकताबीजमाह—

व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् ।

व्यभिचारस्येति । उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः । तथाहि—यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैव उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा धूम-

विवृतिः ।

यदवच्छिन्नस्य—यादृशधर्मविशिष्टस्य, एवं तदवच्छिन्नस्य—तादृशधर्मविशिष्टस्येत्यर्थः । व्यभिचारिणि—धूमवान्वह्नेरित्यादिव्यभिचारस्थले, यत्साध्याधिकरणं—यस्य धूमादेरधिकरणं पर्वतादिकं, साध्यव्यभिचाराधिकरणं—अयोगोलकादिकम्, तदन्यतरत्वावच्छिन्नस्य—पर्वतायोगोलकान्यतरत्वावच्छिन्नस्य, साध्यस्य—धूमस्य, साधनस्य—वह्नेः, चकारः समुच्चयार्थस्तदन्यतरत्वावच्छिन्नविशेषणं समुच्चिनोति । उपाधेरार्द्रेन्धनसंयोगादेः ॥ १३८ ॥

अत एव—यद्धर्मावच्छिन्नत्वघटितलक्षणस्य तात्पर्यविषयत्वादेव, एतदनुसारेण—यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमिति पूर्वोक्तलक्षणानुसारेणेत्यर्थः । स्वं चेति । स्वमुपाधिस्तस्य च स्वसाध्येन द्वन्द्वः ॥ १३९ ॥

धूमव्यभिचारी-स्वसाध्यधूमव्यभिचारी, उपाधिव्यभिचारेणेत्या-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वान् वह्नेरित्यादौ वह्निर्धूमव्यभिचारी तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात् । यत्र तु किञ्चिद्धर्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति । बाधानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्रमाणाभावात्स्वव्याघातकत्वाच्च नोपाधिः । बाधोन्नीतस्तूपाधिर्भवत्येव । यथा वह्निरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण वह्नावुष्णत्वग्रहे वह्नीतरत्वमुपाधिः । यत्र तूपाधेः साध्यव्यापकता संदिह्यते स संदिग्धोपाधिः । पक्षेतरस्तु संदिग्धोपाधिरपि नोद्भावनीयः कथकसंप्रदायानुरोधात् ।

केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलम् । तथाहि- अयोगोलकं धूमवद्वह्नेरित्यादावयोगोलकं धूमाभाववदार्द्रेन्धनाभावादिति सत्प्रतिपक्षसंभवात् । इत्थं च साधनव्यापकोऽपि क्वचिदुपाधिः । यथा करका

विवृतिः ।

दिनोक्तमेवार्थं विशिष्य प्रतिपादयति–तथाहीति । तद्व्यापकेति । धूमव्यापकेत्यर्थः । व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वादिति । अत्र धूमो व्याप्य आर्द्रेन्धनसंयोगो व्यापक इति ध्येयम् । तद्धर्मवति–किञ्चिद्धर्मवति । मित्रातनयत्वमिति । हेतुरिति शेषः । श्यामत्वव्यभिचारि–श्यामत्वरूपसाध्यव्यभिचारि । बाधानुन्नीतपक्षेतरस्तु–बाधदोषासहकृतपक्षेतररूपधर्मस्तु । स्वव्याघातकत्वादिति । उपाधिमात्रस्य दूषकत्वव्याघातकत्वादित्यर्थः । प्रकृतहेतोर्व्यभिचारानुमापकत्वेनोपाधेर्दूषकत्वमित्याशयः । बाधोन्नीतस्त्विति । बाधेन पक्षे साध्याभाववत्तया उन्नीतः साध्यव्यापकत्वेन निर्णीत इत्यर्थः । उक्तमेवार्थमुदाहरणेन स्पष्टयति यथेति । अनुष्ण इति । उष्णत्वाभाववानित्यर्थः । प्रत्यक्षेण–स्पार्शनप्रत्यक्षेण, उष्णत्वग्रहे–पक्षेऽनुष्णत्वसाध्याभावरूपबाधनिर्णय इत्यर्थः । कथकसम्प्रदायानुरोधादिति । कथको विवेचकस्तत्संप्रदायो रीतिस्तदनुसारादित्यर्थः ।

सत्प्रतिपक्षोत्थापनप्रकारमेवाह–तथाहीत्यादिना । आर्द्रेन्धना-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पृथिवी कठिनसंयोगवत्त्वादित्यादावनुष्णाशीतस्पर्शवत्त्वम् । न चात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यम् । सर्वत्रोपाधेर्दूषणान्तरसाङ्कर्यात् । अत्र च साध्यव्यापकः पक्षावृत्तिरुपाधिरित्याहुः ।

शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।
तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः ॥ १४१ ॥

शब्दोपमानयोरिति । वैशेषिकाणां मते प्रत्यक्षमनुमानं च प्रमाणम् । शब्दोपमानयोस्त्वनुमानविधयैव प्रामाण्यम् । तथा हि–दण्डेन गामानयेत्यादिलौकिकपदानि यजेतेत्यादिवैदिकपदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वाद् घटमानयेति पदकदम्बवत् । यद्वा–एते पदार्था मिथः संसर्गवन्तो योग्य-

विवृतिः ।

भावादिति । यत्रार्द्रेन्धनसंयोगस्तत्र धूम इति व्याप्तेरित्यर्थः । धूमस्यार्द्रेन्धनाविनाभूतत्वादिति यावत् । सत्प्रतिपक्षसम्भवादिति । साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः संगतिरत्र स्पष्टैव । इत्थं च–सत्प्रतिपक्षोत्थापकत्वेनोपाधेर्दूषकत्वे च । अनुष्णाशीतस्पर्शवत्त्वमिति । उपाधिरित्यनुषज्यते । अत्र-अनुमाने । स्वरूपासिद्धिरिति । स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः । सा चात्र करकायां कठिनसंयोगवत्त्वविरहादेव । अत्र च–सत्प्रतिपक्षोत्थापकत्वपक्षे च, ।

अनुमानविधयैवेति । न पृथगित्येवकारार्थः । तदेतत्सप्रपंचं दर्शयति–तथाहीति । गामानयेति । आदिना 'ब्राह्मणस्य महत्पापं संध्यावन्दनकर्मभि'रित्यादेः संग्रहः । यजेतेत्यादीत्यादिनोपासीतोपनयीतेत्यादेरुपग्रहः । स्मारितेति । तत्त्वं च शक्तिलक्षणान्यतरसंबन्धेनोपस्थितविषयत्वम् । आकाङ्क्षादीत्यादिना योग्यतासत्त्योः परिग्रहः । कदम्बः–समूहः । पदार्था–घटपटादयः । मिथः संसर्गवन्त इति । वक्तृतात्पर्योपस्थितिविषयान्योन्यसंसर्गभाज इत्यर्थः । योग्यतादीनां स्वरूपं पूर्वोक्तमेव बोध्यम् । ननु दृष्टान्ते साध्यासिद्धिविर-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत् । दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति । एवं गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् । असति च वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तत्तत्प्रवृत्तिनिमित्तकम् , यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम् । यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं सिद्ध्यति ।

तन्मतं दूषयति तन्न सम्यगिति । व्याप्तिज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वात् । नहि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमाणमस्ति । किञ्च सर्वत्र शाब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा

विवृतिः ।

हाद्ध व्याप्तिग्रह एवात्र कर्तुमशक्य इत्यत आह—दृष्टान्तेऽपीति । शब्दमनुमानेऽन्तर्भाव्योपमानमपि तत्रान्तर्भावयितुमाह-एवमित्यादिना। गवयव्यक्तिप्रत्यक्षानन्तरमिति । गोसदृशो गवय इति वाक्यश्रवणोत्तरं वनं गतस्य नागरिकस्य तादृशपिण्डमुपलभ्याथ असौ गवयशब्दवाच्य इति प्रत्यक्षज्ञानानन्तरमित्यर्थः । वृत्त्यन्तर इति । वृत्तिश्च शक्तिलक्षणान्यतरसंबन्धः । वृद्धैः-शिष्टैः । तत्र-गवये, यत्पदं प्रयुज्यते तत्पदं तस्य प्रवृत्तिनिमित्तकं-वाचकमित्यर्थः । गोत्वप्रवृत्तीति । गोपदस्य गोत्वं प्रवृत्तिनिमित्तमित्यर्थः । तेनैव च गवि गोत्वव्यवहारः। यदुक्तम्—'न हि गौः स्वरूपेण गौर्नाप्यगौर्गोत्त्वाभिसम्बन्धाद्गौरिति' । एवमन्यत्रापि बोध्यम् । गवयत्वेति । गवयपदं प्रति गवयत्वस्य प्रवृत्तिनिमित्तकत्वं सिद्ध्यतीत्यर्थः ।

तन्मतं दूषयतीति । वैशेषिकमते दोषमुद्घोषयिष्यन् स्वमन्तव्ये श्रद्धेयतां प्रकटयतीत्यर्थः । दूषणे हेतुमाह—व्याप्तिज्ञानं विनापीत्यादिना । अनुमानविधया प्रामाण्ये व्याप्तिज्ञानमावश्यकमत्र च नास्ति तदावश्यकत्वमिति न तेन तद्गतार्थतेति हेतोराशयः । अनुभवसिद्धेरुपोद्बलकं व्याप्तिज्ञाने प्रमाणाभावमपि दर्शयति—न हीति प्रमाणमिति । प्रमाणं—मानं शास्त्रं वा 'प्रमाणं मानशास्त्रयो'रिति धरणिः । पदज्ञानं—पदस्मरणम् । किं न स्वीक्रियतामिति । कल्पनाया उभयत्र तुल्यत्वात्प्रतिनिगमनाविरहेण वैपरीत्यमपि स्वीकर्तुमर्हमेवेति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियतामिति ध्येयम् ॥ १४० ॥ १४१ ॥

त्रैविध्यमनुमानस्य केवलान्वयिभेदतः ।
द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ॥ १४२ ॥
अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते ।

त्रैविध्यमिति । अनुमानं हि त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्रासद्विपक्षः केवलान्वयी । यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ, तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम् । असत्सपक्षः केवलव्यतिरेकी । यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ, तत्र हि जलादित्रयोदशभेदस्य पूर्वमनिश्चिततया निश्चि-

विवृतिः ।

भावार्थः ॥ १४० ॥ १४१ ॥

तत्र–तेषु मध्ये । केवलान्वयिस्वरूपमाह–असद्विपक्ष इति । निश्चितसाध्याभाववान्विपक्षः स यस्य नास्तीत्यर्थः । प्रमेयत्वादिति । पटवदिति शेषः । तत्र हि–अभिधेयत्वसाध्यकानुमान इत्यर्थः । सर्वस्येति । पदार्थमात्रस्येत्यर्थः । ईश्वरेच्छाविषयोऽभिधेयः प्रमाविषयः प्रमेयः पदार्थता तूभयोरक्षतैव । प्रमेयत्वस्य विपक्षस्थलन्तु नास्त्येव कुत्रापीति तस्य केवलान्वयित्वम् । ननु सर्वेषां धर्माणां व्यावृत्तत्वात्केवलान्वय्यसिद्धिरिति तु न शङ्कनीयम्–व्यावृत्तत्वस्य सर्वसाधारण्ये तस्यैव केवलान्वयित्वात् । असत्सपक्ष इति । निश्चितसाध्यवान्सपक्षः स यस्य नास्ति एतादृश इत्यर्थः । यथा पृथिवीति । अत्र पृथिवीत्वावच्छिन्नं पक्षः । पृथिवीतरजलाद्यष्टभेदः साध्यः । गन्धवत्त्वं हेतुः । समानजातीयेभ्यो जलाद्यष्टभ्योऽसमानजातीयेभ्यो गुणादिपञ्चभ्यो व्यावर्तकः स्वाभाविकः पृथिव्यां गन्धः । तद्वत्त्वमेव च तल्लक्षणं लक्षणस्य समानासमानजातीयव्यवच्छेदकत्वात् । तत्र हीति । इतरभेदसाधकानुमान इत्यर्थः । त्रयोदशेति । यद्यप्यत्र चतुर्दशेति वक्तुं युक्तम् तथापि परमतेऽभावस्याधिकारणात्मकत्वाभिप्रायेण तथोक्तमिति ध्येयम् । सत्सपक्षविपक्ष इति । सन् विद्यमानः सपक्षो विपक्षश्च यस्यैतादृश इत्यर्थः । सत्त्वादिति । घटो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तसाध्यवतः सपक्षस्याभावात् । सत्सपक्षविपक्षोऽन्वयव्यतिरेकी । यथा वह्निमान्धूमादित्यादौ, तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति ।

तत्र हि व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्वक्ति—

**साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥**

साध्याभावेति । साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः । अत्रेदं बोध्यम् । यत्संबन्धेन यदवच्छिन्नं प्रति येन संबन्धेन येन रूपेण व्यापकता गृह्यते तत्संबन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभाववत्ताज्ञानात्तत्संबन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति । इत्थं च यत्र विशेषणतादिसंबन्धेनेतरत्वव्यापकत्वं गन्धाभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिध्यति । यत्र तु तादात्म्यसंबन्धेनेतरव्यापकत्वं गन्धाभावस्य गृह्यते तत्र तादात्म्यसंबन्धेनेतरस्याभावः सिध्यति । स एवान्योन्याभावः । एवं यत्र संयोगसंबन्धेन धूमं प्रति संयोगसंबन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसंबन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिध्यति । अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम् ।

विवृतिः ।

साध्ये सपक्षसत्त्वं वह्न्यभावे साध्ये विपक्षसत्त्वमिति ध्येयम् ।

तदर्थ–व्यतिरेकव्याप्तिज्ञानार्थम् । साध्याभावेति । साध्यो वह्न्यादिस्तदभावव्यापकीभूतो योऽभावः धूमाद्यभावस्तादृशाभावप्रतियोगित्वं व्यतिरेकित्वम् । यत्सम्बन्धेन यदवच्छिन्नं प्रतीति । यत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्नव्याप्यतानिरूपितव्यापकता गृह्यत इत्यर्थः । इतरत्वव्यापकत्वमिति । इतरत्वनिष्ठव्याप्यतानिरूपितव्यापकत्वमित्यर्थः । गन्धाभावाभावेन–गन्धेन, अभावाभावस्य भावत्वात् । सिद्ध्यतीति । यत्र गन्धस्तत्र जलादिभेद इतरजलादिनिष्ठेतरत्वात्यन्ता-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते न तु व्यतिरेक-व्याप्तिज्ञानं कारणम् । यत्र व्यतिरेकसहचाराद्व्याप्तिग्रहस्तत्र व्यतिरेकी-त्युच्यते । साध्यप्रसिद्धिस्तु घटादावेव ज्ञायतां पश्चात्पृथिवीत्वावच्छे-देन साध्यत इति वदन्ति ॥ १४२ ॥ १४३ ॥

अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४ ॥

अर्थापत्तिरिति । अर्थापत्तिः प्रमाणान्तरमिति केचन मन्यन्ते । तथाहि—यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीवि-नो गृहासत्त्वं च प्रत्यक्षादवगतं तत्र शतवर्षजीविनो गृहासत्त्वं बहिः-सत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्यत इति । तदनुमानेन गतार्थ-त्वान्नेष्यते । तथाहि—यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्या-

विवृतिः ।

भावश्च धर्मिभेदधर्मात्यन्ताभावयोरेकरूपत्वादिति भावः । तादात्म्य-सम्बन्धेनेति । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिकाभावः सिद्ध्य-तीत्यर्थः । व्यतिरेकसहचारज्ञानमिति । यत्र यत्र साध्याभावस्तत्र तत्र हेत्वभाव इति च व्यतिरेकसहचारज्ञानम् ।

केचित्तु–उदयनाचार्यास्तु, इति वदन्तीत्यग्रिमेणान्वयः । व्यति-रेकसहचारेण अन्वयसहचारनिरपेक्षेणेति शेषः । कारणमिति । अनुमितिज्ञानं प्रतीति शेषः । व्यतिरेकिस्वीकारे बीजमाह यत्रे-त्यादिना । साध्यत इति । पक्षैकांशवर्तिनी साध्यसिद्धिर्यावदं-शसाध्यसाधिकानुमितौ न प्रतिबन्धिकेति भावार्थः ॥ १४२ ॥ १४२ ॥

केचन–मीमांसकाः । शतवर्षजीवित्वमिति । कलियुगमभिप्रेत्येदं 'शतायुर्वै पुरुष' इति श्रुतेः पराकाष्ठेयं पुरुषायुषः । गृहासत्त्वमिति । जीवतो गृहासत्त्वं बहिःसत्त्वेन सहचरितं बहिःसत्त्वं विना जीवतो गृहासत्त्वानुपपत्तेः । तथाहीत्यारभ्य कल्प्यत इत्यन्तं तत्स्वरूपनि-रूपणम् । तदपि–अर्थापत्तेः प्रलाणान्तरत्वमपि । अनुमानेनेति । देव-दत्तो बहिःसत्त्ववान् गृहासत्त्वे सति वर्षशतजीवित्वादित्यनुमाना-कारो बोध्यः । अन्यतरव्याप्यत्वमिति । अन्यतरनिष्ठव्यापकतानिरू-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते। एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिध्यतीति। अभावप्रत्यक्षस्यानुभविकत्वादनुपलम्भोऽपि न प्रमाणान्तरम्। किञ्चानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकरणकत्वात्प्रत्यक्षत्वम्। ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था। एवं चेष्टापि न प्रमाणान्तरं—तस्याः संकेतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात्। यत्र च व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥ १४४ ॥

सुखं निरूपयति—

सुखं तु जगतामेव काम्यं धर्मेण जायते।

सुखं त्विति। काम्यमभिलाषविषयः। धर्मेणेति। धर्मत्वेन सुखत्वेन कार्यकारणभाव इत्यर्थः।

विवृतिः।

पितव्याप्यत्वमित्यर्थः। अन्यतरसिद्धौ—बाह्यसत्त्वस्य गृहसत्त्वस्य वा सिद्धौ। बहिःसत्त्वमिति। जीवित्वे सति गृहासत्त्वदर्शनादित्यर्थः। भोजनव्याप्यत्वावगमादिति। यत्र २ पीनत्वं तत्र २ भोजनमिति व्याप्त्यवगमादित्यर्थः। भोजनसिद्धाविति। प्रत्यक्षादिना प्रमितस्य दिवाभोजिसंबंधिपीनत्वस्य भोजनमन्तरानुपपत्तेरिति भावः। आनुभविकत्वादिति। चक्षुरादिनैवाभावग्रहादित्यर्थः। अनवस्थेति। प्रथमानुपलम्भस्य द्वितीयाधीनत्वाद्द्वितीयस्यापि तृतीयाधीनत्वादत्रानवस्थाप्रसङ्गः। अर्थापत्त्यनुपलम्भौ यथायथमनुमाने प्रत्यक्षे चान्तर्भाव्य चेष्टामपि शब्देऽनुमाने चान्तर्भावयितुमाह—चेष्टापीति। चेष्टा द्विविधा कृतसंकेता अकृतसंकेता च। तत्राद्या स्वभिप्रायस्थं शब्दं स्मारयति लिपिवत्। स्मृत्यारूढः शब्द एव तत्र प्रमाणमिति तत्रैव तस्या अन्तर्भावः। द्वितीया तु यत्रैडमूकादेश्चेष्टाधीनो व्यवहारस्तत्र संकेताभावादनुमितिरेव तत्रैवान्तर्भवति ॥ १४४ ॥

सुखं हि चतुर्विधं—वैषयिकमानोरथिकाभिमानिकाभ्यासिकभे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दुःखं निरूपयति—

अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥

अधर्मेति । अधर्मत्वेन दुःखत्वेन कार्यकारणभाव इत्यर्थः । प्रतिकूलमिति । दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः ॥ १४५ ॥

इच्छां निरूपयति—

निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥

निर्दुःखत्वे इति । इच्छा द्विविधा—फलविषयिणी उपायविषयिणी

विवृतिः ।

दात् । लक्षणादिकमेतेषामन्यत्र मृग्यं विस्तरभिया नेह प्रपंचि । अतीतेषु स्मृतिजमनागतेषु संकल्पजमित्यन्यदेतत् ।

अधर्मत्वेनेति । अधर्ममात्रहेतुकं दुःखमित्यर्थः । दुःखत्वावच्छिन्नं प्रति अधर्मत्वावच्छिन्नं कारणमिति यावत् । चातुर्विध्यमस्यापि पूर्ववदूह्यम् । न्यायवार्तिकतात्पर्यकृतस्तु—'सुखदुःखोत्पाद एव च धर्माधर्मयोरुपयोगो न तु सुखदुःखोत्पादे' इति वदन्ति । तन्मते सुखदुःखबुद्धित्वावच्छिन्नं प्रत्येव धर्माधर्मत्वावच्छिन्नं कारणमिति ॥ दुःखत्वज्ञानादेवेति । दुःखत्वेन रूपेण ज्ञात एवेत्यर्थः ॥ १४५ ॥

इच्छेति । इच्छात्वजातिमतीच्छा प्रयत्नजनकतावच्छेदकतया च सिद्धा । फलेच्छावशादुपायेच्छाभवनमभिप्रेत्य यथाक्रममाह—फलविषयिणीति । फलज्ञानसाध्येत्यर्थः । एवमग्रेऽपि । ननु ज्ञातमिच्छाद्वैविध्यं फलविषयिणीत्यत्र किं नाम फलमित्यपेक्षमाणं प्रति तत्स्वरूपमाह फलं त्विति । तत्र—तयोर्मध्ये, पुरुषार्थः—सुखं दुःखाभावश्च । तल्लक्षणादिति । पुरुषार्थस्य लक्षणादित्यर्थः । लक्षणस्य चोपयोगः पूर्वाचार्यैरभिहितः—

ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणे न तु सिद्धानामन्तं यान्ति विपश्चितः ॥

पर्यवसितलक्षणमाह—इतरेच्छेति । उपायेच्छां प्रतीति । उपायो—यागादिः । इदं मदिष्टसाधनमित्याकारकं ज्ञानमिष्टसा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



च। फलं तु सुखं दुःखाभावश्च। तत्र फलेच्छां प्रति फलज्ञानं कारणम्, अत एव पुरुषार्थः संभवति—यज्ज्ञातं सत्स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात्। इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः। उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम्॥ १४६॥

चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत्।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत्॥ १४७॥

चिकीर्षेति। कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा चिकीर्षा—पाकं कृत्या साधयामीति तदनुभवात्। चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनज्ञानं च कारणम्। तद्धेतुरिति। अत एव वृष्ट्यादौ कृतिसाध्यताज्ञानाभावान्न चिकीर्षा॥ १४७॥

बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका।

बलवदिति। बलवद्द्विष्टसाधनताज्ञानं प्रतिबन्धकम्। अतो मधुविषसंपृक्तान्नभोजने न चिकीर्षा। बलवद्द्वेषः प्रतिबन्धक इत्यन्ये।

तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते॥ १४८॥

तदहेतुत्वेति। बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः॥१४८॥

द्वेषं निरूपयति—

द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम्।

द्विष्टसाधनतेति। दुःखोपायविषयकं द्वेषं प्रति बलवद्द्विष्टसाधन-

विवृतिः।

धनताज्ञानम्॥ १४६॥

तदनुभवात्—कृतिसाध्यविषयिणीच्छानुभवात्। कारणमिति। चिकीर्षायां कृतिसाध्यताज्ञानेष्टसाधनताज्ञानयोः पृथक्त्वेन न हेतुता किन्तु संवलितत्वेनैव। अत एव वृष्ट्यामिष्टसाधनताज्ञानसत्त्वेऽपि परज्ञामासत्त्वाच्चिकीर्षाभाव इति भावः॥ १४७॥

बलवद्द्विष्टेति। बलवदुत्कटं यद्द्विष्टं दुःखं तत्साधनताज्ञानमित्यर्थः। द्विष्टेत्यत्र भावे क्तः। द्वेषे बलवत्त्वं जातिविशेषः। प्रतिबंधकमिति। द्वेषं प्रतीति शेषः॥ १४८॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ताज्ञानं कारणमित्यर्थः । बलवदिष्टसाधनताज्ञानं प्रतिबन्धकम् । तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः ।

प्रयत्नं निरूपयति--

**प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥**

**एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् ।**

प्रवृत्तिश्चेति । प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात्प्रयत्नस्त्रिविध इत्यर्थः ।

**चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥**

**उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।**

चिकीर्षेत्यादि । मधुविषसंपृक्तान्नभोजनादौ बलवदनिष्टानुबन्धि-

विवृतिः ।

तेन--द्वेषे बलवत्त्वविशेषणेन । न द्वेष इति । पाककरणे धूमादि-जन्यं दुःखं तु स्तोकं साधनता बलीयसीति तत्र प्रवृत्तिरेव न प्रद्वेषः । 'सुखदुःखनिदानयोर्यतः सुखहेतौ कृतिनामिहाग्रह' इति मत्कृतसुल-तानचरित्रकाव्योक्तन्यायादिति भावः ।

प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदादिति । यत्नशब्दस्य त्रिभि-रेवाभिसंबंधः । प्रयत्नः प्रयत्नत्वजातिमान्, त्रिस्रः प्रवृत्त्यादयो विधा अस्य स त्रिविधः । ता एता यथासङ्ख्यमिच्छाद्वेषजी-वनादृष्टजन्या बोध्याः । प्रवृत्तिरपि क्वचिद्यागादौ रागनिबं-धना क्वचिद्धिंसादौ द्वेषनिबन्धना प्रथमा धर्मं प्रसूते द्वितीया त्वधर्ममितीयान् विशेषः । सा च त्रिविधा--शरीरी वाचिकी मा-नसी च । शरीरेण प्रवर्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति, वाचाऽनृतपरुषसूचनासंबद्धानि, मनसा परद्रोहं परद्रव्याभीप्सां ना-स्तिक्यं चेति । सेयं पापात्मिका प्रवृत्तिरधर्माय । शरीरेण दानं परि-त्राणं परिचरणं च, वाचा सत्यं प्रियं हितं स्वाध्यायञ्चेति, मनसा दयामस्पृहां श्रद्धां चेति । सेयं धर्मायेति न्यायभाष्यकृतः ।

भोजनादावित्यादिना प्रासादादधः पतनादेरुपग्रहः । न प्रवृत्ति-रिति । बलवदिष्ट एव चिकीर्षा चिकीर्षित एव च कार्ये प्रवृत्तिर्ना-न्यत्रेति । प्रवृत्तौ कृतिसाध्यताज्ञानमेव हेतुरिति गुरवः--प्रभाकराः । ज्ञानस्य--कृतिसाध्यत्वप्रकारकज्ञानस्य, सा च--चिकीर्षा च, कृतिसा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः। कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति। कार्यताज्ञानं प्रवर्तकमिति गुरवः। तथाहि-ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति। सा च कृतिसाध्यताज्ञानसाध्या-इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनिमात्। चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा। तत्र कृतिसाध्यत्वं प्रकारस्तत्प्रकारकज्ञानं चिकीर्षायां तद्द्वारा च प्रवृत्तौ हेतुर्न त्विष्टसाधनताज्ञानं तत्र हेतुः-कृत्यसाध्येऽपि चन्द्रमण्डलानयनादौ प्रवृत्त्यापत्तेः। ननु कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न। तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात्। न च द्वयोरपि हेतुत्वं-गौरवात्। ननु त्वन्मतेऽपि मधुविषसंपृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः-कार्यताज्ञानस्य

विवृतिः।

ध्यतासाध्या-कृतिसाध्यत्वप्रकारकज्ञानजन्या, यत्प्रकारकयद्विशेष्यकेच्छायास्तद्विशेष्यकतत्प्रकारकज्ञानजन्यत्वनियमात्। स्वप्रकारेति। स्वमिच्छा, शेषं स्पष्टम्। कृतिसाध्यत्वप्रकारिकेच्छेति। तथाच तत्तद्धर्मावच्छिन्नसाध्यकप्रवृत्तित्वावच्छिन्नं प्रति तत्तद्धर्मावच्छिन्नविशेष्यककृतिसाध्यत्वज्ञानमेवं तत्तद्धर्मावच्छिन्नविशेष्यककृतिसाध्यत्वप्रकारिकेच्छां प्रति तत्तद्धर्मावच्छिन्नविशेष्यककृतिसाध्यताज्ञानं हेतुः। तत्रेच्छायां, तत्प्रकारकं-कृतिसाध्यत्वप्रकारकं, तद्द्वारा-कृतिसाध्यत्वप्रकारिकेच्छाद्वारा, तत्र-प्रवृत्तौ, प्रतिबन्धकं-प्रवृत्ताविति शेषः। तदभावापेक्षयेति। प्रतिबंधकाभावे हेतुत्वकल्पनापेक्षयेत्यर्थः। लघुत्वात्-हेतुत्वकल्पने लाघवादित्यर्थः। द्वयोः-कृतिसाध्यत्वप्र[कारके]ष्टसाधनत्वप्रकारकज्ञानयोः, शंखः पाण्डुरेवेत्यस्य यथा शंखः पाण्डुरपीत्यर्थस्तथात्रापि द्वयोरेवेत्यस्य द्वयोरपीत्यर्थो बोध्यः। गौरवादिति। एकस्यैव हेतुत्वकल्पनेन सामञ्जस्ये द्वयोर्हेतुत्वकल्पस्य गौरवप्रतिहतत्वादिति भावः। चैत्यवन्दने-बुद्धप्रतिमाभिवादने। प्रवृत्त्यापत्तिरिति। कारणसत्त्वे कार्यावश्यंभावनियमादिति भावः। चैत्यवन्दननिषेधबोधकं तु 'हस्तिना ताड्यमानोऽपि न गच्छेज्जैनमन्दिर'मित्यादिशास्त्रमेव कैमुतिकन्यायेन बोध्यम्। स्वविशेषणेति।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सत्त्वादिति चेन्न। स्वविशेषणवत्ताप्रतिसंधानजन्यकार्यताज्ञानस्य प्रवर्तकत्वात्। काम्ये हि यागपाकादौ कामना स्वविशेषणम्। ततश्च बलवदनिष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्यताज्ञानम्। ततश्च प्रवृत्तिः। तृप्तश्च भोजने न प्रवर्तते तदानीं कामनायाः पुरुषविशेषणत्वाभावात्। नित्ये च शौचादिकं पुरुषविशेषणम्। तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात्तत्र प्रवृत्तिः। ननु तदपेक्षया लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानत्वेनैव हेतुत्वमस्तु, बलवदनिष्टाननुबन्धित्वं चेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न। इष्टसाधनत्वकृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्साध्यत्वसाधनत्वयोर्विरोधित्वात्। असिद्धस्य हि साध्यत्वं सिद्धस्य च साधनत्वम्। नचैकमेकेनैकदा सिद्धमसिद्धं चेति ज्ञायते, तस्मात्कालभेदादुभयं ज्ञायत इति। मैवं, लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य हेतुत्वात्। न च साध्यत्वसाधनत्वयोर्विरोधो यदा कदाचित्साध्यत्वसाधनत्वयोरविरोधादेकदा साध्यत्वसाधनत्वयोश्च ज्ञानात्।

विवृतिः।

स्वं-प्रवर्तमानः पुरुषः। शेषं स्वयमेव स्फुटीभविष्यति। काम्ये-अभिलाषाविषये, कामना-यागपाकादिविषयिणीत्यर्थः। ततश्च-कार्यताज्ञानतश्च, तदपेक्षया-बलवदनिष्टाननुबंधित्वविशिष्टेष्टसाधनताज्ञानजन्यकृतिसाध्यताज्ञानापेक्षया। इष्टोत्पत्तीति। पाकादीष्टोत्पत्तिनान्तरीयकं यद् दुःखं-नियतधूमादिजन्यदुःखं, तदपेक्षयाऽधिकं यद्दुःखं मरणादि तदजनकत्वमित्यक्षरार्थः। विरोधित्वादेकत्रावृत्तित्वात्। इदानीमेतत्प्रकरणमुपसंहरति-तस्मादिति। बलवदनिष्टेति। मधुविषसंपृक्तान्नवारणाय सत्यन्तम्, कृत्यसाध्ये चन्द्रमण्डलानयनादौ प्रवृत्तेर्व्युदासार्थं विशेष्यभागः। तत्र-प्रवृत्तौ। गुरुणा साध्यत्वसाधनत्वयोर्यो विरोधः प्रदर्शितस्तमपि प्रत्याचष्टे नचेति। यदा कदाचिदिति। अयं भावः। एककालीनकृतिसाध्यत्वेष्टसाधनत्वज्ञानस्य प्रवृत्तौ हेतुता नास्माभिरपेक्ष्यते किन्तु कृतिसाध्यत्वेष्टसाधनत्वज्ञानस्यैव तच्च

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नव्यास्तु ममेदं कृतिसाध्यमिति ज्ञानं प्रवर्तकमनागते तस्य ज्ञातुमशक्यत्वात् । किन्तु यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्तते । तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवर्तत इत्याहुस्तन्न । स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्भेदादिना संभोगादौ च तदभावात् ।

इदं तु बोध्यम् । इदानींतनेष्टसाधनत्वादिज्ञानं प्रवर्तकं तेन भाविर्योवराज्ये बालस्य न प्रवृत्तिस्तदानीं कृतिसाध्यत्वाज्ञानात् । एवं तृप्तश्च भोजने न प्रवर्तते तदानीमिष्टसाधनत्वाज्ञानात् । प्रवर्तते च रोषदूषितचित्तो विषादिभक्षणे तदानीं बलवदनिष्टानुबन्धित्वाज्ञानात् । न चास्तिकस्यागम्यागमनशत्रुवधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यम् । उत्कटरागादिना नरकसाध-

विवृतिः ।

धर्मद्वयमेकत्र न विरोधास्पदम् ।

नव्यास्तु—गुरुमतानुयायिनस्तु । न प्रवर्तकं—प्रवृत्तौ न कारणम् । अनागतेऽस्य ज्ञातुमशक्यत्वादिति । यदिष्टं भावि तत्को ज्ञातुमीष्टे न कोऽपीति सर्वसिद्धान्तसिद्धत्वादित्यर्थः । तथाच श्रुतिः—'नन्दनमस्ति नोश्वः कस्तद्वेद यदद्भुत'मिति । अद्भुतमभूतं शिष्टमपि निरुक्ते स्पष्टम् । तादृशत्वं—कृतप्रयत्नपुरुषसदृशत्वं, प्रतिसंधाय—ज्ञात्वा, तत्र—कृतिसाध्यपदार्थसिद्धौ, तादृशः—ओदनपाक ओदनसाधनताज्ञानवानोदनोपकरणवांश्चेत्यर्थः । कामोद्भेदः—कामोत्पत्तिः । कामवेग इति यावत् । संभोगादाविति । अयमेव संयोग इत्यप्युच्यते । स च रतेः संयोगकालावच्छिन्नत्वे जायते । तदभावादिति । यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वज्ञानाभावादित्यर्थः ।

बालस्य—राजपुत्रस्येत्यर्थः । कृतिसाध्यत्वाज्ञानात्—कृतिसाध्यत्वप्रकारकज्ञानाभावात्, तदानीं—तृप्तिकाले । आस्तिकस्येति ! अस्ति परलोक इत्येवं मतिर्यस्य स आस्तिकः । नरकसाधनत्वज्ञानादिति । बलवत् यन्नरकरूपानिष्टं तत्साधनत्वबुद्धिरगम्यागमनादावास्तिकस्य



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नताधीतिरोधानात्, वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षाप्रवृत्ती, किंत्विष्टसाधनताज्ञानादिच्छामात्रम् । कृतिश्च प्रवृत्तिरूपा बोध्या । तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारे न प्रवृत्तिः । इत्थं च प्रवर्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमेवार्थः । इत्थं च विश्वजिता यजेतेत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते । नन्वहरहः संध्यामुपासीतेत्यादाविष्टानुत्पत्तेः प्रवृत्तिः कथम्? न चार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम् । तथासति काम्यत्वे नित्यत्वहान्यापत्तेः, कामनाभावे चाकरणापत्तेः, इत्थं च यत्र फलश्रुतिस्तत्रार्थवादमात्रमिति चेन्न । ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव नि-

विवृतिः ।

सद्वास्ति 'अगम्यागमनं कृत्वा रौरवं नरकं व्रजे'दित्यादिस्मरणात् । उत्कटरागादिनेति । अगम्यागमनादिसुख इति शेषः । नरकेति । रागान्धपुरुषस्येदमगम्यागमनादिकं मन्नरकसाधनमितिधीरुत्कटप्रेमवशान्नोदेतीत्यभिप्रायः । इच्छामात्रं—वृष्टिर्भवेदित्यात्मकम् । कृतिश्चेति । कृतिसाध्यताज्ञानमित्यत्रत्यकृतिश्चे त्यर्थः । प्रवृत्तिरूपेति । प्रवृत्तिश्च पुरुषनिष्ठा आर्थी भावना । तेन—कृतेः प्रवृत्तिरूपत्वेन, इत्थं च-प्रवृत्ताविष्टसाधनत्वादिज्ञानस्य कारणत्वे च । विधेरपीति । विधिश्च प्रवर्तना मां प्रेरयतीत्यनुभवाल्लिङादिनिष्ठा शाब्दी भावना । प्रवर्तनात्वं च प्रवृत्तिजनकज्ञानविषयतावच्छेदकधर्मवत्त्वं तच्चेष्टसाधनस्यास्ति तदेव विध्यर्थ इति हृदयम् । इत्थं च—इष्टसाधनत्वादिकस्य विध्यर्थताङ्गीकारे च, विश्वजिता—यज्ञविशेषेण, यजेत—यज्ञं कुर्यात्, धान्येन धनवानितिवदभेदे तृतीया । विश्वजिदभिन्नेनेत्यर्थः । स्वर्ग इति ।

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥

इत्युक्तलक्षण इत्यर्थः । अहरहः—प्रतिदिनम्, इत्यादावित्यादिना 'ईश्वरमुपासीत, अष्टवर्षं ब्राह्मणमुपनयीते'त्यादेः संग्रहः । इष्टानुत्पत्तेःसुखादीष्टफलानुत्पत्तेः । प्रवृत्तिः कथमिति । प्रवृत्ताविष्टसाधनत्वप्रकारकज्ञानस्य हेतुत्वात् । तथा च विधेरत्रेष्टसाधनत्वाद्यर्थो नाभ्युपेय

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्यत्वकाम्यत्वयोरप्यविरोधात्। न च कामनाभावेऽकरणतापत्तिः, त्रिकालस्तवपाठादाविव कामनासद्भावस्यैव कल्पनात्, न तु वेदबोधितकार्यताज्ञानात्प्रवृत्तिरिति संभवति—स्वेष्टसाधनत्वमविज्ञाय तादृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसंभवात्। यदपि पण्डापूर्वं फलमिति। तदपि न। कामनाभावेऽकरणापत्तेस्तौल्यात्। कामनाकल्पने त्वार्थवादिकफलमेव रात्रिसत्रन्यायात्कल्प्यताम्, अन्यथा प्रवृत्त्यनुपपत्तेः। तेनानुत्पत्तिं प्रत्यवायस्यान्ये मन्यन्ते।

विवृतिः।

इष्टानुत्पत्तेरिति भावः। न चार्थवादिकमिति। 'संध्यामुपासते ये त्वि'त्यादिनार्थवादशास्त्रेण ज्ञापितमित्यर्थः। फलमिति। संध्योपासनादेरिति शेषः। नित्यत्वहान्यापत्तेरिति। नित्यकर्मत्वं संध्यादेर्न स्यादित्यर्थः। अकरणापत्तेरिति। भोजनवदिति शेषः। अकरणे प्रत्यवायानुत्पादापत्तेरित्यर्थः। तत्रार्थवादमात्रमिति। 'य एता रात्रीरधीयीत तस्य पितरो घृतकुल्याः क्षरन्ती'त्यादाविवेत्यर्थः। नित्यत्वनैमित्तिकत्वयोरिवेति।

नित्यश्राद्धं न कुर्वीत प्रसङ्गाद्यत्र सिद्ध्यति।
श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वात्तन्न हापयेत्॥

इत्यादाविवैकत्रोभयसमावेशवदिति निष्कर्षः। त्रिकालस्तवेति। यथा त्रिकालस्तवपाठादावकाम्येऽपि फलकामना दृश्यते तथैव संध्यादौ नित्येऽपि सा दुष्परिहरैवेत्यभिप्रायः। प्रवृत्तिरिति ॥। संध्यादाविति शेषः। स्वेष्टसाधनत्वमिति। इष्टसाधनताज्ञानसत्त्वे प्रवृत्तिसत्त्वमिष्टसाधनताज्ञानाभावे प्रवृत्त्यभाव इत्यन्वयव्यतिरेकव्याप्त्या प्रवृत्तित्वेनेष्टसाधनत्वज्ञानत्वेन कार्यकारणभावादित्यर्थः। गुरुमतं प्रत्याख्याति—यदपीति। क्वचिदत्र यद्यपीत्यपपाठः। पण्डापूर्वं—फलविशेषानाधायकमपूर्वं। कामनाभावेऽकरणतापत्तेस्तौल्यादिति। कामनाभावेऽकरणतापत्तिरूपदोषस्य तव मम च मते समानत्वादित्यर्थः। कामनाकल्पने—पण्डापूर्वस्य कामनाकल्पने। रात्रिसत्रन्यायादिति। यथा रात्रिसत्रकर्तुरिहैव प्रतिष्ठाफलमर्थवादवाक्येन बोध्यते तथैवार्थवादिकब्रह्मलोक एव फलमत्रापि स्वी-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एवम्—

सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥

एवम्—

दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन् ।

इति प्रीत्यात्मकमेव फलमस्तु । न च पितृप्रीतिः कथं फलं व्य-

विवृतिः ।

कर्तव्यमदोषादिति निष्कृष्टोऽर्थः । विपक्षे दोषमाह—अन्यथेति । आर्थवादिकफलकल्पनानङ्गीकारे इत्यर्थः । प्रवृत्त्यनुपपत्तेः—सन्ध्यावन्दनादिप्रवृत्त्यनुपपत्तेरित्यर्थः । मन्यन्ते सन्ध्यावन्दनादेः फलमिति शेषः । सन्ध्यामिति । युगसन्धिकाले कर्मविशेषः सन्ध्या 'सन्ध्या पितृप्रसूनद्यन्तरयोर्युगसन्धिषु' इति मेदिनी । विपक्षे दोषमाह श्रीदक्षः—

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ।

विधूतपापाः-पापरहिताः । ब्रह्मलोकमिति । ब्रह्मणस्तपसो वेधसो वा लोकं न पुन 'र्यत इमानि भूतानि जायन्ते इत्यत्रोक्तस्य जन्माद्यस्य यत इत्यत्रो क्तस्य वा ब्रह्मणः । 'न कर्मणा न प्रजये'त्यादिश्रुतिभिर्निषेधात् । ज्ञानिनामेव तत्र गमनोपगमाच्च । अनामयं-दुःखरहितं, आमयो दुःखमिति विश्वः । दद्यादहरहः श्राद्धमिति । क्वचित्तु कुर्यादिति पाठः । तथाहि मनुः—

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् ॥

श्राद्ध इति कर्मविशेषो न तु श्रद्धावान् पुरुषोऽनभिधानादिति काशिकाकारः । भक्त्या क्रियमाणं पित्र्यं कर्म श्राद्धमिति दीक्षिताः । केचितु श्रद्धया क्रियते यत्तच्छ्राद्धमित्याहुस्तदतीव मन्दम्-श्रद्धया क्रियमाणे विवाहादावपि श्राद्धत्वप्रसङ्गात् । पितृभ्यो-मृतपितृभ्यो न जीवद्भ्यः 'प्रेतेभ्यो ददातीति' कातीयसूत्रभाष्ये यत् पितृभ्यो दानमुक्तं तत्प्रेतेभ्यो न जीवद्भ्य इत्युक्तेः । 'दक्षिणाप्रवणो वै पितृलोकः । तृतीयाह प्रद्यौरिति यस्या पितर आसत' इत्यादिश्रुतीनां 'विधूर्ध्वभागे पितरो वसन्ती'त्याचार्यभास्करोक्तेश्चात्रैवानुकूल्याच्चेति दिक ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धिकरणत्वादिति वाच्यम्। गयाश्राद्धादाविवोद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित्कल्पनात्। अत एवोक्तं 'शास्त्रदर्शितफलमनुष्ठानकर्तरीत्युत्सर्ग' इति। पितॄणां मुक्तत्वे तु स्वस्य स्वर्गादिफलं यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गजनकत्वात्। पण्डापूर्वार्थं प्रवृत्तिश्च न संभवति नहि तत्सुखदुःखाभाववत्स्वतःपुरुषार्थो न वा तत्साधनम्। प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेदित्थम्-यथा हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः। एवं प्रत्यवायाभावसत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणताया दुःखप्रागभावं प्रत्यपि सुवचत्वात्। एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति। ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्था-

## विवृतिः।

न चेत्यसहमानस्याशङ्का। व्यधिकरणत्वादिति हेतुः। श्राद्धस्य कर्तृनिष्ठत्वेन तृप्तेश्च पितृनिष्ठत्वेन समानाधिकरणत्वाभावादिति तदर्थः। उद्देश्यत्वसम्बन्धेनेति। यथा गयाश्राद्धं यमुद्दिश्य क्रियते तमेव तत् फलं प्राप्नोति तथैवात्रापीत्यभिमानः। अत एव-तदेतत्सकलमभिप्रेत्यैवेत्यर्थः। अनुष्ठानकर्तरि-अनुष्ठानकर्तर्येव, नान्यत्र अनुभवविरुद्धत्वादित्याशयः। इत्येष उत्सर्गः मीमांसकप्रवादः सापवादत्वात्प्रायोवादत्वेन प्रौढिवादमात्रत्वेन वा व्यवह्रियत इत्यर्थः। एवमत्र द्वावेव फलं लभेत इत्येव तात्पर्यं पर्यवस्यति। तत्साधनं—सुखदुःखाभावसाधनम्, नित्ये—सन्ध्यावन्दनादौ, इत्थमनेन प्रकारेण। 'इदमस्थमुरिति' थमुप्रत्ययः। तदभावे—सन्ध्यावन्दनादिनित्यकर्मकरणाभावे, तदभावः—प्रत्यवायाभावाभावः प्रत्यवाय इति यावत्। वेदाध्ययनं नित्यमनध्ययने पातादितिवत्। योगक्षेमसाधारणेति। योगोऽलभ्यलाभः। 'योगो युक्तौ च सङ्गत्यां कार्मणालभ्यलाभयो'रिति महीपः। अप्राप्तवस्तुनः प्रापणं वा योगः। सिद्धस्य संरक्षणं क्षेम। एवमेव-योगक्षेमसाधारणमेव। कलञ्जमिति। विषाक्तशरकरणकमरणकर्मीभूतमृगादिमांसकलञ्जमभिधीयते। यदुक्तमभियुक्तैः-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्वयः, इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न। तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वं च न विध्यर्थः, किन्तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते। अथवा बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः। तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति। ननु श्येनेनाभिचरन् यजेतेत्यादौ कथं बलवदनिष्टाननुबन्धित्वमर्थः श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्, न च वैधत्वान्न निषेध इति वाच्यम्, अभिचारे प्रायश्चित्तो-

विवृतिः।

विषाक्तेनैव बाणेन हतौ यौ मृगपक्षिणौ।
तयोर्मांसं कलञ्जं स्याच्छुष्कमांसमथापि वा॥

केनचित्तु धूम्रपानपक्षपातिना 'कलञ्जसंवेष्टनधूम्रपानात्स्याद्दन्तशुद्धिर्मुखरोगहानि'रिति वदता कलञ्जपदं तमालवाचकमप्युक्तम्। कथं नञर्थान्वय इति। विध्यर्थस्येष्टसाधनात्मकत्वात् नञोऽभावरूपार्थकत्वादित्यभिप्रायः। कलञ्जकर्मकं भक्षणं बलवदनिष्टानुबन्धित्वविशिष्टेष्टसाधनताभाववदिति बोधः। तदभावश्च—बलवदनिष्टाननुबन्धित्वाभावश्च। श्येनेनाभिचरन्निति। श्येनयागादिना शत्रुमारणमभिचारः। कर्मविशेषेण शत्रुहननमिच्छन्नित्यर्थः। वैधत्वान्न निषेध इति। 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य' इति श्रुतेर्यज्ञादिभ्यो भिन्नस्थल एवाहिंसाया उपदेशादिति भावः। अत्र तीर्थपदं यज्ञपरम्। इदमेव च व्याससूत्रव्याख्यातॄणां शांकराणां रामानुजीयानां माध्वानां मतम्। 'यत्पशुर्मायुमकृतोरोवापद्भिराहते अग्निर्मातस्मादेनसो विश्वान्मुञ्चत्वं हस' इत्यादिश्रुतौ तु पशुहिंसोत्पन्नपापस्य दूरीकरणार्थमग्निप्रार्थनारूपप्रायश्चित्तश्रुतेर्वैधहिंसापि पापजनिकोक्ता। अत एव भारते पायसादियागस्य गीतायां जपयज्ञस्य श्रेष्ठत्वमुक्तम्। एवं च कथं तत्रास्तिकानां प्रवृत्तिरिति चेत्तद्दोषसहिष्णो रागान्धस्यैव ग्रहाण। अत एव च अहिंसन्निति श्रुतेरपि वैधान्यहिंसानिवृत्तेरिष्टसाधनत्वमर्थो न वैधहिंसाया अनिष्टसाधनत्वाभावोऽपीत्यन्यत्र पल्लवः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पदेशात्, न च मरणानुकूलव्यापारमात्रं यदि हिंसा तदा खड्गकारस्य कूपकर्तुश्च हिंसकत्वापत्तिर्गललग्नान्नभक्षणजन्यमरणे आत्मवधत्वापत्तिश्चेति वाच्यम्। मरणोद्देश्यकत्वस्यापि विशेषणत्वात्, अन्योद्देश्यकक्षिप्तनाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न। श्येनवारणायादृष्टाद्वारकत्वेन विशेषणात्। अत एव काशीमरणार्थं कृतशिवपूजादेरपि न हिंसात्वम्। न च साक्षान्मरणजनकस्यैव हि हिंसात्वं श्येनस्तु न

विवृतिः।

आत्मवधित्वापत्तिरिति। ततः किमिति चेदत्र श्रुतिः—

असुर्या नाम ते लोका अंधेन तमसा वृताः।
तांस्ते प्रेत्याभिगच्छन्ति येके चात्महनो जनाः॥

मरणोद्देश्यकत्वस्यापि विशेषणत्वादिति। एवं च खड्गकर्तुः कूपकर्तुश्च व्यापारस्य मरणानुकूलत्वेऽपि मरणोद्देश्यकत्वाभावेनोक्तदोषानवकाशादिति हृदयम्। अन्योद्देश्यकेति। मृगाद्युद्देश्यकेत्यर्थः। नाराचो—बाणः। वाचनिकमिति।

शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन्।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्॥

इत्यादिवचनबोधितमित्यर्थः।

श्येनवारणावति। श्येनस्य हिंसात्ववारणायेत्यर्थः। अदृष्टाद्वारकत्वेनेति। श्येनस्यादृष्टद्वारैव शत्रुनाशकत्वादिति भावः। काशीमरणार्थं कृतशिवपूजादेरिति। अत्र मृतेन जनेन भोगिनापि योगिनामप्राप्यं शिवसारूप्यमाप्यते। तथा चागमः 'काशीमरणान्मुक्ति'रिति। काश्यां तारकोपदेशात्। तत्र मरणं च तदधिष्ठातृदेवमहादेवकृपात एव भवतीति तत्प्रसादाय युक्तमेव तत्पूजनमिति भावः। प्रकाशकृत्तु-काशीमरणान्मुक्तिरिति वाक्यं श्रुतिमाह—तच्चिन्त्यमनुपलम्भात्स्कन्दपुराणे दर्शनाच्च। ननु 'तरति शोकमात्मवित्' 'ज्ञानादेव तु कैवल्यं' इत्यादि बहुलश्रुतिप्रमाणात् 'श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव गरीयसीत्य'भियुक्तोक्तेश्च श्रुतिविरोधिस्मृतिवचो हेयमेवेति चेद्बाढम्; परन्तु काश्यां मरणसमये परमकारुणिको भगवांश्छिवो नृणां कर्णमूले तारकमन्त्रमुपदिशति तेन

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तथा किन्तु तज्जन्यापूर्वमिति वाच्यम् । खड्गाघातेन ब्राह्मणे व्रणपाकप-रंपरया मृते हिंसात्वानापत्तेः ।

केचित्तु श्येनस्य हिंसा फलं न तु मरणम् । तेन श्येनजन्यखड्गघातादिरूपा हिंसाऽभिचारपदार्थः । तस्य च पापजनकत्वम् । अतः श्येनस्य वैधत्वात्पापाजनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्तन्त इत्याहुः ।

आचार्यास्तु आप्ताभिप्रायो विध्यर्थः । पाकं कुर्या इत्यादावाज्ञादिरूपेच्छावाचित्ववल्लिङ्मात्रस्येच्छावाचित्वं लाघवात् । एवं च स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यर्थः । ततश्चाप्तेष्टत्वेनेष्टसाधत्वादिकमनुमाय प्रवर्तते । कलञ्जभक्षणे तदभावान्न प्रवर्तते । यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव तावद्गर्भं

विवृतिः ।

तत्त्वज्ञानं तस्माच्च मोक्ष इति न काप्यनुपपत्तिः ।

केचित्तु सर्वमेतदयुक्तं श्रुतिप्रमाणाभावात् । काशीमरणान्मुक्तिरित्यस्य काशीपुरे मरणान्मुक्तिरित्यपि रभसार्थः ।

वास्तवस्तु काश्यते प्रकाश्यते ब्रह्म यस्यां सा काशी ज्ञानावस्था तस्यां मरणान्मुक्तिरिति दीप्त्यर्थकात्काशृधातोर्व्युत्पन्नोऽयं काशीशब्द इत्याहुः ।

न तथा-न साक्षान्मरणजनकः । हिंसात्वानापत्तेरिति । भवति च खड्गाघातकर्तुर्हिंसेति न साक्षान्मरणजनकत्वं हिंसालक्षणं शक्यमभिधातुमिति भावः । वैधत्वात्—विधिविहितत्वात्, सन्त–आस्तिका, न प्रवर्तन्ते—श्येनादिकर्मभ्यो न रोचयन्त इत्यर्थः ।

आचार्यास्तु—उदयनाचार्यास्तु । लाघवादिति । सर्वापेक्षया इच्छात्वेन विधिशक्तौ लाघवादित्यर्थः । पर्यवसितमाह—एवं चेति । प्रवर्तत इति । यागादाविति शेषः । कृतिसाध्यवलयदनिष्टाजनकेष्टसाधनयागकर्ता स्वर्गकाम इति निष्कर्षः । तदभावात्—आप्तेष्टत्वाभावप्रयुक्तेष्टसाधनत्वज्ञानाभावात् । ननु यदा वेदवक्तैव कश्चिन्न स्वीक्रियते तदा कस्येच्छां लिङ् बोधयेदित्यत आह—यस्तु वेदे पौरुषेयत्वं नाभ्युपैतीति । अलौकिकं पुरुषा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इव श्रुतिकुमार्याः पुंयोगे मानम् । न च कर्तृस्मरणं बाधकम्, कपिलकणादादिभिरद्यपर्यन्तं कर्तृस्मरणस्यैव प्रतीयमानत्वात् । अन्यथा स्मृतीनामप्यकर्तृकत्वापत्तेः । तत्रैव कर्तृस्मरणमस्तीति चेद्वेदेऽपि 'छन्दांसि जज्ञिरे तस्मात्' इत्यादिकर्तृस्मरणमस्त्येव । एवं "प्रतिमन्वतरं चैषा श्रुतिरन्या विधीयते" इत्यपि द्रष्टव्यम् ।

विवृतिः ।

र्थोपायं वेत्त्यनेनेति वेदः पुरुषस्यायमित्यर्थे तस्येदमित्यणि पुरुषस्वत्वं पौरुषेयशब्दार्थः । कपिलादिनये ईश्वरानङ्गीकाराद्वेदस्य पुरुषविशेषेश्वरनिर्मातृत्वाभावेनापौरुषेयत्वं निर्विवादसिद्धम् । तथाच सूत्रं— 'न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावादिति' ॥ तावत्प्रथमं, वाक्यालंकारे वा । मानमिति । यथा कुमारीगर्भदर्शनात्पुंयोगानुमानं तथैव विधिगर्भितश्रुतिवाक्यदर्शनादीश्वरयोगानुमानमेवं च विधिवाक्यस्यैव वेदवक्तुरीश्वरे प्रामाण्यमित्यभिसंधिः । पुना रेकते—न चेति । कर्तृस्मरणं, महर्षिभिः श्रुतिकर्तुरनुल्लेख इत्यर्थः । कपिलकणादादीत्यादिना गोतमादेः संग्रहः । कर्तृस्मरणस्य—सकर्तृकत्वबोधकस्मृतेरित्यर्थः । विपक्षे दोषमाह—अन्यथेति । श्रुतेरकर्तृकत्वस्वीकार इत्यर्थः । तत्रैच स्मृतिष्वेव, कर्तृस्मरणं—तत्तत्स्मृतिकर्तृनामनिर्देशः । वेदेऽपीति । वेददस्य द्वौ भागौ मन्त्रो ब्राह्मणं च । तथा चापस्तंबः—'मन्त्रब्राह्मणयोर्वेदनामधेय'मिति । परंतूभयोर्मध्ये मंत्रभाग एव वेदत्वेनातिप्रसिद्धयत्यत स्तमेवोदाहरति—छन्दांसीति ।

तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥

इति समग्रो मंत्रः । इत्यादीत्यादिना 'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्' इत्यादेः संग्रहः । इत्यपीति । इति स्मृतिवाक्यमपि श्रुतेः सकर्तृकत्वे मानमित्यर्थः । स्वयंभूरिति । स्वयं भवतीति स्वयंभूर्वेदविशेषणमेष भगवानित्यपि । इति तु—इति भारतं तु । स्तुतिमात्रमिति । स्तुतिपरमेव न स्वार्थे तात्पर्याधायकमपीति भावार्थः । भ्रमादिसंभवादिति । उच्चारणीयवाक्यार्थगोचरो भ्रमः । प्रमादविप्रलिप्सादिकमादिपदात् । तेषां पुरुषधर्मत्वादित्यर्थः । निर्दोषत्वादिति । दोषाभ्रमादयो रागद्वेषमोहा वा त ईश्वरे नैव सन्ति ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्वयंभूरेष भगवान्वेदो गीतस्त्वया पुरा ।
शिवादिऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ॥

इति तु वेदस्य स्तुतिमात्रम् । न च पौरुषेयत्वे भ्रमादिसंभवादप्रामाण्यं स्यादिति वाच्यम् । नित्यसर्वज्ञत्वेन निर्दोषत्वात् । अत एव पुरुषान्तरस्य भ्रमादिसंभवान्न कपिलादेरपि कर्तृत्वं वेदस्य । किञ्च वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात्सुतरां तत्सन्दर्भस्य वेदस्यानित्यत्वमिति संक्षेपः ।

उपादानस्येति । उपादानस्य समवायिकारणस्याध्यक्षं प्रत्यक्ष प्रवृत्तौ कारणमिति ।

**निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः ॥ १५१ ॥**

निवृत्तिरिति । द्विष्टसाधनताज्ञानस्य निवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति भावः ॥ १४९-१५१ ॥

**यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत् ।**

यत्न इति । जीवनयोनियत्नो यावज्जीवनमनुवर्तते । स चातीन्द्रियः ।

विवृतिः ।

रागाज्ञानादिभिर्वक्ता ग्रस्तत्वादनृतं वदेत् ।
ते चेश्वरे न विद्यन्ते स ब्रूयात्कथमन्यथा ॥

इत्याद्यागमादिति भावः । अत एव-पुरुषे नित्यसर्वज्ञत्वविरहादेव । कपिलादेरित्यादिना कणादगोतमादेः संग्रहः । वक्ष्यमाणत्वादिति । 'तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः' इत्यनुपदमेव मूलकृताभिधास्यमानत्वादित्यर्थः । सुतरामिति । यदा वर्णा अनित्यास्तदा तैरारभ्यमाणं पदमनित्यं पदैरनित्यैरारभ्यमाणं वाक्यमनित्यं वाक्यैरनित्यैरारभ्यमाणः संदर्भोऽप्यनित्यः न ह्यशुक्लैस्तन्तुभिरारभ्यमाणः पटः शुक्लो भवतीति भावः ।

अन्वयव्यतिरेकाभ्यामिति । द्विष्टसाधनताज्ञानाभावे निवृत्त्यभाव इत्यन्वयव्यतिरेकाभ्यामित्यर्थः ॥ १४९ ॥ १५० ॥ १५१ ॥

जीवनयोनियत्नः-जीवनकारणीभूतप्रयत्नः । स चातीन्द्रिय इति । इन्द्रियाण्यतिक्रम्य वर्तते यः सोऽतीन्द्रिय इन्द्रियागोचर इति यावत् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तत्र प्रमाणमाह—

शरीरे प्राणसंचारे कारणं परिकीर्तितम् ॥ १५२ ॥

शरीर इति । प्राणसंचारो हि अधिकश्वासादिः यत्नसाध्यः । इत्थं च प्राणसंचारस्य सर्वस्य यत्नसाध्यत्वानुमानात्प्रत्यक्षयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः । स एव जीवनयोनिर्यत्नः ॥ १५२ ॥

गुरुत्वं निरूपयति—

अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ १५३ ॥
तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि ।

अतीन्द्रियमिति । अनित्य इति । अनित्ये द्व्यणुकादौ तद्गुरुत्वम-समवायि—असमवायिकारणम् । पतनाख्य इति । आद्यपतन इत्यर्थः ।

द्रवत्वं निरूपयति—

सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥ १५४ ॥
सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।

सांसिद्धिकमिति । द्रवत्वं द्विविधं—सांसिद्धिकं नैमित्तिकं चेति । द्वितीयं—नैमित्तिकम् ।

परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ॥ १५५ ॥

परमाणाविति । जलपरमाणौ द्रवत्वं नित्यमित्यर्थः । अन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यम् । कुत्रचित्तेजसि कुत्रचित्पृथिव्यां च नैमित्तिकं द्रवत्वम् ॥ १५३–१५५ ॥

विवृतिः ।

तत्र—जीवनयोनियत्ने । प्राणसंचार इति । मुखनासिकासंचारी वायुः प्राणस्तस्य संचारः । अधिकश्वासादिरिति । पलायमानानां प्रयत्नाधिक्येन श्वासाधिक्यमनुभवसिद्धमेव । स एव-प्राणसंचारकारणत्वेनानुमीयमान एव ॥ १५२ ॥

तेजसि—स्वर्णादौ, पृथिव्यां—घृतलाक्षादौ ॥ १५३–१५५ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ।

नैमित्तिकमिति । वह्नीति । अग्निसंयोगजन्यं नैमित्तिकं द्रवत्वम् । तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्यां च वर्तत इत्यर्थः ।

द्रवत्वं स्यन्दने हेतुर्निमित्तं सङ्ग्रहे तु तत् ॥ १५६ ॥

द्रवत्वमिति । हेतुरिति । असमवायिकारणमित्यर्थः । संग्रहे सक्तुकादिसंयोगविशेषे तद्द्रवत्वं स्नेहसहितमिति बोद्धव्यम् । तेन द्रुतसुवर्णादीनां न संग्रहः ॥ १५६ ॥

स्नेह निरूपयति—

स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ ।
तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥ १५७ ॥

स्नेह इति । जले इति । जल एवेत्यर्थः । असौ स्नेहः । ननु पृथिव्यामपि तैले स्नेह उपलभ्यते, न चासौ जलीयः—तथा सति दहनप्रातिकूल्यं स्यादत आह तैलान्तर इति । तत्प्रकर्षात्—स्नेहप्रकर्षात् । तैले उपलभ्यमानस्नेहोऽपि जलीय एव । तस्य प्रकृष्टत्वादग्नेरानुकूल्यम् । अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः ॥ १५७ ॥

संस्कारं निरूपयति—

संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।

विवृतिः ।

तच्च—नैमितिकद्रवत्वं च ।

तेन—स्नेहसहितद्रवत्वस्य निमित्तत्वकथनेन । न संग्रह इति । द्रुतसुवर्णादौ स्नेहसहितद्रवत्वाभावादिति भावः ॥ १५६ ॥

असौ—तैले प्रतीयमानः स्नेहः । जलीयः-तैलान्तर्वर्तिजलीयः । दहनप्रातिकूल्यप्रसङ्गादिति । प्रातिकूल्यं—नाशः । दहनप्रातिकूल्ये संयोगसंबंधेन जलस्य कारणत्वादिति भावः । स्नेहप्रकर्षादिति । प्रकर्ष-आधिक्यम् । तस्य-जलीयस्नेहस्य, प्रकृष्टत्वात्—उत्कटत्वात् ; हिरवधारणे ॥ १५७ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संस्कारेति। वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविध इत्यर्थः।

मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥ १५८ ॥

मूर्तमात्र इति। कर्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः। शरीरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते। तेन च पूर्वकर्मनाशस्तत उत्तरं कर्म। एवमग्रेऽपि। विना च वेगं कर्मणः कर्मप्रतिबन्धकत्वात्पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात्। यत्र वेगवता कपालेन जनितं घटे वेगो जन्यते स वेगजो वेगः॥ १५८ ॥

स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि।

अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥१५९॥

स्थितिस्थापकेति। अतीन्द्रिय इति। आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात्। केचिदिति। चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः। असौ-स्थितिस्थापकः। क्वचिदाकृष्टशाखादौ॥ १५९ ॥

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः।

उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥ १६० ॥

भावनाख्य इति। तस्य-संस्कारस्य। उपेक्षात्मकज्ञानात्संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तम्। तत्संशयात्तस्यानुत्पत्तेर्निश्चय इत्युक्तम्। तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः। ननु स्मरणं प्र-

विवृतिः।

तेन च-वेगेन च, ततः-पूर्वकर्मनाशोत्तरम्, उत्तरकर्म-वेगान्तरोत्पत्तिः। कर्मणः-पूर्वकर्मणः, कर्मप्रतिबन्धकत्वात्-उत्तरकर्मप्रतिबंधकत्वात्॥ १५८॥

पुनर्गमनस्य-पूर्ववदवस्थानस्य, अत एवान्वर्थेयं संज्ञा स्थितवत्स्थापयतीति व्युत्पत्तेः। तदप्रमाणमिति। प्रमाणव्यतिरेकेण च न किञ्चिद्वस्तु प्रसिद्ध्यास्पदमिति भावः॥ १५९॥

उपेक्षा-वस्तुतत्त्वानवधारणम्, तस्य-संस्कारस्य। इत्थंचेति। प्रतिपादितदिशोपेक्षाज्ञानतः स्मरणव्युदासे चेत्यर्थः। वस्तुस्थितिमाह

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



त्युपेक्षान्यनिश्चयत्वेन हेतुत्वम्, तेनोपेक्षादिस्थले न स्मरणम्, इत्थं च संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न । विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् । किञ्चोपेक्षास्थले संस्कारकल्पनाया गुरुत्वात्संस्कारं प्रति चोपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् ॥ १६० ॥

**स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।**

असौ—संस्कारः । तत्र प्रमाणं दर्शयति—स्मरण इति । यतः स्मरणं प्रत्यभिज्ञानं च जनयत्यतः संस्कारः कल्प्यते विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यात्स्वस्वव्यापारान्यतराभावे कारणत्वासंभवात् । न च प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम् । अप्रयोजकत्वात् ।

परे त्वनुद्बुद्धसंस्कारात्प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः ।

अदृष्टं निरूपयति—

**धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥ १६१ ॥**

**गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः ।**

धर्माधर्माविति । स्वर्गादीति । स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्म इत्यर्थः । तत्र प्रमाणं दर्शयितुमाह यागादीति । यागादिव्यापारतया धर्मः कल्प्यते । अन्यथा यागादीनां

## विवृतिः ।

किंचेति । उपेक्षान्यत्वेन—उपेक्षान्यनिश्चयत्वेन । सिद्धत्वादिति । अन्वयव्यतिरेकाभ्यामिति शेषः ॥ १६० ॥

तत्र—संस्कारे । स्वस्वव्यापारेति । स्वं—कारणं, स्वो व्यापारः । अप्रयोजकत्वादिति । संस्कारमात्रजन्यत्वाभावादित्यर्थः ।

परे तु—चिन्तामणिकृतस्तु ।

स्वर्गादिसकलसुखानामिति । तथाच 'यतोऽभ्युदयनिःश्रेयस-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात् । तदुक्तमाचार्यैः—

चिरध्वस्तं फलायालं न कर्मातिशयं विना । इति ।

ननु यागध्वंस एव व्यापारः स्यात्, न च प्रतियोगितद्ध्वंसयोरेकत्राजनकत्वम् सर्वत्र तथात्वे मानाभावात्, न च त्वन्मते फलानन्त्यं मन्मते चरमफलस्यापूर्वनाशत्वान्न तथात्वमिति वाच्यम्, कालविशेषस्य सहकारित्वादित्यत आह—गङ्गास्नानेति । गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्वमेव कल्प्यते लाघवादिति भावः ।

विवृतिः ।

सिद्धिः स धर्म' इत्यत्र तात्पर्यमस्ति । ननु कोऽयं धर्मो नाम न हि तत्र लक्षणं प्रमाणं वास्ति न च तदुभयव्यतिरेकेण किञ्चिद्वस्तु प्रसिद्ध्यतीत्याशंकमानं प्रति धर्मस्य लक्षणमुक्त्वा तत्र प्रमाणमपि दर्शयति—तत्रेति । धर्म इत्यर्थः । यागादीति । प्रीत्यवच्छिन्नसमन्त्रकद्रव्यत्यागो यागः । अन्यथा—धर्माभावे, कालान्तरभाविस्वर्गजनकत्वं-तादृशस्वर्गनिष्ठजन्यतानिरूपितजनकत्वं, यागादेर्न स्यात् नष्टत्वात्पूर्ववर्तिन एव जनकत्वोपगमश्च यतः । अत्रार्थे उदयनाचार्याणामपि संमतिरित्याह—तदुक्तमिति । चिरध्वस्तं—कर्म, अतिशयमपूर्वमन्तरेण, फलाय—फलोत्पादनाय उत्तरपदलोपोऽत्र द्रष्टव्यः । गम्यमानार्थस्याप्रयोग एव लोप इति कैयटः । नालं—न समर्थमिति पद्यार्थः । व्यापारः स्यात्—यागध्वंस एव तद्व्यापारोऽस्तु । तद्ध्वंसेति । प्रतियोगिध्वंसेत्यर्थः । तथात्वे—तयोरेकत्र जनकत्वानङ्गीकारे । त्वन्मत इति । यागध्वंसस्य व्यापारत्वस्वीकर्तुस्तव मत इत्यर्थः । एवं मन्मते धर्मस्य व्यापारत्वस्वीकर्तुर्मम मत इत्यर्थः । तथात्वं—फलानन्त्यरूपदोषत्वम् । सहकारित्वादिति । फलस्येति शेषः । तथा च न फलानन्त्यरूपदोषापत्तिरिति ध्येयम् । गङ्गास्नानस्य—सर्वाङ्गीणगंगाजलसंयोगलक्षणस्य । एकमपूर्वमिति । तच्च धर्म एव नाधर्मः—प्रकृतसंगतेः । चिरध्वस्तस्य-यागादिकर्मण इति शेषः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ननु ध्वंसोऽपि न व्यापारोऽस्तु, न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्, अनन्यथासिद्धनियतपूर्ववर्तित्वस्य तत्रापि सत्त्वात्, अव्यवहितपूर्ववर्तित्वं हि चक्षुःसंयोगादेः कारणत्वे न तु सर्वत्र कार्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्वे इत्यत आह—

कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥ १६२ ॥

कर्मनाशेति । यदि ह्यपूर्वं न स्यात्तदा कर्मनाशाजलस्पर्शादिना नाश्यत्वं धर्मस्य न स्यात्, नहि तेन यागादेर्नाशः प्रतिबन्धो वा कर्तुं शक्यते तस्य पूर्वमेव वृत्तत्वादिति । एतेन देवताप्रीतिरेव फलमित्यपास्तम् । गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसंभवाच्च । देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात् । प्रीतेः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसंभवात् । जन्यसुखादेस्तत्राभावात् । तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते ॥ १६१ ॥ १६२ ॥

### विवृतिः ।

कारणत्वम्—स्वर्गादिकारणत्वम्, तत्रापि—यागादावपि, कारणत्वे इति । रूपादिप्रत्यक्षं प्रतीति शेषः । अपूर्वं—यागादिजन्यमपूर्वम् । कर्मनाशाजलस्पर्शादिनेति । आदिशब्देन कीर्तनभोगतत्त्वज्ञानादेरुपग्रहः । धर्मस्य न स्यादिति । तथाच कर्मनाशाजलस्पर्शादिनाश्यतावच्छेदकनिर्वचनानुरोधेन धर्मसिद्धिः । कर्मनाशाजलस्पर्शादिना धर्मस्य नाश्यत्वं स्मर्यते—

कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्तनात् ॥

तेन—कर्मनाशानदीजलस्पर्शादिना । तस्य—यागादेः, पूर्वमेव—कर्मनाशाजलस्पर्शादितः पूर्वमेव । वृत्तत्वादिति । उत्पन्नत्वाद्विनष्टत्वाच्चेत्यर्थः । भिन्नकालवृत्तिपदार्थानां प्रतिबध्यप्रतिबंधकभावस्य नाश्यनाशकभावस्य च सर्वथाऽसमंजसत्वादिति भावः । फलमुपयोगः । तत्प्रीतेः—देवताप्रीतेः । तदसंभवात्—सुखरूपप्रीत्यसंभवात् । तत्र—विष्ण्वादौ । पराभिमतेति । मीमांसकाभिमतेत्यर्थः ॥ १६१ ॥ १६२ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ।

अधर्म इति । नरकादिसकलदुःखानां नारकीयशरीरादीनां च साधनमधर्म इत्यर्थः ।

तत्र प्रमाणमाह—

प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥ १६३ ॥

प्रायश्चित्तेति । यदि ह्यधर्मो न स्यात्तदा प्रायश्चित्तादिनाश्यत्वं न स्यात् । नहि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते—तस्य पूर्वमेव विनष्टत्वादिति भावः । जीवेति । ईश्वरस्य धर्माधर्माभावादिति भावः ॥ १६३ ॥

इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ।

विवृतिः ।

तत्र—अधर्मे, अधर्मः—पापम् । प्रायश्चित्तादिनेति । आदिना भोगपरिग्रहः । नाश्यत्वमधर्मस्य क्वचित्तथैव पाठः । प्रायश्चित्तादिनाश्यतावच्छेदकनिर्वचनानुरोधेनाधर्मसिद्धिः । 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनमिति' स्मृतिः । तेन—प्रायश्चित्तादिना । विधातुं शक्यत इति । इदं च कामतो ब्रह्महननादिविषयकं बोध्यम् । 'कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' इतिस्मरणात् । 'यो ह्यजानन्नपि ब्राह्मणं हन्यात् सुरां वा पिबेत्सोपि मन्ये पतितः स्या'दिति महाभाष्यकारस्त्वकामतो ब्राह्मणवधे निष्कृत्यभावमाह । तस्य—ब्रह्महननादेः, पूर्वमेव—प्रायश्चित्तादितः पूर्वमेव, ईश्वरस्य—परमात्मनः । धर्माधर्माभावादिति ।

तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः ।
कर्मात्मा पुरुषो योऽसौ मोक्षबंधैः स युज्यते ॥

निर्गुणो—गुणाभिमानशून्यः । गीतायां गुणाभिमानशून्यतयैव गुणातीतत्ववचनात् । ईश्वरजीवयोरिच्छादिगुणसाम्येऽपि तदनभिमानाभिमानाभ्यामेव निर्गुणत्वसगुणत्वसिद्धेश्च । यद्वा कार्येण कारणानुमानात्कार्यं हि सुखदुःखादिकं तच्च नास्त्येवेश्वरे तस्य सुखदुःखाद्यननुषङ्गित्वश्रुतेः । 'अनश्नन्नन्योऽभिचाकशीति' इति श्रुत्यापि जीवभोग्यसुखदुःखादिभोक्तृत्वस्येश्वरे प्रतिषिद्धत्वाच्च ॥ १६३ ॥



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इमौ—धर्माधर्मौ । वासनेति । अतो ज्ञानिना कृते अपि सुकृतदुष्कृतकर्मणी न फलायालमिति भावः । ज्ञानादपीति । अपिना भोगपरिग्रहः । ननु तत्त्वज्ञानस्य कथं धर्माधर्मनाशकत्वम् ? 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति वचनविरोधात्, इत्थं च तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेन्न । तत्र भोगस्य वेदबोधितनाशकोपलक्षकत्वात्, कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः । तदुक्तम्——'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ॥

विवृतिः ।

वासनेतीति । वासना—संस्कारः, स च पुरुष एव नेश्वरे ।

क्लेशकर्मविपाकाद्यैर्वासनाभिस्तथैव च ।
अपरामृष्टमेवाह पुरुषं ह्मीश्वरं श्रुतिः ॥

इति योगियाज्ञवल्क्यादिभिरीश्वरपाधौ संस्कारस्य प्रतिषिद्धत्वात् । ज्ञानिना—तत्त्वज्ञानवता, । सुकृतदुष्कृतकर्मणीति । सुकृतं—पुण्यं, दुष्कृतं—पापं, कर्म प्रत्येकमभिसंबध्यते । फलाय—स्वस्वफलमुत्पादयितुं, नालं—न समर्थे जन्मादिविपाककारणेनेत्यर्थः । अत्र किं मानमिति चेत्—'यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि कर्म न श्लिष्यते' इति श्रुत्या ज्ञानिकृतकर्मणां फलाभावश्रवणमेव गृहाण । न ज्ञानमात्रेण किन्तु भोगेनापि तद्विनाशः शक्यसंभावन इत्याशयेनाह——अपि नेति । तथाच ब्रह्मसूत्रं—भोगेन त्वितरे क्षपयित्वाथ संपद्यते । अस्यार्थः-इतरे पुण्यपापे धर्माधर्मावित्यर्थः । न ज्ञानमात्रेण किन्तु भोगेन क्षपयित्वा नाशयित्वा समाप्येति यावत् । संपद्यते-बंधराहित्येन कैवल्यभाजनं संपद्यते ज्ञानीति शेषः । कश्चित्तु इतरे इति ज्ञानिन इत्यस्य विशेषणमिति बभ्राम । कथमिति विरोधे । विरोधमेव दर्शयति—नाभुक्तमिति । इत्थंच—भोगेनैव कर्मणां नाश्यत्वस्वीकारे च, कायव्यूहेन सकलकर्मक्षयकारित्वं भोगेन तत्त्वज्ञानिनां स्मर्यते—

तत्त्वज्ञानी शरीराणि करोति विकरोति च ।
प्राप्नुयाद्विषयान् कैश्चित्कैश्चिदुग्रं तपश्चरेत् ॥
संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिव ॥

तत्र-नाभुक्तमित्यत्र, भोगस्य-भोगपदस्य । अन्यथेति । भोगपदस्य वे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । इति च ।

ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्याज्ज्ञानेन च सर्वेषां कर्मणां नाशादिति चेन्न । प्रारब्धेतरकर्मणामेव नाशात् । तत्तच्छरीरभोगजनकं हि यत्कर्म तत्प्रारब्धं तदभिप्रायमेव नाभुक्तमिति वचनमिति ।

शब्दं निरूपयति—

शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।

विवृतिः ।

दबोधितनाशकोपलक्षकत्वानङ्गीकार इत्यर्थः । स्मृत्यादयोप्येनमर्थमनुआहयन्तीत्याह-तदुक्तमिति । ज्ञानाग्निरिति । मयूरव्यंसकादिसमासो रूपकं च । पुनः प्ररोहे सति देहान्तरोत्पत्त्या ज्ञानिदेहस्य चरमत्वानुपपत्तिरिति तु नाशंकनीयम्—

वीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा नात्मा कर्मभिर्जायते पुनः ॥

इति स्मृतेः । ज्ञानदग्धैः कर्मरूपर्वीजैर्हेतुभिरात्मा देहे न पुनरुत्पद्यत इत्यर्थः । विविधयोनिहेतुशुभाशुभकर्मसु यत्र रागादिरन्तकाले उद्बुद्धस्तिष्ठति मरणानन्तरं तामेव योनिं जीवः प्राप्नोति नेतरामित्यन्वयव्यतिरेकाभ्यां कर्मवद्रागादिदोषोऽपि विपाकहेतुः । तथाच श्रूयते— 'तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्य' । 'तं विद्या कर्मणी समन्वारभेते पूर्वप्रज्ञा चेति' । एवं च कर्मवद्रागस्यापि भस्मीकरणं ज्ञानाग्निनोह्यमित्यखिलं निर्मलम् । क्षीयन्ते चास्य कर्माणीति । यस्य-जीवस्य, ततश्च मोक्षः । यदाह पञ्चशिखाचार्यः—

आद्यस्तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात् ।
कर्मक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम् ॥ इति ।

सर्वेषां-प्रारब्धसंचितानां । प्रारब्धेतरेति । प्रारब्धातिरिक्तकर्मत्वेन ज्ञाननाश्यतायाः कल्प्यत्वादित्यर्थः । तत्तदिति । नरदेहादीत्यर्थः । तदभिप्रायमेव-प्रारब्धकर्माभिप्रायमेव, न सर्वकर्माभिप्रायमित्येवकारार्थः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।

शब्द इति । नभोवृत्तिराकाशसमवेतः । दूरस्थशब्दस्याग्रहणादाह—श्रोत्रेति ।

ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह—वीचीति । आद्यशब्दस्य बर्हिर्देशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते । तेन चापरस्तद्व्यापकः । एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति ।

कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥

कदम्बेति । आद्यशब्दाद्दशदिक्षु दश शब्दा उत्पद्यन्ते । तैश्चान्ये दश शब्दा उत्पद्यन्त इति भावः । अस्मिन्मते गौरवादुक्तं कस्यचिन्मत इति ॥ १६४ ॥ १६५ ॥ १६६ ॥

ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसंगतमत आह——

उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।

विवृतिः ।

केचित्पृथिव्यादिपञ्चके शब्दमिच्छन्ति केचित्पुनः पृथिव्यामेव शब्दमिच्छन्ति तन्मतं निराचिकीर्षुराह नभोवृत्तिरिति । अस्यैव च विवरणमाकाशसमवेत इति ।

श्रोत्रे-श्रोत्रदेशे, मृदङ्गादीत्यादिना भेरीवेणुवीणादेः परिग्रहः । अन्यो-द्वितीयः । तस्माद्य चरमशब्दपर्यन्तं शब्दजः । श्रोत्रोत्पन्नः-श्रोत्रावच्छेदेनोत्पन्नः ।

अस्मिन्मते-कदम्बगोलकन्यायेन शब्दजशब्दाङ्गीकर्तृमते । गौरवादिति । अनेकशब्दतत्प्रागभावादिकल्पनागौरवादित्यर्थः । लाघवानुसंधानपरेण ग्रन्थकारेणात्र मते न स्वरसः प्रकाशित इति भावः ॥ १६४ ॥ २६५ ॥ १६६ ॥

नन्विति । शाब्दिकानामुट्टंकनम् । तेषामयमाशयः । प्रत्येकवर्णादर्थप्रतीतिर्न भवति युगपन्मेलनस्याप्यसंभवोऽ—तस्तैर्वर्णैर्व्यंग्यः स्फोटाख्यः शब्दो व्यज्यते नोत्पद्यते स नित्यः । शब्दा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection..

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



उत्पन्न इति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ।

ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम् , इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह—

सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥

सोऽयं क इति । साजात्यमिति । तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः—उक्तप्रतीतिविरोधात् । इत्थं च द्वयोरपि प्रतीत्योरभ्रमत्वमिति ॥ १६७ ॥

ननु सजातीये सोऽयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह—

विवृतिः ।

नामुत्पादविनाशप्रत्ययेति । भेरीदण्डसंगादिभ्यः प्रादुर्भवतः शब्दस्य प्रतीतिरप्रत्यूहैव दृश्यते एवं विनशतोऽपि ।

नन्विति । जैमिनीयादिमतमेतत् । प्रत्यभिज्ञानात्—निर्बाधप्रत्ययात् , भ्रमरूपा अर्थाच्छब्दानामिति । तत्सजातीयत्वं विषय इति । यद्यपि पुरोवर्तिनि पूर्वदृष्टस्याभेदावगाहिज्ञानं प्रत्यभिज्ञालक्षणमुक्तमाचार्यैस्तथापि तत्सजातीयत्वमर्थोऽपि कल्पयितुं शक्यतेऽभेदशब्दस्य शास्त्रबलात् तच्च ज्ञानं सोयऽमिति । संस्कारेन्द्रियसंनिकर्षाभ्यां च जन्यते तत्र तत्तांशे संस्कार इदन्तांशे इन्द्रियसंनिकर्षो हेतुरिति भावः । तत्सजातीयत्वं ककारादिसजातीयत्वम् । तद्व्यक्त्यभेदः—ककारादिव्यक्त्यभेदः । उक्तप्रतीतिविरोधादिति । उक्तप्रतीतिः शब्दानामुत्पादविनाशशालिप्रत्ययस्तद्विरोधादित्यर्थः । इत्थं च-सोऽयं क इति प्रत्यभिज्ञायाः सजातीयविषयताङ्गीकारे च । द्वयोरपीति । उत्पादप्रतीतिप्रत्यभिज्ञानयोरित्यर्थः । अभ्रमत्वं—भ्रमरूपाभावत्वम् ॥ १६७ ॥

नन्वितिशंका । सजातीये—समानजातीये सदृशें इति यावत् । 'सदृक्सदृशसंवादिसजातीयानुवादिन' इति दण्डी । यदौषधमित्यादि उत्तरन् । तदेवौषधमिति प्रत्यभिज्ञानवत्ककारादिप्रत्यभिज्ञानस्यापि साजात्यावगाहित्वमिति भावः । इत्यादीत्यादिना यैव गाथा मे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥ १६८ ॥

इति श्रीविश्वनाथपञ्चाननकृता कारिकावली समाप्ता ॥

---

नादिति । यदौषधं मया कृतं तदौषधमन्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६८ ॥

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्यसुतश्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां न्यायसिद्धान्तमुक्तावल्यां गुणनिरूपणम् ।

॥ समाप्तश्चायं ग्रन्थः ॥

---

विवृतिः ।

त्रेणोच्चारिता तामेवायमुच्चरति यदेव वाक्यं त्वया पूर्वमुक्तं तदेवेदानीमपि ब्रूषे इत्यादेः संग्रहः ॥

मूले सम्प्रत्युपसंहारेण स्वमतं निर्णयति तस्मादनित्या इति । तथा चोक्तम्—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ ६८ ॥

इतिश्रीविश्वनाथेति । श्रीमांश्चासौ विश्वनाथ इति गन्धद्विप इव समासः । आत्मनामेत्यादिनिषेधात्स्वयं स्वनामोल्लेखोऽयुक्त इति न शंक्यम् । तन्निषेधे उच्चारणार्थस्य ग्रहेरुपादानेन तस्योच्चारणविषयकत्वेऽपि लेखने दोषप्रतिपादकत्वाभावात् । अतएव सर्वशास्त्रे 'इति श्रीवात्स्यायनकृतौ' इतिश्रीमदुदयनकृतौ' इत्यादि तत्रतत्राभियुक्तानां ग्रन्थकृतालेखनं शैली पारे शीलितं कक्ष्यते । एवमेव 'विश्वनाथकृतिना सिद्धान्तमुक्तावली' 'व्यातेने किरणावलीमुदयन' इत्यादिकं बोध्यम् ॥

गुणनिरूपणमिति । न्यायशास्त्राभिमतानां गुणानां निरूपणं समाप्तमित्यर्थः । तेनेतरशास्त्रीयगुणानिरूपणेऽपि न क्षतिः । क्वचिदितरनिरूपणं तु प्रासङ्गिकमिति शम् ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.